ओ३म्

# पाणिनीयाष्टकम्

## [ पूर्वार्द्धम् ]

पण्डितवर श्रीयुतगङ्गादत्त शास्त्रिभिः ( तुरीयाश्रमे स्वामिशुद्धबोध-तीर्थनाम्ना प्रसिद्धैः ) निर्मितया तत्त्वप्रकाशिकया व्याख्यया सनाथीकृतम् ।



भाद्रपदः २००६ वैक्रमाब्दाः

मुद्रक- गुरुकुल मुद्रणालय, गुरुकुल कांगड़ी ।
प्रकाशक-श्री मुख्याधिष्ठाता, गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार ।

द्वितीयावृत्तिः ५०० प्रतयः ] [ मूल्यम् रुप्यसप्तकम्

ओ३म्

# भूमिका

ऐन्द्रचान्द्र प्रभृतिषु सर्वेष्वपि व्याकरणेषु वैदिकलौकिकोभयविध शब्दसमूहनिर्भ्रमव्युत्पादकं पाणिनीयाष्टकमेव प्राधान्येन वरीवर्तीति विज्ञायतएव शब्दशास्त्रज्ञैः तदेव प्राचीचरन् तत्र तत्र पाठालयादि- संस्थापनादिना श्री २०८ मद्दयानन्द सरस्वती स्वामिनो व्याकरणमर्मज्ञाः "सत्यपि तस्य सर्वोत्कृष्टत्वेऽद्यावधि तदुपरि न चेतस्तोषिणी काचित् संस्कृतपिपठिषूणामुपयोगिनी वृत्तिर्निरमायि, दीक्षित विरचिता वै० सिद्धान्त कौमुदी, आर्षक्रममुल्लङ्घ्य तिष्ठन्ती न श्रद्धास्पदमार्षग्रन्थाध्ययन- श्रद्धालूनां, नापि चाति विस्तरत्वविषमव्याख्यागम्यत्वादिदोषदूषिताकाशिके" त्याशाकलय्य सर्वोपयोगिनीं सूत्रार्थवृत्तिं श्रीमन्महात्मवर मुन्शीराम समादिष्टा अस्माकं नव्यप्राच्योभयविधव्याकृतिप्रक्रियाविदो व्याकरण- गुरवः श्री ६ गङ्गादत्त शास्त्रिणो व्यरचन् । महाभाष्यानुसारिणी सुपवृत्ति चोपयुक्तस्थले । यद्यपीयं न तेषां स्वरूपानुरूपेति विदन्ति तेषां संस्तुतास्तथाप्येषाऽध्यापकानां पठनानुकूल्यं विधास्यतीति निश्च योऽस्माकम् ।

वर्त्तमान यन्त्रालय,
संशोधकः ।

॥ ओ३म् ॥

# परमात्मने नमः

## अथ शब्दानुशासनम् ।



शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ।

अइउण् ॥ १ ॥ ऋऌक् ॥ २ ॥ एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ हयवरट् ॥ ५ ॥ लण् ॥ ६ ॥ ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ घढधष् ॥ ९ ॥ जबगडदश् ॥ १० ॥ खफछठथचटतव् ॥ ११ ॥ कपय् ॥ १२ ॥ शषसर् ॥ १३ ॥ हल् ॥ १४ ॥

वर्णानामुपदेशो (१) वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च । वृत्तिसमवायोऽनुबन्धकरणं च प्रत्याहारार्थं प्रत्याहारो वृत्त्यर्थः 'भा०'

णकारस्य द्विरनुबन्धकरणं (२) (व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति) परिभाषाज्ञापनार्थं तेन अणुदित्सवर्णस्येत्येतं विहायाणपूर्वेण, इणतु सर्वत्रपरेणैवेति बोध्यम् । फलन्तु 'औतोम्शसो' रित्यत्रआ ओतइति छेदो व्याख्यानादेव) हकारादिष्वकार उच्चारणार्थः । तेन तद्विशिष्टानां प्रत्याहारेषु ग्रहणन्न । तत्फलन्तु देवो हिनस्ती

---

(१) वृत्तिः लाघवेन शास्त्रप्रवृत्तिः तदर्थः समवायः वर्णानामानुपूर्व्येण सन्निवेशः त च अनुबन्धकरणञ्च आदिरन्त्येनेत्यनेनैकवाक्यतया प्रत्याहारार्थः । (आदिरकारादिन्त्येनेता णकारादिना सहोच्चार्यमाणः (अणादिः) आद्यन्ताद्विमानां संज्ञा स्वस्य चेति) त्याहारो वृत्यर्थः अतः फलितं लाघवेन शास्त्रप्रवृत्त्यर्थौं वर्णानामानुपूर्व्येण सन्निवेश इति

(२) विशेषस्य प्रत्तिपतिः (ज्ञानम्) शिष्टकृताद् व्याख्यानादेव बोध्या यतः सन्देहात् क्षणं शास्त्रमलक्षणमननुष्ठापकं लक्षणं नेति । शास्त्रस्यनिर्णयजनकत्वौचित्यादित्यर्थः ।

त्यादावुत्वसिद्धिः । हकारस्य द्विरुपदेशोऽडादि झलादि प्रत्याहारेषु हकारग्रहणार्थः । तत्फलम् मह्यं हि सः (१) अदाग्धामित्यादि ॥

## वृद्धिरादैच् ॥ १ ॥

आकारो द्विमात्रि (२) कौ ऐचौ च वृद्धिसंज्ञाः स्युः । संज्ञाप्रदेशाः वृद्धिरेचीत्येवमादयस्तेषा (३) मुदाहरणान्येवास्योदाहरणानि । तवैडका । तवौदनः । ममैश्वर्यम् । देवौत्कण्ठ्यम् । प्रार्छति ।

## अदेङ् गुणः ॥ २ ॥

तपरकरणमु (४) भयार्थम् । अदेङां गुणसंज्ञास्यात् । गुण प्रदेशा आद्गुण इत्येवमादयः । तवर्द्धिः । तवेदम् । तवोदकम् ।

(५)

## इको गुणवृद्धी ॥ ३ ॥

यत्र ब्रूयाद् गुणो भवति वृद्धिर्भवतीति तत्रेक इति षष्ठ्यन्तमुपस्थितं बोध्यम् । तदुपस्थितौ विशेष्यविशेषणभावे कामचारस्तेन सार्वधातुकार्द्धधातुकयोरित्यादौ इकाङ्गं विशेष्यते । मृजेर्वृद्धिरित्यादौ तु अङ्गेनेक् । चेता । स्तोता । तर्ता । अचैषीत् । अस्तौषीत् । अतारीत् ।

---

(१) आतोऽटनित्यमिति रुर्न स्यात (पूर्वत्राभावे) झलो झलीति सलोपो न स्यात् (परत्राभावे)।

(२) तात्परस्तपर इति तत्पुरुषाश्रयणात् ।

(३) संज्ञासूत्राणां परिभाषासूत्राणाँ च विध्येकवाक्यतयैव नियमात् । निषेध सूत्राणामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति निषेधसूत्रेष्वपि बोध्यमिति परिभाषासादृश्याद्वा परिभाषात्वेन व्यवहारः ( एवं सर्वत्र ) ।

(४) बहुव्रीह्याश्रयणात्पूर्वार्थे तत्पुरुषाश्रयणात्परार्थे च ।

(५) गुणवृद्धिविधौ सर्वत्र स्थाननिर्देशात् खण्डितैषा । तच्च तत्र २ व्याख्यास्यामः ।

स्वसंज्ञया विधाने नियमादिह न । द्यौः । पन्थाः । सः । इमम् । इकः किम् । उम्भिता ।

## न धातुलोप आर्धधातुके ॥ ४ ॥

धात्ववयवलोपनिमित्तके आर्धधातुके परत इको गुणवृद्धी न स्याताम् । लोलुवः ( १ ) । मरीमृजः । धातुग्रहणं किम् । लविता । आर्धधातुके किम् । त्रिधा बद्धो वृषभो रोरवीति ।

## क्ङिति च ॥ ५ ॥

गित् कित् ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्याताम् । जिष्णुः चितः । चिनुतः । निमित्तग्रहणं किम् ? भिन्नः । (मृजेरजादौ संक्रमे (२) विभाषा वृद्धिरिष्यते ) परिमृजन्ति । परिमाजन्ति । ( अपर्याप्तश्चैव हि यासुट्, समुदायस्य ङित्वे ङितं चैनं करोति तस्यैतत् प्रयोजनम् ङितो यत्कार्यं तद्यथा स्यान्ङिति यत्कार्यं तन्माभूत् ॥ भाष्यम् । तेन अचिनवमित्यादौ लकारवृत्तिङित्वं स्थानिवद्भावेन आदेशेष्वाश्रित्य गुणनिषेधो न ) ।

(३)

## दीधीवेवीटाम् ॥ ६ ॥

दीधीवेव्योरिटश्च गुणवृद्धी न स्याताम् । आदीध्यनम् । आदीध्यकः आवेव्यनम् । आवेव्यकः । अकणिषम् । इहामं प्रति, सिजन्तमङ्गम् ।

---

( १ ) अतोलोपः । यस्य । हलः इति योगविभागेन पूर्वं मकारस्य लोपं कृत्वा ततो यमात्रस्यैव लुगिति अलोपस्य स्थानिवद्भावादेव गुणवृद्धी न स्त इति नार्थोऽनेन ।

( २ ) संक्रमो नाम गुणवृद्धिप्रतिषेधविषयः ।

( ३ ) दीधीवेव्योश्छान्दसत्वात् इडित्यनुवर्तमाने पुनरार्द्धधातुकस्येडिति सूत्रे इड्ग्रहण सामर्थ्यादिडिडेव यथा स्यात् यदन्यत्प्राप्नोति तन्माभूदिति स्वीकृत्य प्रत्याख्यातमेतद्भाष्ये ।

(१)

## हलोऽनन्तराः संयोगः ॥ ७ ॥

अनन्तरा हलः संयोगसंज्ञाः स्युः। संज्ञाप्रदेशाः संयोगान्तस्य लोप इत्यादयः। भवान्। हलइति किम्। तितउच्छत्रम्। अनन्तरा इति किम्। पचति पनसम्।

## मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

मुखोपसहिता नासिका वचनं यस्य सोऽनुनासिक संज्ञः स्यात्। गभीर आँ उग्रपुत्रे। सप्तम्यर्थद्योतकोऽत्राङ्। आङोऽनुनासिके त्यनुनासिकः। मुखेतिकिम्। यमानुस्वाराणामेव (२) माभूत। नासिकेति किम्! शक्तेत्यादावनुदात्तोपदेशेत्यादिना कलोपो माभूत्।

(३)

## तुल्यास्यप्रयत्नं सवर्णम् ॥९॥

तुल्यौ आस्यप्रयत्नौ यस्य यम्प्रति स तम्प्रति सवर्णसंज्ञः स्यात्। संज्ञाप्रदेशा अकःसवर्णे दीर्घ इत्यादयः। दण्डानयनम्। कपीशः। आस्येति किम्। तप्ता। झरोझरीति लोपो माभूत्। प्रयत्नेति किम्। वाक्श्च्योतति तेनैव शलोपो माभूत् ( ऋकारऌकारयोः सवर्ण विधिः )। होतृऌकारः होतृकारः। दीर्घऌकाराभावाद् ऋकारएव॥

---

( १ ) अविद्यमानमन्तरं ( विवरं वर्णशून्यकाल इत्यर्थः ) येषामिति अविद्यमानाः अन्तराः ( मध्येनवर्णाः ) येषामिति वा विग्रहः। आद्ये-अवग्रहे ( एकमात्राकालोऽवग्रहः अप्सु-इत्यादो ) संयोगसंज्ञा न स्यादिति दोषमुद्भाव्य संज्ञायाः फलाभावान्नास्ति दोष इति भाष्ये समाहितम्।

( २ ) तथा सति अभ्रआं इत्यत्रानुस्वारः स्यात्।

( ३ ) आस्ये भवम् आस्यमिति व्युत्पत्या वर्णोत्पत्तियोग्या कण्ठादयो गृह्यन्ते। प्रकृष्टो यत्नः प्रयत्नः इत्याभ्यन्तरो गृह्यते तस्य वर्णोत्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्वात्। अन्यथा बाह्यप्रयत्नसाम्येन प्रयत्नग्रहणेपि वाक्श्च्योततीत्यत्र शलोपः स्यात्।

(१)

## नाज्झलौ ॥१०॥

अज्झलौ मिथः सवर्णसंज्ञौ न स्तः। आनडुहं चर्म। वैपाशो मत्स्यः। उभयत्र हकारशकारयोः 'यस्येति चे' ति लोपो न। दण्डहस्तः, दधि शीतलमित्यादौ सवर्णो दीर्घश्च न।

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥११॥

(२) दूदेदन्तं द्विवचनं प्रगृह्यसंज्ञंस्यात्। कवी एतौ। भानू इमौ। खट्वे अमूइत्यादौ एकादेशस्य परादिवद्भावेन द्विवचनत्व, मींदूदेदन्तत्वञ्च व्यपदेशिवद्भावेन। मणीवोष्ट्रस्येत्यादौ तु इवार्थे वशब्दो वाशब्दो वा बोध्यः।

## अदसो मात् ॥१२॥

अदसो मात्परावीदूतौ प्रगृह्यौ स्तः। अमी ईशाः। अमू आसाते। अमू इति। पूर्वेण तु न सिद्धमुत्वस्यासिद्धत्वात्। अत त्वारम्भसामर्थ्यान्नासिद्धत्वम्। अदसःकिम्। शम्यत्र। (३ मात्किम्। अमूकेऽत्र।

---

(१) अनेनहि अक्षरसमाम्नायस्थयोरेवाज्झलोः परस्परं सवर्णसंज्ञानिषेधः कृतो नतु तद्गृहीतयोः वाक्यापारसमाप्तिन्यायात्; स च वर्णानामुपदेशस्तावत्। उपदेशोत्तर काला इ संज्ञा। इत्संज्ञोत्तरकाल आदन्त्येनेति प्रत्याहारः। प्रत्याहारोत्तरकाला सवर्णसंज्ञा। सवर्णसंज्ञोत्तरकालमणुदित्सवर्णस्येति सवर्णग्रहणमिति एतेन सर्वेण समुदितेनान्यत्र सवर्णानां ग्रहणमिति दीर्घादीनां हला परस्परं सावर्ण्यं स्यादेव। तथा च हकारस्याणत्वास्सवर्णग्राहकत्वापत्तौ सोमगभ्यामित्यादौ होढइति ढत्वापत्तिः। तथा ईकारादीनां शकारादिभिः सावर्ण्यात् गौरीशेतेइत्यादौअकः सवर्ण इति दीर्घापातश्चतत्राजनुवृत्तौ, तद्वारणार्थंदीर्घाद्याकारप्रश्लेषस्तत्रज्ञापकश्चदीर्घविधौअजनुवृत्तिश्चेतिक्लेशं मनसि निधाय पञ्चधाप्रयत्नपरमिदमिति भाष्ये ध्वनितम्। प्रकल्प्य चापवादविषयमुत्सर्गः प्रवर्तते इति वचनात्पूर्वंनाज्झलावित्यस्य वाक्यार्थबोधस्ततस्तुल्यास्येत्यस्य।

(२) पचेते इमौ इत्याद्यर्थन्तदन्तविधिः

(३) अदसो मात् परो न क्वचिदपि एकारः संभवतीत्यतो नानुवर्तते तदननुवृत्तौ तात्पर्यग्राहकमादिति।

## शे ॥ १३ ॥

शे इति प्रगृह्यसंज्ञं स्यात् । अस्मे [१] इन्द्राबृहस्पती । अस्मभ्यमित्यर्थः । लक्षणप्रतिपदोक्तयोरिति परिभाषया काशे कुशे इत्यादौ न ।

( अ )

## निपात एकाजनाङ् ॥ १४ ॥

ङिदा भिन्न एकोऽज्निपातः प्रगृह्यसंज्ञः स्यात् । अ अवद्यम् । ईशः । उ उपेन्द्रः । एकाजितिकर्मधारया ( ३ ) अयणान्नेह । प्रेदं ब्रह्म । ङदावर्जने- नाङित्तु प्रगृह्य एव । आ एवं नु मन्यसे (४) । अनाङ् किम् । अ। उष्णम्, ओष्णम् । आङीषदर्थे ।

## ओत् ॥ १५ ॥

ओदन्तो निपातः प्रगृह्यसंज्ञः स्यात् । आहो इति । उताहो इति ।

## सम्बुद्धौ शाकल्यस्येतावनार्षे ॥ १६ ॥

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्यः अनार्षे इतौ परे । विष्णो इति । विष्णविति । अनार्षे किम् । ब्रह्मबन्धवित्यब्रवीत सम्बुद्धौ किम् ! गवित्ययमाह [क] ।

---

(१) सुपांसुलुगिति चतुर्थीबहुवचनस्य शे । शेषेलोप इति टिलोपः ।

(२) अ निषेधाधिक्षेपयोः । इ विस्मये । उ जुगुप्सासंतापादिषु । (३) व्याहरति मृग इति निर्देशश्चेह मानम् ।

(४) प्रक्रान्तस्य वाक्यस्यान्यथात्वद्योतनाय आकारः; नैवं पूर्वममंस्थाः सम्प्रति त्वेवं मन्यसे, इत्यर्थः । आ एवं किल तत् । स्मरणेऽत्राकारः । वाक्यस्मरणयोरङित् । अन्यत्र ङित् ।

( अ ) स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच् समुदायेऽच् त्वाभावादजित्येवाच् समुदाय ग्रहणाभावे सिद्धे एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणमिति ज्ञापनार्थं तेन "हलन्ताच्चे" त्यत्र हल् ग्रहणस्य जातिपरत्वात् , धीप्सतीत्यादौ कित्वसिद्धिः ।

( क ) अनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वादसति चार्थवत्वे प्रातिपदिकत्वाभावात्सुबुत्पत्तिर्न । अनुकरणत्वन्तु, स्वसदृशशब्दमात्रबोधतात्पर्यकोच्चारणविषयत्वम् । अनुकार्यत्वञ्च स्वसदृशशब्दप्रति- पाद्यत्वे सति शब्दत्वम् ।

(१)

## उञः ॥ १७ ॥

उञ इतौ प्रगृह्यसंज्ञा वा स्यात्। उ इति। विति।

## ऊँ ॥ १८ ॥

उञः स्थाने दीर्घोऽनुनासिकः प्रगृह्यसंज्ञक ऊँ आदेशो वा स्यात् अनार्षे इतौ परतः। ऊँ इति।

## ईदूतौ च सप्तम्यर्थे ॥ १९ ॥

सप्तम्यर्थे वर्तमानमीदूदन्तं प्रगृह्यसंज्ञं स्यात्। सोमो गौरी अधिश्रितः। मामकी इति। तनू इति। त्रिष्वपि सुपांसुलुगिति सप्तम्या लुक्। सप्तमीति किम्। धीतीति अत्र तृतीयायाः पूर्वसवर्णः। अर्थग्रहणं (२) किम्! पूर्वपदस्य माभूत्-वाप्यामश्वः, वाप्यश्वः।

## दाधा घ्वदाप् ॥ २० ॥

दारूपा धारूपाश्च धातवो घुसंज्ञाःस्युः दाप्दैपौ विना। प्रणिददाति। प्रणिदधाति। अदाबिति किम्! दातं(३) बर्हिः। लूनमित्यर्थः

---

(१) उञः ऊँ इति एकमेव सूत्रं( वितीति ) सिद्ध्यर्थं भाष्ये विभक्तम्।

(२)अर्थग्रहणाभावे ईकारोकाररूपा सप्तमी प्रगृह्यसंज्ञिकेत्यर्थस्तु बाधतः ऊकाररूपायाः सप्तम्या अभावात्। जहत्स्वार्थायां समासस्यैवार्थवत्वात्पूर्वोत्तरयोः पदयोः पदेवर्णवदनर्थकत्वमिति सप्तम्यर्थो नास्ति; अजहत्स्वार्थायामपि स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानेपि पांसूदकवत्स्वार्थस्य विवेकेनानवगमात्समुदायार्थो वृत्तौ संसृष्टरूपेणैवाभिधीयते। अर्थग्रहणेन यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा।

(३) दापूलवनेइत्यस्यरूपम् घुत्वाभावाद्दो दद्घोरिति दद्भावो न। लक्षणप्रतिपदोक्तपरिभाषा तु नेह गामादाग्रहणेष्वविशेषइतिवचनात्।

(१)

## आद्यन्तवदेकस्मिन् ॥२१॥

असहाये आदाविवान्त इव कार्य्यं स्यात् । औप (२) गवः । आ-भ्याम् (३) । एकस्मिन् किम् ! सभासन्नयने भवः, साभासन्नयनः ।

(४)

## तरप्तमपौ घः ॥२२॥

तरप्तमपौ घ संज्ञौ स्तः । कुमारितरा । कुमारितमा ।

## बहुगणवतुडति संख्या ॥२३॥

एते संख्यासंज्ञाः स्युः । बहुकृ (५)त्वः । बहुधा(६) गणकृत्वः । गणधा । तावत्कृत्वः । तावद्धा । कतिकृत्वः । कतिधा ।

(७)

## ष्णान्ता षट् ॥२४॥

षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । षट् (८) तिष्ठन्ति । षट् पश्य । पञ्च गच्छन्ति । पञ्च पश्य । ( अध्यर्धग्रहणञ्च समास कन्विध्यर्थम् ) अध्यर्धेन शूर्पेण क्रीतम् अध्यर्धशूर्पम् (९) अध्यर्धकम् ।

---

( १ ) सतित्वन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तोपदिष्टानि कार्याणि न सिद्ध्य-न्तीत्यारभ्यतेऽययोगः । अपूर्वलक्षण आदिः, अनुत्तरलक्षणोऽन्त इति मत्वा खण्डितमपि-वैश्चित् ।

( २ ) आद्युदात्तश्चेति अप्रत्ययस्याद्युदात्तत्वम् । ( ३ ) सुपिचेति दीर्घत्वम् ।

( ४ ) व्याकरणे हि सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते, यत्रास्यैतद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगन्तस्मिंश्चलौकिके प्रयोगे सानुबन्धकानां प्रयो-गो नास्तीति कृत्वा द्वितीयःप्रयोगउपास्यते; कोऽसौ उपदेशोनाम, नचैष उपदेशेतरप शब्द इति कृत्वा नद्यास्तराः नदीतरा इत्यादौ ह्रस्वो न । ( ५ ) सख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसु-जिति कृत्वसुच् ( ६ ) संख्याया विधार्थेधेतिधा । बहुगणयोः संख्यावाचिनोरेव ग्रहणं, नतुसंघवै पुल्यवाचिनोःभूर्यादीनां निवृत्यर्थं संज्ञाकरणम् । वतुडत्योस्तदन्तविधिः केवलयोः संज्ञायाः प्रयोजनाभावात् ।

( ७ ) शतानीत्यादौ सन्निपातपरिभाषयान लुक् ( ८ ) षड्भ्यो लुगितिलुक् ।

( ९ ) तद्धितार्थोत्तरपदस्यचेति समासः संख्यायाअतिशदन्ताया इतिकन् ।

*( अर्धपूर्वपदश्च पूरणप्रत्ययान्तः ) अर्धपञ्चमशूर्पम् । अर्धपञ्चमकम् ( अधिकग्रहणञ्चालुकि समासोत्तरपदवृद्ध्यर्थम् ) अधिकया षष्ट्या क्रीत इति अधिक (१)षाष्टिक । अधिकसाप्ततिकः ।

## डति च॥ २५ ॥

डत्यन्ता संख्या षट्संज्ञा स्यात् । कति सन्ति । कत्यद्राक्षीः । संख्येति किम् ! पातेर्डतिः । पतयः ।

## क्तक्तवतू निष्ठा ॥ २६ ॥

एतौ निष्ठासंज्ञौ स्तः।

कृतः । कृतवान् । अन्योन्याश्रयदोषस्तु नोद्भावनीयः । सूत्रशाटकवद्भाविसंज्ञाविज्ञानात् । भूतकाले (२) तौ भवतो ययोर्जायमानयोर्निष्ठेत्येषा संज्ञा स्यात् ।

(३)

## सर्वादीनि सर्वनामानि । २७॥

सर्वादीनि सर्वनामसंज्ञकानि स्युः । सर्वे । सर्वस्मै । सर्वस्मात् । सर्वेषाम् । सर्वस्मिन् । सर्वादीनीति तद्गुणसंविज्ञानो बहुब्रीहिः । "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" तेन सर्वादिगणकार्यं तदन्तगणकार्यं च तेषां न , सर्वो नाम कश्चित्तस्मै सर्वाय देहि, अतिसर्वाय देहि । अतिकतरम् । अतितत् ।

---

* एतत्सूत्रस्थं वार्तिकत्रयमतः पूर्वसूत्र एव पठितुमुचितमपि प्रमादादत्र लिखितम् ।

( १ ) संख्यायाःसंवत्सरसंख्यस्य चेत्युत्तरपदवृद्धिः ।

( २ ) निष्ठेत्यस्य वाक्यार्थः ।

( ३ ) सर्वनामानीत्यत्र निपातनाण्णत्वाभावः । महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशः । सर्वेषां नामानीति सर्वनामानि संज्ञोपसर्जने च विशेषेऽवतिष्ठेतेऽतो न सर्वनामकार्य्यमिति संज्ञोपसर्जनप्रतिषेधो नापूर्वः । उभशब्दस्तु गणे उभकावित्यकजर्थः । कप्रत्ययेनेष्टं संसाध्य प्रत्याख्यातश्च स्वार्थिकाःप्रत्ययाःप्रकृतितोऽविशिष्टा भवन्ति । प्रकृतिग्रहणेन गृह्यन्ते । इत्युभशब्दग्राहकेण द्विवचनशब्देन कशब्दस्यापि ग्रहणादयच् प्रसङ्गो न ।

## विभाषा दिक्समासे बहुब्रीहौ ॥ २८ ॥

दिगुपदिष्टे समासे बहुब्रीहौ सर्वादीनि सर्वनामसंज्ञानि वा स्युः। उत्तरपूर्वस्यै । उत्तरपूर्वायै । प्रतिपदोक्तदिक्समासग्रहणान्नेह । या पूर्वा सैवोत्तरा यस्य आन्तस्य तस्मै पूर्वोत्तराय, एवञ्च बहुब्रीहि ग्रहणमपि न कार्य्यम् ।

## न बहुब्रीहौ ॥ २९ ॥

बहुब्रीहौ कर्त्तव्ये सर्वनामसंज्ञा न स्यात् । त्वकं पिता अस्य सः त्वत्कपितृकः अत्र बहुब्रीह्यर्थेऽलौकिकप्रक्रियावाक्ये सर्वनाम संज्ञा निषेधप्रवृत्तौ सर्वनामत्वाभावादकच् न, भाष्ये त्वन्तरङ्गत्वादकच् स्वरौ तु स्यातामेवों खण्डितमिति त्वकत्पितृकइत्येव, प्रियविश्वाये-त्यादिषु उपसर्जनत्वादेव निषेधः। बहुब्रीहावित्यनुवर्त्तमाने पुनर्बहुब्री-हिग्रहणादवयवभूतबहुब्रीहेः प्रतिषेधः । तेनवस्त्रान्तरवसनान्तरा इत्यत्र विकल्पो न।

## (१)
## तृतीयासमासे ॥ ३० ॥

तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न स्युः। मासपूर्वाय। लक्षणप्रतिपदोक्तपरिभाषया पूर्वसदृशेति समासस्यग्रहणात्, त्वय-का कृतम्,। त्वकत्कृतमित्यादौ निषेधो न, तृतीयासमासार्थवाक्येऽपि निषेधार्थं पुनःसमासग्रहणम्, तेन मासेन पूर्वायेत्यपि सिद्धम् ।

## द्वन्द्वे च ॥ ३१ ॥

द्वन्द्वे सर्वनामसंज्ञा न स्यात् । पूर्वापराधराणाम् । तदन्तविधिना प्राप्तस्य समुदायस्यायं निषेधः ।

---

(१) भाष्ये योगविभागो दर्शितः 'तृतीया' पूर्वसूत्रात्समासे इत्यनुवर्त्य उक्तोऽर्थःसम्पन्नः। ततोऽसमासे, तृतीयाया असमासेपि सर्वनामता नेत्यर्थः ।

## विभाषा जसि ॥ ३२ ॥

द्वन्द्वे सर्वनामसंज्ञा वा स्याज्जसि । वर्णाश्रमेतरे । वर्णाश्रमेतराः । जसःकार्यं प्रति विभाषा, तेनाकच् न । किन्तु क एव--वर्णाश्रमेतरकाः ।

## प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३३ ॥

प्रथमादयः जसः कार्यं प्रति वा सर्वनामसंज्ञाः स्युः । प्रथमे । प्रथमाः । चरमे । चरमाः । द्वितये । ( ३ ) द्वितयाः । अल्पे । अल्पाः । अर्द्धे । अर्द्धाः । कतिपये । कतिपयाः । नेमे । नेमाः । जसः कार्यम्प्रति विभाषेति स्वीकारादकजून, प्रथमकाः । शब्दान्तरत्वाच्छीभावो न ।

## पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३४॥

व्यवस्थायामसंज्ञायां पूर्वादीनि जसः कार्यम्प्रति विभाषा सर्वनामसंज्ञानि स्युः । पूर्वे । पूर्वाः इत्यादि । स्वाभि ( ४ ) धेयापेक्षावधिनियमो व्यवस्था । व्यवस्थायां किम् । उत्तरे, प्रत्युत्तरे कुशलः । असंज्ञायां किम् । उत्तराः ( ५ ) कुरवः

---

( १ ) द्वन्द्वे चेतिनिषेधात् जसइर्जसीति व्याख्यानादिकारेण ईकारग्रहणात् जसः कार्यं शीभावाख्यं गृह्यते ।

( २ ) उभयत्रविभाषेयम् । प्रथमादीनामप्राप्तेः, नेमस्य च प्राप्तेः ।

( ३ ) तयप्प्रत्ययस्तेन तदन्तविधिः केवलस्य संज्ञायाः प्रयोजनाभावात् ।

( ४ ) स्वत्य पूर्वादिशब्दस्याभिधेयो दिगदेशकालरुपोऽर्थः । तदपेक्षमाणो योऽवधिः मर्यादा तस्य नियम इत्यर्थः ।

( ५ ) सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, आधुनिकसङ्केतो हि संज्ञा न सा दिक्ष्वस्तीति अस्तातिप्रकरणे कैयटः । दिक्षु चिरन्तनः संकेतः । कुरुषु आ निक इत्यत्र यवख्यातृवचनमेव प्रमाणम् ।

## स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

अज्ञातिधनाख्यायां स्वशब्दो जसः कार्य्यम्प्रति वा सर्वनाम संज्ञःस्यात् । स्वे । स्वाः । आत्मीया आत्मानइति वा । आख्याग्रहणादिह न निषेधः । स्वे पुत्राः । स्वाः पुत्राः । आत्मीया इत्यर्थ । अज्ञातीत्यादि किम् । स्वाः ज्ञातयोऽर्था वा ।

(१)

## अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥

बहिर्योगोपसंव्यानयोरन्तरशब्दो जसः कार्यम्प्रति वा सर्वनाम संज्ञः स्यात् । अन्तरे, अन्तरा वा गृहाः । अन्तरे अन्तराः वा शाटकाः परिधानीया इत्यर्थः । (अपुरीति वक्तव्यम् ) अन्तरायां पुरि वसति । (वा प्रकरणे तीयस्य ङि( २ )त्सूपसंख्यानम् ) द्वितीयस्मै । द्वितीयायेत्यादि ।

(३)

## स्वरादिनिपातमव्ययम् ॥ ३७ ॥

स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः । अन्वर्थसंज्ञया तदन्तविधेर्ज्ञापनात् परमोच्चैरित्यादौ तत्प्राधान्येऽव्ययत्वम् अप्राधान्येतु न, अत्युच्चैसौ ।

---

( बहिरित्यनावृतो देशो बाह्यश्चोच्यते तेन योगः संबन्धः । तत्राद्ये । नगरबाह्याश्चाण्डालादिगृहाः । द्वितीयेतु नगराभ्यन्तर इत्यर्थः ; उपसंव्यानशब्दः उपसंवीयते ( आच्छाद्यते ) अनेनेति करणव्युत्पत्त्या उत्तरीयपरः उपसंवीयतेयदिति कर्मव्युत्पत्त्या अन्तरीयपर इत्युभयत्रापि बहिर्योगशब्देन गतार्थत्वादुपसंव्यानग्रहणं न कार्य्यं, शाटकत्रये चतुष्टयेपि वा गौणवृत्त्या परम्परया बहिर्योगोस्त्येवेति भाष्यतात्पर्यमिति ।

( २ ) एतदारम्भाद् विभाषा द्वितीयातृतीयाभ्यामिति योगो न कार्यः ।

( ३ ) यदि स्वरादयोऽपि चादिषु पठ्येरन् तर्हि सत्त्ववचनानां न स्यात् । स्वः पश्येत्यादौ । नन्वव्ययनिपातयोरन्यतरा संज्ञा स्यादिति चेत्, आद्ये अव्ययेनञ् कुनिपातानामित्यत्र बहुपठितव्यं स्यात् अन्त्ये क्व इव क्वेवेत्यत्रनिपातएकाजिति, प्रगृह्यसंज्ञा स्यात्

## तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥

यस्माद्वचनत्रयात्मिका विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययसंज्ञःस्यात्। ततः। तत्र। तद्धितःकिम्। एकः। द्वौ। बहवः। असर्वविभक्तिरिति किम्। औपगवः पचतिकल्पमित्यादावतिव्याप्तिवारणन्तु पाठात्। तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। मान्तः। कृत्वोर्थः। तसिवती। नानाञाविति।

## कृन्मेजन्तः ॥ ३९ ॥

कृद्यो मान्त एजन्तश्च (१) तदन्तमव्ययसंज्ञं स्यात्। स्वादुङ्कारं भुङ्क्ते। वक्षे रायः।

## क्त्वातोसुन्कसुनः ॥ ४० ॥

क्त्वान्तस्तोसुनन्तःकसुनन्तश्चाव्ययसंज्ञःस्यात्। भुक्त्वा। पुरावत्सानामपाकर्त्तोः। पुरा क्रूरस्य विसृपो विरप्शिन्।

## अव्ययीभावश्च ॥ ४१ ॥

अव्ययीभावोऽव्ययसंज्ञः स्यात्। अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचाराः प्रयोजनम्। उपाग्नि ( २ )। उपाग्निमुखः ( ३ )। उपपयः ( ४ ) कारः।

---

( १ ) आधये चिकीर्षवे, इत्यादो व्यपदेशिवद्भावेन कृतएजन्तत्वेपि तदन्तस्य नाव्ययत्वं सन्निपातपरिभाषाविरोधात्। कारयाञ्चकारेत्यादौ तु 'आमः' इत्येव लुक् तत्र लेर्निवृत्तेः।

( २ ) 'अव्ययादाप्सुपः' इति लुक्। ( ३ ) मुखं स्वाङ्गमिति प्राप्ते, नाव्ययदिगिति निषिध्यते ततः पूर्वपदप्रकृतिस्वरो भवति।

( ४ ) विसर्जनीयस्थानिकस्य सकारस्य उपचारसंज्ञा। अतः उपययःकार इत्यत्र अतःकृकमीति प्राप्तौ अनव्ययस्येति निषेधः सिद्धो भवति। प्रयोजनत्वन्त्वनयोर्मशकार्थो धूम इति वद् बोध्यम्।

## शि सर्वनामस्थानम् ॥ ४२ ॥

शि सर्वनामस्थानसंज्ञं स्यात्। ज्ञानानि। वारीणि।

## सुडनपुंसकस्य ॥ ४३ ॥

नपुंसकभिन्नस्य स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युः। राजा। राजानौ। राजान इत्यादयः। अत्र नपुंसकस्येति पर्युदासान्नपुंसकसदृशे पुंसि स्त्रियां चास्य प्रवृत्तिः। नपुंसके नास्य व्यापारस्तेन वनानीत्यत्र पूर्वेण भवत्येव संज्ञा।

(१)

## न वेति विभाषा ॥ ४४ ॥

निषेधविकल्पयोर्विभाषा संज्ञा स्यात्। प्राप्ताप्राप्तविभाषास्वस्योपयोगः। विभाषा श्वेरिति यथा। शुशाव। शिश्वाय। शुशुवतुः। शिश्वियतुः।

(२)

## इग्यणः सम्प्रसारणम् ॥ ४५ ॥

यणःस्थाने य इक् स सम्प्रसारणसंज्ञः स्यात्। विधिप्रदेशेषु भाविसंज्ञाश्रयणान्नान्योन्याश्रयः। इष्टः। उप्तम्।

(३)

## आद्यन्तौ टकितौ ॥ ४६ ॥

स्थानेयोगेत्यस्यापवादः। टित्कितौ यस्योक्तौ तस्याद्यन्तावयवौ स्तः। भविता। यापयति।

---

(१) अर्थस्येयं संज्ञा इतिकरणात्; ह्रक्रोरन्यतरस्यामित्यादौ इममेवार्थमन्यैश्शब्दैर्द्योतयन्नाचार्यो नास्योपयोग इति दर्शयति।

(२) अदुहितरामित्यादौ लस्थानिकेकारस्य तु न संज्ञा सूत्रे यथासंख्यविज्ञानात्। विधौ परिभाषोपतिष्ठते, नानुवादे इति कथं स्थाने इतीतिचेन्न। स्थाने इत्यस्यापकर्षणात्।

(३) टकिताविति कर्मधारयमाश्रित्य संज्ञाविधायकत्वमप्यस्य निर्धारितम्। एवञ्च आर्द्धधातुकस्येड्वलादेरित्यादौ वलादेरार्द्धधातुकस्य आद्यवयव इर्भवति, अर्त्यादीनामन्त्यावयवः पकारो भवतित्याद्यर्थः।

(१)
## मिदचोऽन्त्यात्परः ॥ ४७ ॥

स्थानेयोगेत्यस्य प्रत्ययपरत्वस्य चापवादः। अचां मध्ये योऽन्त्योऽच् तस्मात्परो मित्स्यात्। यशांसि। रुणद्धि। (अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्ग-संयोगादिलोपार्थम्) मग्नः। मग्नवान्। उपध भूतस्य नस्यानुषङ्गसंज्ञा।

(२)
## एच इग्घ्रस्वादेशे ॥ ४८ ॥

ह्रस्वादेशे कर्तव्ये एच इगेव स्यात्। हे 'शब्द' मतिक्रान्तम्, अतिहि कुलम् अतिशु। अतिरि। अतिनु।

## षष्ठी स्थानेयोगा ॥ ४९ ॥

अनिश्चितसम्बन्धविशेषा षठी स्थाने योगा बोध्या। अस्तेर्भूः। बभूव, इत्यादयः। नन्वस्तेर्भूरित्यादावनेकसम्बन्धप्रसङ्गेऽपिलक्ष्यानुरोधादन्तरङ्ग-गत्वात्स्थानिवदादेश इति लिङ्गाच्च स्थानेयोगतैव व्याख्यास्यते इति व्यर्थमिद-मिति चेन्न षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते नतु प्रतीयमानमित्यर्थक-सुपदइत्यादिसिद्धयर्थत्वात्।

## स्थानेन्तरतमः ॥ ५० ॥

यत्र स्थाने षष्ठी तत्र सदृशतम आदेशः स्यात्। स्थाने इत्यनुवर्तमाने पुनःस्थानग्रहणं सति सम्भवे स्थानतएवान्तर्यं ग्राह्य(३) मिति

---

(१) तृणह इमिति निर्देशात्पुरस्तादपवादेति न। पूर्वसूत्रादन्त इत्यनुवर्तते ते न पूर्वान्तावयवो नुम् विज्ञायते; तत्फलं वहंलिह इत्यादावनुस्वारादिसिद्धिः। दोषोद्धारस्तु अन्तरङ्गपरिभाषया, समुदायभक्तोसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति वा कार्य्यं निर्दिश्यमानस्यादेशा भवन्तीति तात्पर्य्यार्थः।

(२) एचः सन्ध्यक्षरत्वात् ह्रस्वशासने अकार इकारोकारौ च प्राप्ताः। मा कदाचिदकारोऽभूदेतदर्थोऽयं योगः। एङः सस्थानत्वात् (समस्थानत्वात्) ऐचोश्चोत्तरभूयस्त्वाद् भूयसा व्यपदेशो भवति मल्लग्रामवदिति प्रत्याख्यातो भाष्ये।

(३) तेन चेतेत्यादौ स्थानत आन्तर्यादेकार एव, प्रमाणत आन्तर्यादकारो न।

बोधनार्थम्। स्थानार्थगुणप्रमाणकृतमिति चतुर्विधमान्तर्यन्तमपा बोध्यते। दध्यत्र। (१) क्रोष्टा। (२) वाग्घरिः। (३) अमुम्। अमू।

## उरण् रपरः ॥ ५१ ॥

ऋवर्णस्य स्थाने योऽण् स प्रसज्यमान एव रपरः स्यात्। कर्तारौ कर्तारः। तवल्कार इत्यादौ लपरत्वं [ लपर इतिवक्ष्यामीति ] भाष्योक्तेः। अण् किम्! सौधातकिः [४]।

## अलोऽन्त्यस्य ॥ ५२ ॥ (५)

यत्र स्थाने षष्ठी तत्रान्त्यस्यालः कार्य्यं स्यात्। जयति। स्तौति।

## ङिच्च॥ ५३ ॥

ङिदनेकालप्यन्त्यस्यालः स्यात्। तातङि ङित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधात्सर्वादेशः। ननु प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् कुतो नु खल्वेतत्, ङित्करणं गुणवृद्धिप्रतिषेधार्थं नान्त्यादेशार्थमितिचेत्! 'लोट एरु, रिति प्रकरणं विहाय सप्तमे तातङि ङित्करणमेव ज्ञापकम् "न तातङन्त्यस्य भवतीति" अन्यथा तत्रैव तिह्योस्तादाशिष्यन्तरस्यामित्येव ब्रूयात् ॥

---

[ १ ] अर्थत आन्तर्य्यात् क्रोष्टुशब्दस्य क्रोष्टृ।
[ २ ] गुणतआन्तर्य्यात् हकारस्य घकारः।

[ ३ ] प्रमाणत आन्तर्य्यात् ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः।

[ ४ ] सुधातुरकङ्चेत्यकङ् न रपरोऽनण्त्वात्। ननु तवर्द्धिरित्यादौ 'एकः पूर्वपरयो रिति वचनादुभयोः स्थानिता न तु ऋकारस्यैत तत्र कथं रपरत्वमिति चेन्न। यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति लभतेऽसावन्यतरतो व्यपदेशम्, तद्यथा—देवदत्तस्य पुत्रो, देवदत्तायाः पुत्र इति। रपरइति षष्ठ्यर्थे बहुव्रीहिस्तेन रः परो ( अन्तावयवो ) यस्य स इत्यन्तावयवत्वं लभ्यते। तत्फलम्, गीः पूरित्यादौ र्वोरुपधाया इति दीर्घसिद्धिः।

[ ५ ] अलइति अन्त्यविशेषणं, तेन पदस्येति विधीयमानंवसुस्रंस्विति दत्वं स्वनडुद्भ्यामित्यादावन्त्यस्य पदस्य न भवति। स्थानेत्यादिकिम्। इट् तृच ऋकारात्पूर्वो मा भूदिति। स्थानषष्ठयस्या लिङ्गम्, द्विविधोऽत्र नियमः। अलएवान्त्यस्यैवेत्यन्यत्र द्रष्टव्यम्।

## आदेः परस्य ॥५४॥

यत्र दिग्योगलक्षणपञ्चम्यादेशस्तत्र परस्यादेरलः स्थाने स्यात्। अलोऽन्त्यस्येत्यस्यापवादः। (१) आसीनः।

## अनेकाल्शित्सर्वस्य ॥५५॥

अनेकाल् शिच्चादेशः सर्वस्य स्यात्। वध्यात्। इतः। शिद्ग्रहणेनानुबन्धानामनेकान्तत्वं ज्ञाप्यते। तेनअण्कयोरनुबन्धकृद्विशेषेऽपि नासारूप्यम्।

## स्थानिवदादेशोऽनल्विधौ ॥५६॥

आदेशः स्थानिवृत्तिधर्मवान् स्यात, न तु स्थान्यलाश्रयविधौ। आवधिषीष्ट। वत्करणंकिम्। स्थानी आदेशस्य संज्ञा मा विज्ञायीति(२)। आदेशग्रहणमादेशमात्रं स्थानिवद्यथास्यात्। तत्फलन्तु पच(३)-तु इत्यत्र पदत्वम्। अनल्विधौकिम्। द्यौः(४)। द्युःकामः। क इष्टः। महोर-

---

(१) अनेकाल्शित् सर्वस्येति तु परत्वादस्यापवादस्तेन घटैरित्यादौ सर्वादेशसिद्धिः। अतएव ङिच्चेवानेकालिति नियमेन न गतार्थतेति।

(२) ततश्चाङोयम हन इत्यत्र वधेरेवात्मनेपदं स्यात् हन्ते र्न स्यात्।

(३) अत्र सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेरित्यनेन एरुरित्यादौ इकारान्तस्य स्थानेउकारान्त एषोर्थः कल्प्यते न तु साक्षान्निर्दिष्टः, अतस्तेः स्थाने तुरादेशः कालपनिकः तत्रापि स्थानिवद्भावो यथा स्यादिति आदेशग्रहणम्।

(४) औकारस्य स्थानिवत्वाद्धल्ङ्यादिलोपो न। उकारस्य स्थानिवत्त्वात् 'लोपो व्योर्वलीति, वलोपो न। इकारस्य स्थानिवद्भावात् हशि चेत्युत्वन्न। सकारस्य स्थानिवत्वेन विसर्गे, तस्य चाड्ग्रहणेन ग्रहणेऽड् कुप्वाङ् नुमिति णत्वन्न।

स्केन इत्यादौ मा भूत् । पञ्चम्या षष्ठ्या सप्तम्या तृतीययाचेति चत्वारः समासाः । अत्र तेषां क्रमेणोदाहरणानि ज्ञेयानि (१) ।

(२)

## अचः परस्मिन् पूर्वविधौ ॥ ५७ ॥

परनिमित्तोऽजादेशः (३) स्थानिवत्स्यात् अनादिष्टादचः पूर्वत्वेन (४) दृष्टस्य विधौ कर्तव्ये । कथयति । पटयति । अचः किम् । आगत्य । परस्मिन्निति किम् । आदीध्ये । पूर्वविधाविति किम् । नैधेयः अनादिष्टात् किम् वैयाकरणः ।

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥५८॥

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न

---

( १ ) अलाश्रयविधौ, कस्येत्याकाङ्क्षायां स्थानिन इति बोध्यं "कष्टाय क्रमणे" इति निर्देशश्चात्र लिङ्गम् । आदेशस्य स्थानिभूतो योऽल् स्थानिसम्बन्धी च योऽल्तद् वृत्तिर्यो-धर्मस्तदाश्रयविधौ नेति पर्यवसितोऽर्थः । पूर्वस्योदाहरणं द्यौरिति । अन्त्यस्य तु प्रदीव्येति तत्स्थानापन्नस्तद् धर्मं लभते यथाउपाध्यायस्य शिष्यो याज्यकुलानि गत्वाऽग्रासनानि लभते इति न्यायस्तु नात्र प्रवर्तते स्वं रूपं शब्दस्येत्युक्तेरतः स्थान्यादेशयो रूपभेदादारभ्यतेऽयं योगः । सोऽयं युष्मदस्मदोरनादेश. इत्यत्रानादेशग्रहणेनादेशः स्थानिकार्यं लभते, इति ज्ञापनाददोजग्धिर्ल्यप्ति कितीत्यत्र ल्यब्ग्रहणेनाल्विधौ स्थानिवद्भावो नेति ज्ञापनेन च प्रत्याख्यातो मुनिना ।

( २ ) अतिदेशस्त्रिधा 'भावातिदेशोऽभावातिदेश उभयातिदेशश्चेति" स्थानिनि सति यत्कार्य्यंभवति तदादेशेपि भवतीति भावातिदेशः । स्थानिनि सति यत्कार्य्यंन्नभवति तदादेशेपि न भवतीत्यभावातिदेशः । उभयातिदेशस्तु आभ्यामेव गतार्थः । उभयातिदेशार्थमिदम 'काममतिदिश्यतां सच्चासच्चे' ति भाष्यात् भावातिदेशस्योदाहरणं मृद्व्येत्यादि, अभावातिदेशस्य वाय्वोरित्यादि ।

( ३ ) अच एवादेश इत्यर्थस्तेन मरुतमाचष्टे मारयतीत्यादौ हलचोरादेशो न स्थानिवदिति।

( ४ ) पूर्वत्वञ्च व्यवहिताव्यवहित साधारणं, अत्र पञ्चमीसमासोऽपि भाष्ये दर्शितस्तमवसरे दर्शयिष्यामः ।

स्थानिवत् । (१)कानि सन्ति । दद्ध्यत्र । यायावरः । कण्डूतिः चिकीर्षकः शिण्ढि । शिषन्ति । प्रतिदीव्ना । सग्धिश्च मे । जक्षतुः ।

## (२)

## द्विर्वचनेऽचि ॥ ५९ ॥

रूपातिदेशोऽयम् । द्वित्वनिमित्तेऽचि अजादेशः स्थानिवत्स्यात् द्वित्वे कर्तव्ये । चक्रे । चक्रतुः । द्वित्वनिमित्ते किम् । दुद्यूषति ( ३ )। अचि किम् जेघ्रीयते ( ४ ) । कृते द्विर्वचने त्वादेशभूत एव तिष्ठति इत्येतदर्थमवधिग्रहणम् ।

---

( १ ) वाक्यसंस्कारपक्षे. किम्+ अस्= अस्+ झि= इति संस्थाप्य पूर्वं कानीति ततःसन्तीति तदा श्नसोरल्लोप इत्यस्य प्रवृत्तिवेलायामकारात्पूर्व इक रोवर्ततेऽतःस्थानिवद्भावः प्राप्तः पदान्तविधौ निषेधान्न भवति । दध्य्त्रेत्यत्र स्थानिवद्भवेन यकारस्याच् त्वादनचीति द्वित्वनिषेधः प्राप्तः द्विर्वचनं स्थानिवद्भावाभावान्न । यातेर्यङन्ताद्वरचि अतोलोपे तस्य स्थानि वत्वादातोलोपः प्राप्नोति प्राप्नोति तन्निषेधान्न भवति । कण्डूयतेःक्तिचि अतोलोपस्य स्थानिवत्वात् यलोपो न प्राप्नोति ण्वुलिकृतेऽतोलोपःपरनिमित्तकस्तस्यस्थानिवत्वाल्लितीति ईकारस्योदात्तत्वन्न प्रतिषेधाच्च भवति । शिषेर्लोण्मध्यम पुरुषैकवचने रुधादिभ्यःश्नम् हित्वाधित्वष्टुत्व- प्राप्नोति, स्थानिवत्वनिषेधाद्भवति । शिषेर्लोण्मध्यम पुरुषैकवचने रुधादिभ्यःश्नम् हित्वाधित्वष्टुत्व- जश्त्वेषु कृतेषु श्नसोरल्लोपः क्ङितिसार्वधातुके, सच परनिमित्तकोऽनुस्वारस्य ययिपरसवर्णे कर्तव्ये न स्थानिवद्भवति । नश्चापदान्तस्य झलीति अनुस्वारे कर्तव्ये श्नसोरल्लोपो न स्थानिवद्भवति । प्रतिदीव्नेत्यत्राल्लोपोऽन इति अकारलोपे कृतेस्थानिवद्भावाद्धलिचेतिदीर्घत्वन्न प्राप्नोति निषेधाच्च भवति । अदेःक्तिनि बहुलं छन्दसीति घस्लादेशः घसिभसोर्हलिचेत्युपधालोपः झलोझलीति सकारलोपो झषस्तथोर्धोधइतिधत्वम् उपधालोपस्य स्थानिवत्वाज्जश्त्वन्न प्राप्नोति, निषेधाच्च भवति समानाग्धिःसग्धिः । समानस्य सभावः । अदेर्लिटिघस्लादेशे अतुसि द्वित्वादिके कृते उपधालोपस्य स्थानिवत्वाच्चर्त्वंन्न प्राप्नोति, निषेधाच्च भवति ।

( २ ) ननु चक्रतुरित्यादौ, अचोद्विर्वचननिमित्तत्वाभावात्स्थानिवत्वं न स्यादितिचेन्न; लक्ष्यानुरोधात्तदभावाभावमात्रेण निमित्तत्तास्वीकारात् ।

( ३ ) नचात्र, ऊठ्द्विर्वचननिमित्तस्तेन यणादेशो न स्यादिति ।

( ४ ) ई घ्राध्मोरितीकारः न च सोऽजूनिमित्तकः ।

## अदर्शनं लोपः ॥ ६० ॥

प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात्। अर्थस्येयं संज्ञा, महासंज्ञाकरणसामर्थ्यात्। अग्निचित्। सोमसुत्। प्रसक्तस्येति किम्। दधि। मधु। अत्रादर्शनं क्विपो नच प्रसक्तिः।

## प्रत्ययस्य लुक्श्लुलुपः ॥ ६१ ॥

लुक् श्लु लुप् शब्दैः कृतं प्रत्ययस्यादर्शनं क्रमात्तत्संज्ञं स्यात् अत्ति। जुहोति। वरणाः। विशेषविहिता अप्येता लोपसंज्ञां न बाधन्ते, एकसंज्ञाधिकारादन्यत्र संज्ञासु बाध्यबाधकभावो नास्तीति। प्रत्ययस्य किम्? अगस्तीनां छात्रा आगस्तीया इत्यादौ प्राग्दीव्यतीयेऽजादौ विवक्षिते अगस्त्यादेशस्य निषेधाभावाच्छो न स्यात्।

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥

प्रत्यये लुप्तेऽपि प्रत्ययाश्रय कार्यस्यात्। अतृणेट्। हल्ङ्याब्भ्यइति तिपोलोपे प्रत्ययलक्षणेनेम्। प्रत्ययस्येत्यनुवर्तमाने द्वितियप्रत्ययग्रहणस्यै [ १ ] तत्फलं प्रत्ययलक्षणमेव यथा स्यात्। वर्णलक्षणं मा भूत तेन गवे हितं गोहितमित्यादौ नाव्।

## न लुमताऽङ्गस्य ॥ ६३ ॥

लुमता शब्देन प्रत्ययलोपे तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न स्यात्। गर्गाः। इतः। जुहुतः। वरणा इत्यादिषु प्रत्ययस्य लुक्श्लुलुप्सु सत्सु तन्निमित्तं वृद्ध्यादिकन्न। लुमतेतिकिम्। कार्यते। अत्रणेर्लोपे सति वृद्धिर्भवत्येव। अङ्गस्येति किम् पञ्च। पयः। अत्र पदत्वं भवत्येव।

---

( १ ) प्रत्ययस्यासाधारणं रुपं यत्राश्रीयते, तत्रैव प्रत्ययलक्षणं स्यात् यत्र च प्रत्ययाप्रत्ययसाधारणं तत्र न स्यादिति सुद्दषत्प्रासाद इत्यत्रासन्तत्वादत्वसन्तस्येति दीर्घो न।

## अचोऽन्त्यादि टि ॥ ६४ ॥

अचां मध्ये योऽन्त्यस्तदादि टि संज्ञं स्यात् । पचेते । पचते । इत्यादौ तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम् ।

## अलोऽन्त्यात्पूर्व उपधा ॥ ६५ ॥

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् । राजा । राजानौ । चेतति । अल इति किम् शिष्टः । समुदायात्पूर्वस्य शस्य मा भूत् ।

## तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ ६६ ॥ (१)

सप्तम्यर्थेऽव्यवहितोच्चरिते उपश्लिष्टस्य पूर्वस्यैव कार्यं स्यात् । इकोयणचीत्यादौ अजुपश्लिष्टस्येको यण्स्यादित्यर्थे पूर्वस्य परस्य च व्यवहितस्याव्यवहितस्यचेको यण् प्राप्तस्तत्रायं नियमः । अचः पूर्वस्यैवाव्यवहितस्यैवेति । कुमार्यत्र ।

## तस्मादित्युत्तरस्य ॥ ६७ ॥ (२)

निर्दिष्टइत्यनुवर्त्तते । पञ्चम्यर्थादव्यवहितोच्चरितादुत्तरस्यैव कार्य्यं स्यात् । तिङ्ङतिङः । अतिङन्तात्परमव्यवहितं तिङन्तं निहन्यते, अग्निमीळे इति । इह न, ईळेऽग्निम् । उभयनिर्देशे तु पञ्चमीनिर्देशो बलीयान् । परत्वात् । तेन ईदास इत्यादावयमेव भवति आसीनः । (३)

---

(१) तस्मिन्निति स्वतन्त्रस्य सर्वनाम्नो निर्देशो नत्वनुकरणम् तेनाचिहलीत्यादयः सर्वे सप्तम्यन्ताः संगृहीताः । इतिशब्दस्त्वर्थविपर्यासकृत्, निर् अव्यवहितपरो दिशिरुच्चारणक्रियस्तेनोक्तार्थलाभः ।

(२) उपश्लेषः सामीप्यम् तच्च वर्णयोर्बौद्धं द्रष्टव्यम् । उपश्लेषस्य पूर्वपरव्यवहिताव्यवहितसाधारणत्वान्नियमार्थमिदम् , पूर्वस्यैवाव्यवहितस्यैवेति । सप्तम्यन्तार्थश्चास्योपस्थितौ लिङ्गम् ।

(३) दिग्योगलक्षणपञ्चम्यन्तार्थोऽस्या उपस्थितौ लिङ्गम् ।

(१)

## स्वं रूपं शब्दस्याशब्द संज्ञा ॥ ६८ ॥

शब्दस्य स्वं रूपं संज्ञि शब्दशास्त्रे या संज्ञा तां विना। आग्नेयम् आयच्छते। आहते अशब्दसंज्ञेति किम्। उपसर्गे घोः किरिति दाधाभ्यां यथा स्यात्, घुधातोर्मा भूत। उपधिः।

## अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६९ ॥

अविधीयमानोऽणुदिच्च सवर्णस्य स्वरूपस्य च संज्ञा स्यात्। शुक्ली करोति। मालीकरोति। अप्रत्यय इति भाव्यमानेन सवर्णानां ग्रहणं नेति द्योतनार्थन्तेन, 'इदम इश्' इत्यादौ दीर्घ ईकारो न (२)।

(३)

## तपरस्तकालस्य ॥ ७० ॥

तपरः स्वसमानकालकस्य ग्राहकः स्यात्। तेन अत् इत् उदिति षण्णां षण्णां संज्ञाः। ऋदिति द्वादशानाम्, तत्फलं प्राल्कारीयतीत्यपि पक्षे। घटैः-अतोभिसिति ऐस्, तपरकरणान्नेह, मालाभिः

---

(१) इहशब्दानुशासनप्रस्तावादर्थे कार्यस्यासम्भवाच्च पर्य्यायव्यावृत्यर्थोऽयं योगः। स्वशब्देनार्थो गृह्यते, रूपशब्देन स्वरूपं एवं च तदुभयं शब्दस्य संज्ञि, एतेनार्थ वद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषा लब्धा तत्फलन्तु, ऊढग्रहणेन ऊढवानित्यस्यैकदेशो न गृह्यते। तत्फलं, प्रोढवानित्यत्र वृद्धिर्न। अर्थश्चात्रान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यते, स च मुख्यः प्रसिद्धश्चेति। तेन गौणमुख्यन्यायोऽभिव्यक्तपदार्था य इति च सिद्धम्।

(२) प्लुतस्य विषये स्मृतत्वादिति। सवर्णेऽग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वमिति च भाष्यम्। अस्यार्थः। उक्तसूत्रेऽणू ग्रहणन्न कार्य्यं, आकृति ग्रहणादन्यत्वन्नेत्यर्थः।

(३) विध्यर्थमिदम् अणूग्रहणाननुवृत्तेः। जातिपक्षे तु नियमार्थमेव, सवर्णग्रहणानुवृत्तेः। तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषौ। वृद्धिरादैजिति सूत्रभाष्यात्। अतोभिसऐसित्यादौ तपरकरणात्सहिवहोरितिसूत्रस्थवर्णग्रहणाच्च,।

## आदिरन्त्येन सहेता॥ ७१ ॥

अन्त्येनेता सहादिर्मध्यगानां [१] स्वस्य च संज्ञा स्यात्। यथाऽणिति अ, इ, उ, वर्णानां संज्ञा।

## येन विधिस्तदन्तस्य ॥ ७२ ॥

स्वरूपविधिपरिहारार्थमिदम्। विशेषणमात्मान्तस्य स्वस्य च संज्ञा स्यात्। यथा, अचो यत्, अजन्ताद्धातोर्यत् स्यात्। चेयम्। जेयम्। स्वस्य च, अयम्। [ समासप्रत्ययविधौ प्रतिषेधः ] कष्ट-[२] श्रितः। नेह, कष्टं परमश्रितः। नाडायनः [३]। नेह, सौत्रनाडिः। [ उगिद्वर्णग्रहणवर्जम् ] भवती। अतिभवता [४] अततेर्डः। अस्यापत्यम् इः। दाक्षिः [५]। [ यस्मिन् विधिस्तदादावल् ग्रहणे ] [६] श्रियः। भ्रुवः।

## वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७३ ॥

यस्य समुदायस्य अचां मध्ये आदिरज् वृद्धिसंज्ञकः स वृद्धसंज्ञः स्यात्। आम्रगुप्तायनिः। मालीयः। व्यपदेशिवद्भावाज्जीयः। वृद्धि-

---

( १ ) आद्यन्ताभ्यामवयवत्वेन बोधकाभ्यां स्वघटितसमुदायस्त्वादिमः संज्ञी, तस्य च युगपल्लद्ये प्रयोगाभावात्प्रत्येकं संज्ञित्वम्, अन्त्यस्य तु न तत्कार्यं, तस्येत्संज्ञालोपाभ्यामपहरात्। इतेति किम्, त्रमङ्णनेति णकारादिभिः प्रत्याहारो माभूदिति। उपसर्गादृतीति तपर करणात् विभक्तितकारे नायं प्रवर्तते। सहग्रहणाच्च समुदाय एव संज्ञेति समुदायादेवेक इत्यादौ विभक्त्युत्पत्तिर्नादमात्रात्।

( २ ) द्वितीया श्रितेति समासः।

( ३ ) नडादिभ्यः फगिति फक्।

( ४ ) उगितश्चेति ङीप्।

( ५ ) अत इञिति इञ्।

( ६ ) अल् ग्रहणे सप्तम्यन्ते विशेषणीभूते यस्मिन्विधिस्तदादौ बोध्योव्यपदेशिवद् भावेन तस्मिंश्च।

रिति किम् । दात्ताः (१) । अचामिति किम् । इहापि यथा स्यात्, गार्गीयः (२) । आदिरिति किम् ! इह मा भूत् । साभासन्नयनः । ( वा नामधेयस्य ) देवदत्तीयाः, दैवदत्ताः । ( गोत्रान्तादसमस्तवत् ) ओदनपाणिनीयाः [३] पैङ्गलकाण्वाः । ( जिह्वाकात्य[४] हरित कात्यवर्जम् ) जैह्वाकाताः । हारितकाताः ।

## त्यदादीनि च ॥ ७४ ॥

त्यदादीनि वृद्धसंज्ञकानि स्युः । त्यदीयम् । अदसीयम् [५] । इदमीयम् । त्यादायनिः । मादायनिः [६] ।

## एङ् प्राचां देशे ॥ ७५

यस्य समुदायस्याचामादिरेङ् स वृद्धसंज्ञो वा स्यात्प्राचांदेशाभिधाने । गोनदीर्यः । व्यवस्थितविभाषाश्रयणान्नेह, कोडो नाम ग्रामस्तत्र भवः कौडः [ शैषिकेष्विति वक्तव्यम् ] तेनापत्यविकारयोर्वृद्धलक्षणप्रत्ययो न । सैपुरिकी । सैपुरिका [७] । एङिति किम् । आहिच्छत्रः । देश इतिकिम् । गोमत्यां भवा मत्स्या गौमताः ।

---

( १ ) दत्तस्येमे दात्ताः तस्येदमित्यण् ।

( २ ) अन्यथा यस्यादिवृद्धिस्तत्रैव स्यात् ऐतिकायनीयाः ।

( ३ ) ओदनप्रधानः पाणिनिः ओदनपाणिनिः तस्य छात्राः ।

( ४ ) जिह्वा चपलः कात्यः जिह्वाकात्यः । हरितभक्षः कात्यः, हरितकात्यः । तयोरसमस्तत्वे वृद्धत्वाच्छः प्राप्तो न भवति किन्त्वणेव । कात्यशब्दस्तु गर्गादित्वाद्यञन्तः ।

( ५ ) वृद्धाच्छ इति छः ।

( ६ ) उदीचां वृद्धादगोत्रादिति, फिञ् ।

( ७ ) सेपुरं स्कोनगरं च बाहीकेषु ग्रामस्तत्र वृद्धत्वा 'बाहीकग्रामेभ्यश्चे' ति टञ् ञिठौ भवतः । अपत्यविकारयो 'रुदीचां वृद्धादगोत्रादिति' 'नित्यं वृद्धशरादिभ्यः' इति च प्रत्ययो नेति भावः ।

# अथ प्रथमाध्यायस्य द्वितीयः पादः ।

## गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥१॥

गाङादेशात (१) कुटादिभ्यश्च परे ञ्णिद्भिन्नाः प्रत्यया ङिद्वत स्युः । अध्यगीष्ट । कुटिता ( व्यचेः कुटादित्वमनसीति वक्तव्यम् ) विचिता । विचितुम् । अनसीति पर्युदासेन कृन्मात्रविषयत्वमस्येति तिङि न, व्यचिता । व्यचिष्यति । अञ्णिदिति किम् । चुकोट ।

## विज इट् ॥२॥

विजेः पर इडादिप्रत्ययो ङिद्वत् स्यात् । उद्विजिता । उद्विजितुम् । इडिति किम् । उद्वेजनम् ।

## विभाषोर्णोः ॥३॥

ऊर्णोः पर इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुविता । ऊर्णविता इडितिकिम् । ऊर्णवनीयम् ।

## सार्वधातुकमपित् ॥४॥

अपि (२) त्सार्वधातुकं ङिद्वत्स्यात् । स्तुतः । युतः । सार्वधातुकमिति किम् कर्ता । अपिदिति किम् ? यौति ।

---

( १ ) आदेशे ङित्करणं विशेषणार्थमेव तङ् तु स्थानिवद्भावेनैव सिद्धम् । अन्तरेणापि वतिमतिदेशोगम्यते, अब्रह्मदत्तं ब्रह्मदत्त इत्याह तेन मन्यामहे ब्रह्मदत्तवदयमिति एवमिहापि । सप्तम्यर्थेऽत्र वतिस्तेन ङिति यत्कार्यं तदतिदिश्यते, न तु ङितो यत्कार्यम् तत्फलम् उच्चुकुटिषतीत्यत्र तङ् न ।

( २ ) च्यवन्ते प्लवन्ते इत्यादौ पिदपितोरेकादेशोऽपि तद्ग्रहणेन कथन्न गृह्यते, इति चेन्न । पूर्वविधौ तस्य स्थानिवत्वाद् गुणनिषेधो न ।

## असंयोगाल्लिट् कित् ॥५॥

असंयोगात्परोऽपिल्लिट् कित् स्यात् । निन्यतुः । बिभिदतुः । अपिदिति किम् । बिभेद । असंयोगात्किम् ! सस्रंसे । ङिदिति प्रकृते कित्करणं यजादीनां किति सम्प्रसारणार्थम् । ईजतुः । इज्यात् । पूर्वत्रापि किति कृते तु वक्तइत्यादौ सम्प्रसारणापत्तिः ( ऋदुपधेभ्यो लिटःकित्वं गुणात् पूर्वविप्रतिषेधेन(१) ववृते । ववृधे ।

## इन्धिभवतिभ्यांञ्च ॥६॥

इन्धेः संयोगार्थं भवतेः पिदर्थं ग्रहणम् । इन्धिभवतिभ्यां परो लिट् कित् स्यात् । समीधे दस्युहन्तमम् । पुत्र ईधे अथर्वणः । बभूव । बभूविथ । ( श्रन्थिग्रन्थिदम्भिस्वञ्जीनामितिवक्तव्यम् )(२) श्रेथतुः । श्रेथुः । ग्रेथतुः । ग्रेथुः । देभतुः । देभुः । परिषस्वजे । परिषस्वजाते । इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति प्रत्याख्यातमाकरे ।

(३)

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥७॥

मृडादिभ्यः परः सेट् क्त्वा कित् स्यात् । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । क्लिशित्वा । उदित्वा । उषित्वा ।

(४)

## रुदविदमुषग्रहिस्वपिप्रच्छः संश्च ॥८॥

रुदादिभ्यः परः सन् चात् क्त्वा च कितौ स्तः । रुरुदिषति । रुदित्वा ।

---

(१) इष्टवाचि परशब्दं मत्वा खण्डितमेतद् भाष्ये। सर्वेषु पूर्वविप्रतिषेधेष्वेवमेव बोध्यम्।

(२) काशिकास्थमिदं मूलन्त्वस्य षष्ठे वक्ष्यामः। एत्वाभ्यासलोपावपि वाचनिकौ।

(३) गुधकुषक्लिशिभ्यो रलो व्युपधादितिविकल्पे प्राप्ते, इतरेभ्यो नक्त्वासेडिति निषेधे प्राप्ते नित्यार्थोऽयमारम्भः ।

(४) रुदविदमुषाणां रलो व्युपधादिति विकल्पे प्राप्ते, ग्रहेस्त्वप्राप्ते, स्वपिप्रच्छ्योस्तु सन्नर्थं किदेव हि क्त्वा ।

विविदिषति। विदित्वा। मुमुषिषति। मुषित्वा, जिघृक्षति। गृहीत्वा। सुषुप्सति सुप्त्वा। पिपृच्छिषति पृष्ट्वा।

## इको झल् ॥ ९ ॥

इगन्तात्परो झलादिः सन् कित्स्यात्। चिचीषति। तुष्टूषति इकः(१) किम्। पिपासति। झल् किम्। शिशयिषते। इगिति धातुर्न गृह्यते, गर्गादिषु जिगीषुशब्दपाठात्।

## (२)
## हलन्ताच्च ॥ १० ॥

इक्समीपाद्धलः परो झलादिः सन् कित्स्यात्। बिभित्सति कित्त्वात्पुगन्तेति गुणो न। इक इत्येव। पिपक्षते। झलीत्येव। विवर्तिषते। दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धं कित्त्वम्। धिप्सति। धीप्सति।

## लिङ्सिचावात्मनेपदेषु ॥ ११ ॥

इक्समीपाद्धलः परो झलादिर्लिङ् तिङ्परः सिचैतौ कितौ

---

(१) इकःकित्वम् ( किमर्थंयोग विभाग इति शेषः ) गुणोमा भूत् (चिचीषति तुष्टूषतीत्यादौ ) दीर्घारम्भात ( अज्झनगमां सनीति ) कृते भवेत् ( कृते दीर्घे गुणो न स्यादिति कित्वं विधेयम् ) अनर्थकन्तु ( एवं सति दीर्घत्वमनर्थकं स्यात ) ह्रस्वार्थम् ( ह्रस्वानांदीर्घे कृते गुणो न स्यात् ) दीर्घाणान्तु प्रसज्यते ( गुण इति शेषः ) सामर्थ्याद्धिपुनर्भाव्यम् ( दीर्घाणामपिदीर्घत्ववचनसामर्थ्याद् गुणो न भविष्यति शास्त्रस्य पर्जन्यवत्प्रवृत्तिस्वीकारात् ) ऋदित्वं दीर्घसंश्रयम् ( यथा दीर्घत्ववचनसामर्थ्यादगुणो न भवति, एवं ॠदित्वमपि न स्यादितिचेन्न, ॠदित्वस्य दीर्घाधीनत्वात्। ननु दीर्घाणान्तु पूर्वमेवॠदित्वं प्राप्नोतिइति चेत् ) दीर्घाणां नाकृतेदीर्घे ( दीर्घाणामपिदीर्घत्वे कृते एव ॠदित्वं भवति यदा सर्वत्र दीर्घत्वेन गुणोबाधितस्तदा ॠदित्वम् ) णिलोपश्च प्रयोजनम्, ( ज्ञपि स इत्यत्रदीर्घत्वं प्राप्नोति णिलोपश्च, बाध्यसामान्यचिन्तापक्षमाश्रित्य यथा गुणं बाधते तथा णिलोपमपि बाधेत सतित्वेतस्मिन्योगे कित्वेन गुणस्य बाधात् तद्विषये चरितार्थोदीर्घःपरेण णिलोपेन बाध्यते तदा ज्ञीप्सतीति सिद्धम्।

(२) कर्मधारयोऽयं, हलूचासौ अन्तश्चेति। अन्तशब्दः समीपवाची, विशेषणत्वेपि निपातनान्न पूर्वनिपातः, इकइति षष्ठ्या विपरिणम्यते।

स्तः । भित्सीष्ट । अभित्त । इकः किम् । यक्षीष्ट । अयष्ट । अत्र सम्प्रसारणं मा भूत् । आत्मनेपदेषु किम् । अस्राक्षीत् । अकितीत्युक्तेरम्न स्यात् । हलः किम् । चेषीष्ट । झल् किम् । अवर्तिष्ट ।

(१)
## उश्च ॥ १२ ॥

ऋवर्णान्तात्परौ झलादी लिङ्सिचौ कितौ स्त आत्मनेपदेषु । कृषीष्ट । अकृत । झलादी किम् वरिषीष्ट । अवरिष्ट । लिङ्सिचोरितीट् । आत्मनेपदेषु किम् । अकार्षीत् ।

(२)
## वा गमः ॥ १३ ॥

गमेः परौ झलादी लिङ्सिचौ वा कितौ स्त आत्मनेपदेषु । संगसीष्ट संगंसीष्ट । समगत । समगंस्त । कित्वपक्षेऽनुदात्तोपदेशेति अनुनासिकलोपः

(३)
## हनः सिच् ॥ १४ ॥

हन्तेः परः सिच् कित्स्यात् । आहत । आहसाताम् । पूर्ववदनुनासिकलोपः । ननु तङि सिजन्तस्याङ्गत्वादनिदितामित्येव नलोपे व्यर्थमिदमिति-चेन्न, सिजन्तस्याङ्गत्वमाश्रित्य उपधा लोपो नेति ज्ञापनार्थम्, तेनामंस्ते-त्यादौ न ।

(४)
## यमो गन्धने ॥ १५ ॥

गन्धनेऽर्थे वर्तमानाद्यमः परः सिच् कित्स्यादात्मनेपदेषु ।

---

(१) ऋइतिवर्णग्रहणं व्याप्तिन्यायात् ।
(२) इत आरभ्य पञ्चसूत्र्यामात्मनेपदग्रहणं विस्पष्टप्रतिपत्त्यर्थम् ।
(३) सिज्ग्रहणं लिङोनिवृत्त्यर्थम् ।
(४) गन्धनं सूचनं तच्च परदोषाविष्करणं धातूनामनेकार्थत्वात्तत्र वृत्तिः ।

उदायत (१)। उदायसाताम्। गन्धने किम्। उदाययंस्त पादम्। आकृष्टवानित्यर्थः।

## विभाषोपयमने ॥ १६ ॥

उपयमनेऽर्थे वर्तमानाद्यमः परः सिच् किद्वास्यात्। रामः सीतामुपायत, (२) उपायंस्त वा। उदवोढेत्यर्थः।

(३)

## स्थाध्वोरिच्च ॥ १७॥

स्थाघुभ्यां परः सिच् कित् स्यादनयोरिच्चादेशः। उपास्थित [४]। उपास्थिषाताम्। अदित। अदिषाताम्। कित्वाद्गुणो न।

## न क्त्वा सेट् ॥ १८ ॥

सेट् क्त्वा किन्न स्यात्। देवित्वा। सेडिति किम्। कृत्वा। क्त्वा-किम्। निगृहीतिः।

(५)

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः १९ ॥

शिङादिभ्यः परा सेण् निष्ठा किन्न स्यात्। शयितः। शयितवान्। प्रस्वेदितः। प्रस्वेदितवान् प्रमोदितः। प्रमोदितवान्। क्ष्वेदितः। क्ष्वेदितवान्। धर्षितः। धर्षितवान्। सेट्किम्। स्विन्नः।

---

(१) आङो यमहन इत्यात्मनेपदम्।

(२) उपाद्यमः स्वकरणे इति तङ्। गन्धनाङ्गे तूपयमने पूर्वविप्रतिषेधेन नित्यं कित्वमिति 'नवेति विभाषे' ति सूत्रे भाष्ये।

(३) भाव्यमानोऽप्यण् क्वचित्सवर्णान्गृह्णातीति ज्ञापनार्थं तपरकरणम् तत्फलं अमू' इत्यादिसिद्धिः।

(४) अकर्मकाच्चेति तङ्। ह्रस्वादङ्गादिति सिचो लुक्।

(५) अनुबन्धनिर्देशो यङ् लुग् व्यावृत्यर्थस्तेन, शेष्यितः। शेश्यितवान्। इत्यत्र न निषेधः। एरनेकाजिति यण्।

स्विन्नवान् । आदितश्चेतीण् निषेधो 'विभाषा भावादिकर्मणो' रिति पक्षेऽभ्यनुज्ञायते ।

## मृषस्तितिक्षायाम् ॥ २० ॥

तितिक्षायामर्थे वर्तमानान्मृषः परा सेण् निष्ठा किन्न स्यात् । मर्षितः । मर्षितवान् । तितिक्षायामिति किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः । तितिक्षाग्रहणेन ज्ञायते धात्वर्थनिर्देशोऽपाणिनीयः, अनेकार्थाः धातवश्चेति ।

## उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥

उदुपधाद्धातोः परा भावादिकर्मणोः सेण्निष्ठा वा कित् स्यात् । द्युतितम् । द्योतितम् । प्रद्युतितः । प्रद्योतितः । उदुपधात्किम् । क्ष्विटितम् । भावादिकर्मणोः किम् । रुचितं कार्षापणम् । सेट्किम् । क्रुष्टम् । उदुपधाच्छप (१) इति भाष्यम् । नेह, गुधितम् (२) ।

## पूङः क्त्वा च ॥ २२ ॥

पूङः परे सेट्क्त्वानिष्ठे कितौ स्तः । नित्योऽयंयोगः, विभाषयोर्मध्ये पठितत्वात् । पवित्वा । पवितः । पवितवान् । क्त्वाग्रहणमुत्तरार्थम् । योगविभागेन(३) तत्प्रत्याख्यानार्थं वा ।

## नोपधात्थफान्ताद्वा ॥ २३ ॥

नोपधात्थकारान्तात्फकारान्ताच्च परः सेट्क्त्वा किद्वा स्यात् । ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुम्फित्वा नोपधात्किम् । रेफित्वा । एतदभावे रलोव्युपधादित्यपि न, नोपधग्रहणसामर्थ्यात् । थफान्तात् किम् । स्रंसित्वा ।

---

(१) शब्विकरणेभ्य एवेष्यत इत्यर्थः ।

(२) गुध परिवेष्टने दिवादिः ।

(३) निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृष इत्यादि सूत्रत्रयं व्याख्याय, ततः–पूङः । पूङः परा सेण्निष्ठा किन्न स्यात्, ततः क्त्वा च, सेट् क्त्वा किन्न स्यात् एवञ्च, क क्त्वासे ङिति सूत्रन्न कार्यमिति तात्पर्यम् ।

## वञ्चिलुञ्च्यृतश्च ॥२४॥

वञ्च्यादिभ्यः परः सेट्क्त्वा वा कित्स्यात्। वचित्वा। वञ्चित्वा। उदितो वेति वेट्। इडभावे तुवक्त्वा। लुचित्वा। लुञ्चित्वा। ऋतित्वा। अर्तित्वा।

## तृषिमृषिकृषेः काश्यपस्य[1] ॥२५॥

एभ्यः परः सेट्क्त्वा वा कित्स्यात्। तृषित्वा। तर्षित्वा। मृषित्वा। मर्षित्वा। कृषित्वा। कर्षित्वा।

## रलो व्युपधाद्धलादेः संश्च ।२६।

उकारेकारोपधाद्धलादे रलन्ताद्धातोः परौ सेटौ क्त्वा(२) सनौ च। कितौ स्तः द्युतित्वा। द्योतित्वा। दिद्युतिषते। दिद्योतिषते। द्युतिस्वाप्योरित्यभ्यासस्य सम्प्रसारणम्। रलः किम्। देवित्वा। दिदेविषति। व्युपधादिति किम्। वर्तित्वा। विवर्तिषते। हलादेरितिकिम्। एशित्वा। एषिषिषति। सेट् किम्। भुक्त्वा। बुभुक्षते।

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः।२७।

उ ऊ ऊ ३ इत्येतेषां य उच्चारणकालस्तत्सदृशः कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात्। अतिमालः। घटाभ्याम्। एहि देवदत्ता ३। अचः (४) किम्। प्रतक्ष्य। प्ररक्ष्य ह्रस्वस्य पिति कृति तुगिति तुङ् मा भूत्। तितउ च्छत्रम्। दीर्घात्पदान्ताद्वेति विभाषा तुङ् मा भूत्।

---

(१) काश्यपग्रहणं पूजार्थं वेत्येव हि वर्तते।

(२) क्त्वाग्रहणं 'न क्त्वासेडिति' बाधनार्थम्।

(३) ऊ इति ह्रस्वदीर्घप्लुतानां क्रमेश निर्देशो व्याख्यानात्। उत्तरपदलोपोऽत्र द्रष्टव्यः। ऊ इत्येतस्य काल ऊकालः, ऊकाल इव कालो यस्य स ऊकालः। समाहारद्वन्द्वः सौत्रं पुँस्त्वम्।

(४) संयोगनिवृत्त्यर्थमच्समुदायनिवृत्त्यर्थञ्च।

## अचश्च ॥ २८ ॥

यत्र ब्रूयाद् ह्रस्वो भवति दीर्घो भवति प्लुतो भवति तत्र अच इति षष्ठयन्तं पदमुपस्थितं द्रष्टव्यम् । अतिरि । शाम्यति । स्वसंज्ञया विधाने नियमादिह न द्यौः, पन्थाः, सः । अचः किम्! सुवाग् ब्राह्मणकुलम् ।

## उच्चैरुदात्तः ॥ २९

कण्ठादिषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् । ते । के । एकादेश उदात्तेनोदात्त इति सर्वत्रैकार उदात्तः ।

## नीचैरनुदात्तः ॥ ३० ॥

कण्ठादिषु स्थानेष्वधो भागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् । नमस्ते रुद्र । अनुदात्तं सर्वमित्यधिकारात्ते शब्दोऽनुदात्तः । रुद्रादयोऽपि पदकाले "आमन्त्रितस्य" त्यानुदात्ताः । संहितायान्तु स्वरितात्संहितायामित्येकश्रुत्या भाव्यमिति ।

## समाहारः स्वरितः ॥ ३१ ॥

उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाहिते यस्मिन्नसोऽच् स्वरितसंज्ञः स्यात् । क (१) सामन्यः । तित्स्वरितमिति अन्त्योऽकारः स्वरितः ।

## तस्यादित उदात्तमर्द्धं ह्रस्वम् ॥ ३२ ॥

स्वरितस्यादावर्द्धमात्रा उदात्ता बोध्या । क इत्यादौ अर्द्धमात्रा उदात्ता । अपरात्वनुदात्ता । दीर्घप्लुतयोरपि अर्द्धमात्रैवोदात्ता । शेषन्तु अनुदात्तम् ।

## एकश्रुति दूरात्सम्बुद्धौ ॥ ३३ ॥

दूरात्संबुद्धौ वाक्यमेकश्रुति स्यात् । आगच्छ भो माणवक सोमदत्त ३ । स्वराणामविभागेनावस्थानमेकश्रुतिः प्लुतोदात्तस्व

(१) किमोऽदित्यत् । तत्र साधुरिति यत् ।

पत्रादत्वाद् भवत्येव । दूराददिति किम् ! आगच्छ भो माणवक सोमदत्त अत्र त्रैस्वर्यमेव(१) । कृत्रिमा सम्बुद्धिर्नेह गृह्यते, तेनागच्छन ब्राह्मणा इत्यादावपि ॥

## यज्ञकर्मण्यजपन्यूङ्खसामसु ॥३४॥

यज्ञक्रियायामेकश्रुतिः स्याज्जपादीन् वर्जयित्वा । अग्निर्मूर्द्धा (२) दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतोऽम् । यज्ञकर्मणीत्युक्तेः स्वाध्यायकाले त्रैस्वर्यमेव । अजपेति किम् । ममाग्ने वर्चो विहवेष्वस्तु । जपो वर्णानभिव्यक्तिलक्षणोऽनुकरणमन्त्रः । न्यूङ्खा ओंकाराः षोडश, तेषु केचिदुदात्ताः । केचिदनुदात्ताः । सामानि वाक्यविशेषस्थगीतयः । ए ३ विश्वमम त्रिणं दहा इ । अत्र सर्वत्रैकश्रुतिर्न ।

## उच्चैस्तरां वा वषट्कारः ॥ ३५ ॥

यज्ञकर्मणि वौषट्कार उच्चैस्तरां वा स्यात् । पक्षे एकश्रुतिः । सोमस्याग्ने वीही ३ वौषट् (३) । वषट्कारशब्देन वौषट्कारो लक्ष्यते ।

## विभाषा छन्दसि ॥ ३६ ॥

---

(१) अत्राङ् 'उपसर्गाश्चाभिवर्ज, मित्याद्युदात्तः । गच्छति तिङन्तस्य 'तिङ्ङतिङ, इति निघातः । भो शब्दो 'निपाता आद्युदात्ता:, इत्याद्युदात्तः । शेषयोगमन्त्रितनिघातः ।

(२) अङ्गेर्नलोपश्चे' त्यग्निशब्दः प्रत्ययस्वरेणान्तोदान्तः । श्वन्नुक्षन्पूषन्तक्षन्नित्युणादिसूत्रेण मूर्द्धन्शब्दः कनिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः । दिवेरन्तोडिविःषष्ठ्येकवचनस्य ऊडिदमित्युदात्तत्वम् । ककुच्छब्दः प्रत्ययस्वरेणान्तोदान्तः । "पातेर्डतिः" पतिः शब्दः प्रत्ययस्वरेणाद्युदात्तः । "प्रथेः षिवन्" सम्प्रसारणञ्च षित्वात्ङीष् , षष्ठ्येकवचनस्य "उदात्तयणोहल्पूर्वा" दित्युदात्तत्वम् । इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । आप्नोतेः क्विब्ह्रस्वश्च, 'ऊडिदमि' ति विभक्तेरुदात्तत्वम्, सुरीङ्भ्यो तुट् चेति असुन्प्रत्ययः, नित्स्वरेणाद्युदात्तो रेतः शब्दः जिन्वतेः प्रीणनार्थस्य तिपि निघातः ।

(३) ब्रूहि प्रेष्येत्यादिना वौषट्शब्दस्यादेः प्लुतउदातो विहितस्तदपेक्षयाऽयमुदात्ततरोऽन्त्यस्य विधीयते । द्वयोरप्युदात्ततर इत्येके ।

छन्दसि एकश्रुतिर्वा स्यात्। कज्ञकर्मणीति निवृत्तम्, बिभाषा ग्रहणात्, तेन स्वाध्यायकालेऽपि पाक्षिकी एकश्रुतिः। इषे त्वोर्जे त्वा (१)। अग्न आयाहि वीतये।

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥३७॥

सुब्रह्मण्यायामेकश्रुतिर्न स्वरितस्य तूदात्तःस्यात्। सुब्रह्मण्योमिन्द्रागच्छ। हरिव आगच्छेत्यादि।

## देवब्रह्मणोरनुदात्तः ॥३८॥

सुब्रह्मण्यायां देवब्रह्मणोः स्वरितस्यानुदात्तः स्यात्। देवा ब्रह्माण आगच्छत। (३)

## स्वरितात्संहितायामनुदात्तानाम् ॥३९॥

स्वरितात्परेषामनुदात्तानामेकश्रुतिः स्यात् संहितायाम्। इमं (४) मे गङ्गे यमुने सरस्वति। अनुदात्तानामिति जातौ बहुवचनम्। तेन

---

(१) इडन्नम्। ऊर्ग् बलं. चतुर्थ्येकवचनस्य सावेकाच इत्युदात्तत्वं, त्वामौद्वितीयाया इतित्वादेशोऽनुदात्तः, अग्ने इत्यामन्त्रिताद्युदात्तत्वम्, आङुपसर्गः। याहीति, तिङन्तम्, वी गत्यादिषु मन्त्रे वृषेषपचेत्यादिना क्तिन्नुदात्तः, अग्निशब्दोऽन्तोदात्तः। अग्निपूर्वरूपत्वम्। एकादेश उदात्तेनोदात्तः।

(२) सुब्रह्मणि साधुरितियत् तित्स्वरितमिति यकारः स्वरितः। ततष्टाप्पित्वादनुदात्तः स्वरितानुदात्तयोरेकादेशः आन्तर्यात्स्वरितः, ततो निपातेनौंशब्देन ओमाङोश्चेति, उदात्तस्वरितयो रेकादेशः स्वरितस्तस्यानेनोदात्तः क्रियते। इन्द्रशब्द 'आमन्त्रितस्य च' इत्याद्युदात्त शेषनिघातेनान्तेअनुदात्तः उदात्तादनुदात्तस्य स्वरितः इति तस्य स्वरितः प्रसक्तस्तस्याप्यनेनोदात्तो विधीयते। एवमग्रेऽपि, शेषस्तु स्वरसंचारे द्रष्टव्यः।

(३) द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः। कृतस्तस्यानुदात्तो भवति।

(४) इममि यन्तोदात्तं मे इति अनुदात्तः तस्य उदात्तादनुदात्तस्येति स्वरितत्वं, ततः परेषां गङ्गेप्रभृतीनामनुदात्तानामेकश्रुतिः।

द्वयेकयोरपि भवति । संहिताग्रहणंकिम् । अवग्रहे मा भूत् । इमं मे गङ्गे इत्यादि ।

## उदात्तस्वरितपरस्य सन्नतरः ॥४०॥

उदात्तस्वरितपरस्यानुदात्तस्यानुदात्ततरः स्यात् । अग्निम् । कन्या (१)

## अपृक्त एकाल् प्रत्ययः ॥४१॥

एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् । माला । गौरी । सोमसुत् एकालिति किम् । जागृविः । प्रत्ययइति किम् । सुराः (२) । तिपा साहचर्यादेकवचनस्य ग्रहणे तु व्यर्थमेव । एकग्रहणं च व्यर्थम् । नात्र जातिग्रहणमल्ग्रहणसामर्थ्यादन्यथा सूत्रमेव व्यर्थं स्यात् ।

## तत्पुरुषःसमानाधिकरणः कर्मधारयः ॥४२॥

समानाधिकरणावयवस्तत्पुरुषः कर्मधारयसंज्ञः स्यात् । पाचिका चासौ वृन्दारिका चेति, पाचकवृन्दारिका । पुंवत्कर्मधारयेति पुंवद्भावः । तत्पुरुषः किम् । पाचिकाभार्यः (३) समानाधिकरणः किम् ! ब्राह्मणराज्यम् ।

## प्रथमानिर्दिष्टं समासउपसर्जनम् ॥४३॥

समासशास्त्रे (४) प्रथमानिर्दिष्टम्पदमुपसर्जनसंज्ञं स्यात् । उपकुम्भम् । कष्टश्रितः । उपसर्जनत्वेनोपसर्जनं पूर्वमिति पूर्वनिपातः ।

(१) अग्निमित्यन्तोदात्तः, अकारस्तु शेषस्वरेणानुदात्तः । कन्येति फिट् स्वरेण स्वरितान्तः शेषस्वरेणाद्यनुदात्तः ।

(२) सुरांसुनोतीति सुरासुत् तमाचष्टे सुरासयति, ततः क्विप्, णिलोपः, सुराः । अस्ति चात्र एकाल्, न तु प्रत्ययः ।

(३) पाचिका भार्या यस्येति बहुव्रीहिः ।

(४) तादर्थ्यात्ताच्छब्द्यमिति समासविध्यर्थं सूत्रं समास इति ,

## एकविभक्ति चापूर्वनिपाते ॥४४॥

समासे नियतविभक्तिकं पदमुपसर्जनसंज्ञं स्यात् नतु तस्य पूर्व निपातः । अतिखट्वः । निर्वाराणसिः । गोस्त्रियोरुपसर्जनस्येति ह्रस्वः । ( एकविभक्तावषष्ठ्यन्तवचनम् ) अर्द्धं पिप्पल्या अर्द्धपिप्पली । एकविभक्तीतिकिम् ! राजकुमारी । अपूर्वनिपात इति किम् । खट्वाशब्द-स्य पूर्वनिपातो न स्यात् ।

(१)

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥४५॥

धातुं प्रत्ययं प्रत्ययान्तञ्च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिक-संज्ञं स्यात् । डित्थः । कपित्थः । बहुपटवः । अर्थवदिति किम् । धनं, वनमित्यादौ प्रतिवर्णस्य मा भूत् । अधातुः किम् । अहन् । अप्रत्ययःकिम् । काण्डे । कुड्ये ( निपातस्यानर्थकस्य प्रातिपदिक संज्ञा वक्तव्या ) खञ्जति । निखञ्जति । लम्बते । प्रलम्बते । तिङ्र्तिङ इतिफलम् ।

## कृत्तद्धितसमासाश्च ॥४६॥

कृदन्तस्तद्धितान्तः समासश्च प्रातिपदिकसंज्ञः स्यात् । एधितव्यम् । एधनीयम् । औपगवः । राजपुरुषः । समासएवार्थवतां समुदायानां प्रातिपदिकसंज्ञो भवतीति, तेन वाक्यस्य (२) न ।

---

( १ ) अर्थश्चात्रान्वयव्यतिरेककल्पितः शास्त्रीयो गृह्यते यथा वृक्षो इत्युक्ते कश्चिच्छब्दः श्रूयते । वृक्षशब्दः अकारान्तः सकारश्च प्रत्ययः । अर्थोऽपि कश्चिद्गम्यते मूलस्कन्धफलपलाशवान् । एकत्वञ्च । वृक्षावित्युक्ते कश्चिच्छब्दो हीयते । कश्चिदुपजायते । कश्चिदन्वयी । सकारो हीयते । औकार उपजायते वृक्षशब्दोऽकारान्तोऽन्वयी, अर्थोपि कश्चिद्धीयते । कश्चिदुपजायते । कश्चिदन्वयो । एकत्वं हीयते द्वित्वमुपजायते । मूलस्कन्धफल पलाशवानन्वयो तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो योऽर्थो हीयते । यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते यःशब्दोऽन्वयी तस्या सावर्थो योऽर्थोऽन्वयीति वृक्षशब्दस्य मूलस्कन्धफलपलाशवानर्थः । एवमन्यत्रापि यथायोग्यं योजनीयमिति ।

( २ ) सामान्ये वर्तमानानां पदानां यद्विशेषेऽवस्थानं स वाक्यार्थ इतिवाक्यस्यार्थ-वत्वात्प्राप्ता संज्ञा निषिध्यते । सत्याञ्च प्रातिपदिकसंज्ञायां सुपोधातुवित्ति सुपो लुक् स्यात्,

## ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४७ ॥

नपुंसके वर्तमानस्याजन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। श्रीपं कुलम्। नपुंसक इति किम्। ग्रामणीः। प्रातिपदिकस्येति किम्। काण्डे तिष्ठतः।

## गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥

उपसर्जनं (१) यो गोशब्दः स्त्रीप्रत्ययान्तश्च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। चित्रगुः। निष्कौशाम्बिः। उपसर्जनस्य किम् सुगौः। राजकुमारी। स्त्रीशब्दः स्वर्यते, तेन स्त्र्यधिकारोक्तप्रत्ययग्रहणान्नेह, अतिलक्ष्मीः (ईयसो बहुव्रीहौ पुंवद्वचनम्) बह्व्यः श्रेयस्योऽस्य स बहुश्रेयसी।

## लुक्तद्धितलुकि ॥ ४९ ॥

तद्धितलुकि सति उपसर्जनस्त्रीप्रत्ययस्य लुक् स्यात्। आमलक्याः फलं, आमलकम्। नित्यं वृद्धशरादिभ्य इति मयट्। तस्य 'फले लुगि' ति लुक्। तद्धितग्रहणं किम्। गार्ग्याः कुलं गार्गीकुलम्। अत्र सुपो लुकि लुङ् मा भूदिति।

---

ज्ञापकस्य सजातीया पेक्षत्वाद्बहुपटवइत्यादौ न. सुप् तिङ् समुदायस्य च समासविधानात्तस्यापि नियमः।

(१) उपसर्जनेन गोस्त्रियौ विशेष्येते। ताभ्याम्प्रातिपदिकमित्युक्तार्थलाभः ग्रहणवता प्रातिपादिकेन नेति तु प्रत्ययविधिविषयत्वादिह नोपतिष्ठते नन्वेवमतिकौशाम्बिरित्यत्र ह्रस्वे कृतेपि अतिसेनानीकुमारिरित्यादौ न स्यात् प्रत्ययग्रहणपरिभाषया कुमारीशब्दस्य स्त्रीप्रत्ययान्तत्वात्तस्योपसर्जनत्वाभावात् यस्योपसर्जनत्वं सेनानीकुमारीत्यस्य तस्य स्त्रीप्रत्ययान्तत्वाभावादिति चेन्न। स्त्रीप्रत्ये तदादिनियमनिषेधात्। विशेषः 'ष्यङः' इत्यत्र द्रष्टव्यः गोकुलमित्यादौ गोन्तत्वाभावान्न। अप्रधानमुपसर्जनमिति च सम्बन्धिशब्दा वेतौ तत्र सम्बन्धादेतद्गन्तव्यं यं प्रति यदप्रधानं तस्य चेत्सोऽन्तो भवतीति भाष्यम्। (तस्य) तद्घटितसमुदायस्य यदि (सः उपसर्जनशब्दः (अन्तः) अन्तावयवोभवति तदा ह्रस्वः एवञ्च राजकुमारीपुत्र इत्यादौ न। कुमारीवाचरन् बालः कुमारीत्यत्रापि न तदन्तत्वाभावात्।

## इद्गोण्याः ॥ ५० ॥

तद्धितलुकि सति गोण्या इत्स्यात् । पञ्चभिर्गोणीभिः क्रीतः, पञ्चगोणिः । गोणीशब्दः परिमाणवचन आवपनवचनश्च । तत्राग्रात्प्राग्वतेष्ठक् । द्वितीयादार्हीयष्ठक् । तयोरध्यर्धेति लुक् । ह्रस्वानुवृत्त्यासिद्धे इद्वचनं सूच्यार्थम् । तेन पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिरित्यादि सिद्धम् ।

## लुपि युक्तवद्व्यक्तिवचने ॥ ५१ ॥

लुपि सति व्यक्तिवचने युक्तवत्स्तः । पञ्चालाः (१) लुपि किम् । लवणः (२) सूपः । व्यक्तिवचने किम् ! पञ्चालाः षष्ठ्याद्यतिदेशोमा भूत् ।

## विशेषणानाञ्चाजातेः ॥ ५२ ॥ (३)

लुबर्थस्य विशेषणानां लिङ्गवचने युक्तवत्स्त आजातेः । पञ्चालाः रमणीयाः । गोदौ रमणीयौ (हरीतक्यादिषु व्यक्तिः) हरीतक्याः (४)

---

(१) प्रकृत्यर्थसम्बन्धिन्यौ लिङ्गसंख्ये प्रत्ययार्थावतिदिश्येते । पञ्चालाइति पञ्चालानां निवासइति विग्रहे ( तस्यनिवासः ) इत्यण् तस्य जनपदेलुबितिलुप् ।

(२) संसृष्ट इति ठक् तस्य लवणाल्लुगिति लुक् तस्मिन्युक्तवद्भावाभावात्प्रत्ययार्थाधीने लिङ्गवचने भवतः ।

(३) विशेषणानां सामानाधिकरण्येन युक्तवद्भावे सिद्धे जातिनिवृत्यर्थोऽयमारम्भ । आङ् मर्यादायाम् तावद् युक्तवद्भावो भवति यावज्जातिर्न प्रकान्ता तस्यां प्रक्रान्ता तस्यां प्रक्रान्तायान्तु युक्तवद्भावो निवर्तत इति तात्पर्यम । गोदौ ह्रदौ तयोरदूरभवो ग्रामो गोदौ ग्रामः अदूर भवश्चेत्यण् तस्य वरणादिभ्यश्चेतिलुप् । आजातेरितिकिं पञ्चालाः जनपदः रमणीयः गोदौग्रामोरमणीयः अत्रजनपदग्रामशब्दौ जातिवचनौतद्विशेषणं रमणीयइत्यतोयुक्तवद्भावो नेति लुपोऽन्यत्रापिजातेयुक्तवद्भावादर्शनादनारमभणीयमप्येतद् गुणवचनानांशब्दानामा श्रयतो लिङ्गवचने इत्यर्थं रक्षितभ्भाष्ये ।

(४) गौरादित्वात्ङीषन्तत्वेनाद्यु दात्ताद्धरीतकीशब्दानुदात्तादेश्चेत्यञ् हरीतक्यादिभ्यश्चेतिलुप् । अत्र व्यक्तिरेव युक्तवत्स्यात् वचनन्तु अभिधेयवदेवेति ।

फलानि, हरीतक्यः फलानि ( खलतिकादिषु वचनम् ) खलतिकस्य पर्वतस्यादूरभवानि वनानि, खलतिकं ( १ ) वनानि ( मनुष्यलुपि प्रतिषेधः ) ( २ ) चञ्चाऽभिरूपः।

## तदशिष्यं संज्ञाप्रमाणत्वात् ॥५३॥

युक्तवद्भाववचनमशिष्यं कुतः संज्ञानां प्रमाणत्वात्। पञ्चालादयः संज्ञाशब्दास्ते च यल्लिङ्गसंख्यतया लोके प्रसिद्धास्तत्र प्रमाणभूताएव, यथा, आपो दारा इत्यादयः।

## लुब्योगाप्रख्यानात् ॥५४॥

लुबप्यशिष्यः ( जनपदेलुप्, वरणादिभ्यश्चेति ) योगस्य ( अवयवार्थस्य ) इहाप्रख्यानात् ( अप्रतीतेः ) तथाचात्र तस्यनिवासइत्यादिना तद्धितो नोत्पद्यते किं लुपो विधानेन।

## योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥५५॥

यदि योगस्यावयवार्थस्येदं प्रमाण बोधकं स्यात्, तदा तदभावे न दृश्येत. दृश्यन्ते च सम्प्रति विनैव क्षत्रियादियोगं जनपदे पञ्चालादयः शब्दा अतोऽक्षादिवन्नानार्था एवैते मन्तव्याः।

## प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥५६॥

प्रत्ययार्थः प्रधानमिति वचनमप्यशिष्यं कुतः, अर्थस्य लोकतएव सिद्धेः। यत्र लोकएव प्रमाणं किन्तत्र शास्त्रेण।

(३)

## कालोपसर्जने च तुल्यम् ॥५७॥

( १ ) कोपधत्वादण् वरणादित्वात्तस्य लुप्।

( २ ) संज्ञायामिति कन्। लुम्मनुष्ये इति लुप्। चञ्चा तृणमयः पुमान्। तत्सदृश इत्यर्थः।

( ३ ) अतीताया रात्रेः पश्चार्द्धेन आगामिन्याः पूर्वार्द्धेन च सहितो दिवसोऽद्यतनः। विशेषणमुपसर्जनमित्यादि पूर्वाचार्यैः परिभाषितम्।

काल उपसर्जनञ्च पूर्वाचार्य्यैः परिभाषितं तत्रापि तुल्यमशिष्यत्वम्। लोकतः सिद्धेरिति।

(१)

## जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ॥ ५८ ॥

जात्याख्यायामेकस्मिन्नर्थे (एकोऽर्थः) बहुवचन (बहुवद्) वा स्यात्। सम्पन्नो यवः। सम्पन्ना यवाः। जातिग्रहणं किम्। देवदत्तो यज्ञदत्तः। आख्यायामिति किम् काश्यप प्रतिकृतिः काश्यपः। (२) एकस्मिन्निति किम्। व्रीहियवौ। ( संख्याप्रयोगे प्रतिषेधः ) एको व्रीहिः सम्पन्नः सुभिक्षं करोति। ( अस्मदः सविशेषणस्य प्रयोगे न) अहं देवदत्तो ब्रवीमि। अहं गार्ग्यो ब्रवीमि। पटुरहं ब्रवीमि।

(३)

## अस्मदो द्वयोश्च ॥ ५९ ॥

अस्मदो द्वित्वे चैकत्वे च विवक्षिते बहुवचनं वा स्यात्। वयं ब्रूमः। अहं ब्रवीमि। आवां ब्रूव इति वा।

## फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे ॥ ६० ॥

नक्षत्रवाचिनोः फल्गुनीप्रोष्ठपदयोर्द्वित्वे चनं वा स्यात्। पूर्वे फल्गुन्यौ। पूर्वाः फल्गुन्यः (४)। पूर्वाः प्रोष्ठपदाः। पूर्वे प्रोष्ठपदे नक्षत्रे किम्। फल्गुन्यौ माणविके। तत्र जाते इत्यर्थः।

---

(१) जातिपदार्थाश्रयेणारब्धं सूत्रमुभयपदार्थाश्रयेण खण्डितं भाष्ये।

(२) कश्यपशब्दाद् बिदादित्वादञ् काश्यपशब्दः गोत्रत्वेन जातिवाचकः ततइवार्थे संज्ञायामिति कन्। तस्य लुम्मनुष्य इतिलुप्। काश्यपशब्दस्य जातिवाचकत्वेपि नेदानीं प्राधान्येन जातिराख्यायते।

(३) इन्द्रियाणां स्वातन्त्र्येण विवक्षा पारतन्त्र्येण च, यदा स्वातन्त्र्येणतदास्मच्छब्द वाच्यानामिन्द्रियाणां बहुत्वाद्बहुवचनम्। यदा पारतन्त्र्येण तदास्मद्वाच्यस्यैकत्वादेक वचनम्। अहं गौर इत्यादिवदिन्द्रियेष्वपि, अस्मच्छब्दः। एतेन यूयं मे गुरव इत्यादि शिष्ट प्रयोगा व्याख्याताः। सूत्रञ्च नारम्भणीयमिति।

(४) फल्गुनीशब्दात् ( फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ ) इति लुगपवाद ष्टस्तत इकारलोपो टिड्ढाणेति ङीप्।

## छन्दसि पुनर्वस्वोरेकवचनम् ॥६१॥

छन्दसि विषये पुनर्वस्वोर्द्वित्वे विवक्षिते एकवचनं वा स्यात् । पुनर्वसुर्नक्षत्रमदितिर्देवता । पुनर्वसू वा । नक्षत्र इत्येव, पुनर्वसू माणवकौ ।

## विशाखयोश्च ॥६२॥

विशाखयोर्द्वित्वे एकवचनं वा स्यात् । विशाखा नक्षत्रमिन्द्राग्नी देवता । पक्षे विशाखे ।

## तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥६३॥

नक्षत्रवाचिनोस्तिष्यपुनर्वस्वोर्द्वन्द्वे बहुत्वं द्वित्ववन्नित्यं स्यात् । तिष्यपुनर्वसू उदितौ । तिष्यपुनर्वस्वोरिति किम् । विशाखानुराधाः (१) । नक्षत्रेति किम् । तिष्यपुनर्वसवो (२) माणवकाः । द्वन्द्व इति किम् । यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसवः । बहुवचनस्येति किम् । इदं, तिष्य (३) पुनर्वसु ।

## सरूपाणामेकशेष एकविभक्तौ ॥६४॥

समानायां विभक्तौ यानि सरूपाण्येव दृष्टानि तेषां मध्ये एक एव शिष्यते । प्रत्यर्थं शब्दाभिनिवेश इति वचनाद्यावन्तोऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति इष्यते चैकस्यैवेत्यारभ्यते योगः । अनैमित्तिकत्वेना-

---

(१) विशाखे च अनुराधा च ता इत्यर्थः ।

(२) तिष्यपुनर्वसुशब्दाभ्यां पृथगवस्थिताभ्यां सन्धिवेलेत्यादिना जातार्थेऽण् तस्य श्रविष्ठा-फल्गुनीत्यादिना लुक् अतो माणवकवाचिनोर्द्वन्द्वो न तु नक्षत्रवाचिनोः ।

(३) एकस्तिष्यः द्वौ पुनर्वसु तेषां बहुत्वाद् बहुवचनस्येति सिद्धे बहुवचनग्रहणं सर्वो द्वन्द्वो विभाषैकवद् भवतीति ज्ञापनार्थं तत्फलन्तु द्वन्द्वश्चेत्यादि प्रकरणस्य ( प्राण्यङ्गादीनां समाहार एव ) अयमेव नियमो नतु ( एषामेवेति ) विपरीतनियमस्तेन तिष्यपुनर्वस्वोः समाहारे एकवचनस्य द्विवचनं नेति भावः ।

अनैमित्तिकत्वेनान्तरङ्गत्वात् सुबुत्पत्तेः प्रागेवायम्। ङ्यन्तावन्त प्रातिपदिकानामिति शेषः। हरिण्यौ (१)। हरिण्यः। क्षमे। क्षमाः। घटौ। घटाः। रूप (२) ग्रहणं किम्? अक्षाः। पादाः इत्यादावपि यथा स्यात्। एकग्रहणं किम्। 'द्विबह्वो' रेकशेषो मा भूत। शेषग्रहणं किम् आदेशो (३) मा विज्ञायि। एकविभक्तौ किम्! पयः (४) पयो जरयति।

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥६५॥

युवप्रत्ययान्तेन सह विवक्षायांगोत्रप्रत्ययान्तं शिष्यते गोत्रयुव प्रत्ययमात्रकृतञ्चेत्तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च, गार्ग्यायणश्च गार्ग्यौ। तल्लक्षणं किम्। भागवित्तिभागवित्तिकौ। (५)

## स्त्री पुंवच्च ॥६६॥

पुंवदतिदेशार्थमिदम्। यूना सह विवक्षायां वृद्धा स्त्री शिष्यते तल्लक्षणश्चेदेव विशेषः सा च पुंवत्। गार्ग्यायणश्च, गार्गी च, गार्ग्यौ।

## पुमान् स्त्रिया ॥६७॥

स्त्रिया सह विवक्षायां पुमान् शिष्यते, तल्लक्षणश्चेदेव विशेषः। कुक्कटश्च, कुक्कुटी च, कुक्कुटौ। तल्लक्षणं किम्। नेह हंसश्च वरटा च, हंसवरटे।

---

(१) ( हरिणी मृगी हरितवर्णा च ) तयोरेकदेशः। क्षितिक्षान्त्योःक्षमा। तयोरेक शेषः घटशब्दोपि अव्युत्पत्ति पक्षे कम्बुग्रीवादिमति वर्तते व्युत्पत्तिपक्षे तु चेष्टाकर्त्तरितयोस्तेषां चैकशेषः।

(२) रूपग्रहणाभावे यत्र सर्वं समानं रूपोऽर्थश्च तत्रैव स्यात् वृक्षाः प्लक्षाः इत्यादौ। हरिण्यादौ न स्यादिष्यते रूपमात्रे समाने स्यादिति रूपग्रहणमिति।

(३) सति चादेशे द्व्युदात्तवती द्व्युदात्तवान् आदेशः स्यात् अश्वावित्यादौ।

(४) एकं प्रथमान्तरमपरं द्वितीयान्तम्।

(५) कुत्सा सौवीरत्वञ्चापरो विशेषः।

## भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥[१]

स्वसृदुहितृभ्यां सह विवक्षायां भ्रातृपुत्रौ शिष्येते। भ्राता च स्वसा च, भ्रातरौ। पुत्रश्च, दुहिता च, पुत्रौ।

## नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥[२]

अक्लीबेन सहोक्तौ क्लीबं शिष्यते, तच्चैकवद्वा स्यात्, तल्लक्षण एवचेद्विशेषः। शुक्लः कम्बलः, शुक्ला शाटिका, शुक्लं वस्त्रं, तानीमानि शुक्लानि। अनपुंसकेनेति किम्। शुक्लश्च, शुक्लश्च, शुक्ले एकवन्न भवति।

## पिता मात्रा ॥ ७० ॥

मात्रा सहोक्तौ पिता वा शिष्यते। माता च, पिता च पितरौ। मातापितरौ वा।

## श्वशुरःश्वश्वा ७१ ॥

श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते। श्वश्रूश्च, श्वशुरश्च, श्वशुरौ। श्वश्रूश्वशुरौ वा।

## त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥

सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च, तौ।

---

(१) ननु भ्रातृस्वसृशब्दयोरेकापत्यत्वं पुत्रदुहितृशब्दयोश्चैकापत्यत्वं समानं स्त्रीत्वंपुंस्त्वञ्चोभयत्रविशेषइ त "पुमान् स्त्रिया,, इत्येवसिद्धे सति यदिमं योगं शास्ति, तज्ज्ञापयत्याचार्यं यत्र समानायामाकृतौ प्रकृतेरूर्ध्वं यत्तत्कृत एवविशेषोग्राह्यस्तेन हंसश्च, वरटा चेत्यादौ ना वृद्धो यूनेत्यादो विशेषस्याविवक्षितत्वात्सामान्यस्य च विवक्षितत्वात्सरूपाणामेकशेषइत्येवसिद्धेर्नारब्धव्या इमे योगा इति भाष्ये स्थितम्। कैयटेच विस्पष्टीकृतम्।

(२) अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते, इति नपुंसकस्यैव प्रधानत्वात् नपुंसकस्यैव ( सरूपाणामिति ) एकशेषो भविष्यति, जातिव्यक्तिपक्षयोः विवक्षाधीनत्वाच्च, जातिविवक्षायामेकवचनमपि भविष्यति द्रव्याभिधाने ' द्विवचनबहुवचने, इति नार्थोऽनेन।

( त्यदादितः शेषे पनपसकतो लिङ्गवचनानि ) स चदेवदत्ता च, तौ। सा च कुण्डे च कुण्डानि ( अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम् स च कुक्कुटः सा च मयूरी, कुक्कुटमयूर्यौ ते। अर्द्धं पिप्पल्याः, अर्द्धपिप्पली। तच्च, तच्च अर्द्धपिप्पली च, अर्द्ध पिप्पल्यस्ताः (त्यदादीनां मिथःसहोक्तौ यत्परं तच्छिष्यते शब्दपरविप्रतिषेधात् ) अहं च त्वं च आवाम्।

## ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥७३॥

अतरुणेषु ग्राम्यपशुसंघेषु स्त्री शिष्यते। गाव इमाः। ग्राम्येति किम्। रुरव इमे। पशुष्विति किम्। ब्राह्मणा इमे। संघेष्विति किम्। इमौ गावौ चरतः। अतरुणेष्विति किम्। वत्सा इमे। ( अनेकशफेष्विति वक्तव्यम् ) नेह, अश्वा इमे।

इति द्वितीयाध्यायस्य द्वितीयःपादः ॥

---

# अथ प्रथमाध्यायस्य तृतीयः पादः।

(१)

## भूवादयो धातवः

क्रियावचना भ्वादयो धातुसंज्ञाः स्युः। धातुत्वाल्लडादयः।

---

( १ ) स्तम्भ्वादीनामुदित्करणेन सौत्राणामपि धातुत्वम्। कास्यनेकाज् ग्रहणं चुलुम्पाद्यर्थमिति वार्तिकोक्त्या चुलुम्पादीनामपि धातुत्वं भ्वादिगणे पाठश्च। भ्वादीनामसमाप्ते'। दिवादौ 'वृत्' करणन्तु पुष्पादिसमाप्त्यर्थमिति दिवादीनामपरिसमाप्तेश्चमृग्यतीत्यादयः।

भवति। एधते। क्रियावचनाः किम्? याः (१) पश्य। भूवादयः किम्। हिरुक्। पृथक् (२)।

(३)

## उपदेशेऽजनुनासिक इत् ॥२॥

उपदेशेऽनुनासिकोऽजित्संज्ञः स्यात्। घटः। उपदेशे किम्? अभ्र आँ अपः। अजिति किम्। पामेत्यादौ मनिनो मकारस्य मा भूत्।

## हलन्त्यम् ॥३॥

उपदेशेऽन्त्यं हलित् स्यात्। शेते। ङित्त्वात्तङ्। उपदेशे किम् अग्निचित्। हल् च, ल् चे, ति सम हारद्वन्द्वं कृत्वाऽन्त्योऽल् इत्संज्ञो भवतीति पूर्वं वाक्यार्थो विधेयस्ततश्च नान्योन्याश्रयः।

(४)

## न विभक्तौ तुस्माः ॥४॥

पूर्वापवादः। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। घटात्। यजेरन्। घटाः। पचतः। घटम्। अद्राक्षम्। विभक्तौ किम्। अचोयदित्यादौ मा भूत्।

## आदिर्ञिटुडवः ॥५॥

उपदेशे आदिभूता ञिटुडव इतः स्युः। इद्धः। ञीतःक्तइतिवर्त-

---

( १ ) द्वितीयायाः बहुवचने आतोधातो रिति आकार लोपः स्यात्।

( २ ) सति च धातुत्वे भावे लः स्यात्तस्य प्रथमपुरुषमुत्सर्गङ्करिष्यते, 'एकवचनमुत्सर्गतः करिष्यते, इतिभाष्यवचनाभ्यान्तआदेशः स्यात्।

( ३ ) उपदेश इत्यत्र कृत्यलुटो बहुलमिति बाहुलकात्करणे घञ् उपदिश्यते अनेनेति व्युत्पत्या धात्वादीनां संग्रहः।

( ४ ) प्राग्दिशो विभक्तिरिति प्रकरणे त्वस्य न प्रवृत्तिः। मकारपरित्राणार्थमिदमस्थमुरित्यत्रोकारानुबन्धसञ्जनात्। तेन किमोऽदित्यादौ न निषेधः।

मा.ने क्तः वेपथु । ट्वितोऽथुजित्यथुच्, उप्त्रिमम् । ड्वितः क्त्रिरिति क्त्रिः । आदिरिति किम् ! पटूयति (१) । उपदेशइति किम् । ञिकारीयति ।

## षः प्रत्ययस्य ॥६॥

प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । शिल्पिनि ष्वुन् । नर्तकी । प्रत्ययस्येति किम् । षोडश । आदिरिति किम् । अविषः । महिषः अविमह्योष्टिषच् ।

## चुटू ॥७॥

(२)

प्रत्ययाद्यौ चुटू इतौ स्तः । कौञ्जायन्यः । घटाः । शाण्डिक्यः । (३) कुरुचरी (४) । उपसरजः । अन्न लब्धा आन्नः केशचुञ्चुरित्यादौ तु सूत्रे यकारप्रश्लेषेण प्रत्ययादौ चवर्गाभावान्नेत्संज्ञा । एवमन्यत्रापि बोध्यम् (५) ।

## लशक्वतद्धिते ॥८॥

तद्धितभिन्नप्रत्ययाद्या लशकवर्गा इतः स्युः । भवनम् । जयति भूतः । प्रियंवदः । जिष्णुः । भङ्गुरम् । अतद्धितेकिम् । चूडाल इत्यादौ मा भूत् ।

---

( १ ) पटुशब्दस्य पृथ्वादित्वादुपदेशत्वम् ।

( २ ) गोत्रे कुञ्जादिभ्यश्च्फञ् ।

( ३ ) शण्डिकादिभ्योञ्यः ।

( ४ ) चरेष्टः । टित्वान्ङीप् ।

( ५ ) यत्र नेष्यते तत्रेत्यर्थः ।

( ६ ) ल्युट् च । कर्तरि शप् । क्तक्तवतू निष्ठा । प्रियवशे वदः खच् । ग्लाजिस्थश्चग्स्नुः । भञ्जभासमिदो घुरच् । काम्यजित्यादौ तु फलाभावान्नेत्संज्ञा, इह हिशब्दस्य कार्यार्थो वा स्यादुपदेशः श्रवणार्थो वा, कार्यञ्चेह नास्ति, असति कार्ये यदि श्रवणमपि न स्यादुपदेशोऽनर्थकः स्यात् । अग्निचित्काम्यतीत्यादौ तु गुणाभावो न फलं, सार्वधातुकार्धधातुकानुवृत्तेस्तत्र तस्याप्राप्तेः ।

## तस्य लोपः ॥ ९ ॥

तस्येतो लोपः स्यात् । तस्येति सर्वलोपार्थम् । उदाहरणानि तु शेते इत्यादीनि पूर्वमुदाहृतानि ।

## यथासंख्यमनुदेशः समानाम् ॥ १० ॥

तुल्यसंख्यानां सम्बन्धो यथाक्रमं स्यात् । नन्दनः । ग्राही । पचः । नन्दिग्रहिपचादिभ्यः क्रमेण ल्युणिन्यो बोध्याः । स्वरितेने-तत्यपकृष्य यत्र स्वरितत्वं तत्रैव यथाक्रमबोधनात् क्वचिन्न ।

## स्वरितेनाधिकारः ॥ ११ ॥

स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम् । आर्द्धधातुके इत्यादि । ननु निवृत्त्यर्थं व्याख्यानमावश्यकं तेनैवाधिकारोऽपि स्यादिति चेन्न, स्वरितेनाधिकं करोतीत्यर्थबोधनार्थम् तेन सर्वे पूर्वविप्रतिषे-धादयः संग्रहीताः ।

## अनुदात्तङित आत्मनेपदम् ॥ १२ ॥

अनुदात्तेत उपदेशे यो ङितदन्ताच्च धातोर्लस्यात्मनेपदं स्यात् । एधते । बोभूयते । ऋतीयते । शेते इत्यादौ तु व्यपदेशिवद्भावेन बोध्यम् । चुकुटिषतीत्यादौ तूपदेशानुवृत्त्या न ।

## भावकर्मणोः ॥१३ ॥

भावकर्मणोर्विहितस्य लस्यात्मनेपदं स्यात् । सुप्यते देवदत्तेन । पच्यते ओदनः । सार्वधातुके यगिति यक् ।

## कर्तरि कर्मव्यतिहारे ॥ १४ ॥

क्रियाया विनिमयः कर्मव्यतिहारः, परस्परकरणं वा, तस्मिन् वर्तमानाद्धातोः कर्तरि आत्मनेपदं स्यात् । व्यतिलुनीते । अन्यस्य योग्यं लवनं करोतीत्यर्थः । सम्प्रहरन्ते राजानः ।

## न गतिहिंसार्थेभ्यः ॥ १५ ॥

कर्मव्यतिहारे वर्तमानेभ्यो गत्यर्थेभ्यो हिंसार्थेभ्यश्च कर्तरि आत्मनेपदं न स्यात्। व्यतिगच्छन्ति व्यतिघ्नन्ति (प्रतिषेधे हसादीनामुप (१) संख्यानम्) व्यतिहसन्ति। व्यतिजल्पन्ति। [हरिवह्योरप्रतिषेधः] सम्प्रहरन्ते राजानः। संविवहन्ते गर्गाः।

## इतरेतरान्योन्योपपदाच्च ॥ १६ ॥

इतरेतरान्योन्योपपदाद्धातोः कर्तरि आत्मनेपदं न स्यात्। इतरेतरस्य अन्योन्यस्य वा व्यतिलुनन्ति। [परस्परोपपदाच्चेति वक्तव्यम्] परस्परस्य व्यतिलुनन्ति।

## नेर्विशः ॥ १७ ॥

निपूर्वाद् विशतेः कर्तरि आत्मनेपदं स्यात्। निविशते। नेः किम्। प्रविशति। अन्तरङ्गत्वाल्लादेशेषु सत्सु पश्चादडादयः। तेन, न्यविशतेत्यादि सिद्ध्यति।

## परिव्यवेभ्यः क्रियः ॥ १८ ॥

परि अवपूर्वात् क्रीणातेः कर्तरि आत्मनेपदं स्यात्। परिक्रीणीते। वीक्रीणीते। अवक्रीणीते। साहचर्याद् व्यादय उपसर्गाः गृह्यन्ते। तेनेह न, बहुवि, क्रीणासि वनम्। विः पक्षी।

## विपराभ्यां जेः ॥ १९ ॥

विपराभ्यां जयतेः कर्तरि आत्मने पदं स्यात्। विजयते। पराजयते। पूर्ववदुपसर्गग्रहणान्नेह, परा, जयति सेना। उत्कृष्टेत्यर्थः।

(२)

## आङो दोऽनास्यविहरणे ॥ २० ॥

---

(१) हसप्रकाराणां शब्दक्रियाणामित्यर्थः।

(२) अकर्त्रभिप्रायार्थमारम्भः। तेन, व्यादत्ते विहगपतिर्मुखं स्वकीयमित्यादि कर्त्रभिप्राये बोध्यम्।

अनास्यविहरणेऽर्थे वर्तमानादाङ्पूर्वाद्ददातेः कर्तरि आत्मनेपदं स्यात्। विद्यामादत्ते। अनास्येत्यादि किम्। आस्यं व्याददाति। (आस्यविहरणसमानक्रियादपि प्रतिषेधः) विपादिकां (१) व्याददाति। (स्वाङ्गकर्मकाच्चेति वक्तव्यम्) तेनेह न, व्याददते पिपीलिकाः पतङ्गस्य मुखमिति।

## क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥

अनुसंपरिपूर्वादाङ्पूर्वाच्च क्रीडतेरात्मनेपदं स्यात्। अनुक्रीडते। संक्रीडते। परिक्रीडते। आक्रीडते। उपसर्गसाहचर्यात्कर्मप्रवचनीयस्यानोर्न ग्रहणं तेनेह न, माणवकमनुक्रीडति (२)। (समोऽकूजने) संक्रीडन्ति शकटानि। (आगमेःक्षमायाम्) आगमयस्व (३) तावन्माणवकम्। (शिक्षे (४) र्जिज्ञासायाम्) विद्यासु (५) शिक्षते। किरते (६) हर्षजीविकाकुलायकरणेषु) अपस्किरते वृषभो हृष्टः। अपस्किरते कुक्कुटो भक्षार्थी। अपस्किरते श्वाऽऽश्रयार्थी। (हरतेर्गतताच्छील्ये) पैतृक (७) मश्वा अनुहरन्ते। (आशिषि नाथः) सर्पिषो नाथते। (आङि नुपृच्छयोः) आनुते शृगालः। आपृच्छते गुरुम् (शप उपलम्भने) देवदत्ताय शपते।

---

(१) पादस्फोटो विपादिका। ङिदाकारग्रहणान्नेह, भिक्षामाददाति स्मृतः वस्त्राकारः।

(२) माणवकेन सहेत्यर्थः।

(३) सहस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः।

(४) शिक्ष इति सन्नन्तस्य ग्रहणं विध्यर्थम्

(५) विद्यां जिज्ञासितुं घटते इत्यर्थः।

(६) विक्षेपार्थः किरतिः। हर्षादयो विषयत्वेनोपात्ताः।

(७) पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः।

## समवप्रविभ्यः स्थः ॥ २२ ॥

सम्अवप्रविपूर्वात्तिष्ठतेरात्मनेपदं स्यात् । संतिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते । (आङः स्थः प्रतिज्ञाने) शब्द नित्यमातिष्ठते (१)

(२)

## प्रकाशनस्थेयाख्ययोश्च २३ ॥

प्रकाशनस्थेयाख्ययोर्वर्त्तमानात्तिष्ठतेरात्मनेपदं स्यात् । छात्रः आचार्याय तिष्ठते । स्वाभिप्रायं प्रकाशयतीत्यर्थः । संशय्य कर्णादिषु तिष्ठते यः । कर्णादीन्निर्णेतृत्वेनाश्रयतीत्यर्थ. ।

## उदोऽनूर्द्ध्वकर्मणि ॥ २४ ॥

अनूर्द्ध्वकर्मणि वर्तमानादुत्पूर्वात्तिष्ठतेः कर्तरि आत्मनेपदं स्यात् । उत्तिष्ठते । यतते इत्यर्थः । अनुर्द्ध्वेति किम् । जवेन पीठादुदतिष्ठदच्युतः । ( उदईहायाम् ) (३) तेनेह न, उत्तिष्ठति सेना । जयतीत्यर्थः ।

(४)

## उपान्मन्त्रकरणे ॥ २५ ॥

मन्त्रकरणेऽर्थे वर्तमानादुपपूर्वात्तिष्ठतेः कर्तरि आत्मनेपदं स्यात् । आग्नेय्याऽऽग्नीध्रमुपतिष्ठते ( उपाद्देवपूजासंगतिकरण ( ५ ) मित्रीकरणपथिष्विति वक्तव्यम् ) चन्द्रसमुपतिष्ठते । रथिनमुपतिष्ठते । अश्वारोहानुपतिष्ठते । अयं पन्थाः स्रुघ्नमुपतिष्ठते । स्रुघ्नं प्राप्नो-

---

( १ ) नित्यत्वेन प्रतिजानीत इत्यर्थः ।

( २ ) स्थेयो विवादपदनिर्णेता, तिष्ठतेऽस्मिन्नित्यधिकरणे यत् ।

( ३ ) ईहा—कायपरिस्पन्दात्मिका चेष्टा गृह्यते ।

( ४ ) मन्त्रः करणं कारकविशेषो यत्र तत् ।

( ५ ) संगतिकरणमुपश्लेषः । अनुपश्लिष्टस्यापि मैत्रीसम्बन्ध इति भेदः ।

तीत्यर्थः ( वा लिप्सायाम् ) ब्राह्मणकुलमुपतिष्ठने (१) उपतिष्ठति वा भिक्षुकः ।

## अकर्मकाच्च ॥ २६ ॥

उपपूर्वादकर्मकात्तिष्ठतेः कर्तर्यात्मनेपदं स्यात् । भोजनकाले उपतिष्ठने । सन्निधत्ते इत्यर्थः । अकर्मकादिति किम् ! राजानमुपतिष्ठति ।

## उद्विभ्यां तपः ॥ २७ ॥

उद्विपूर्वादकर्मकात्तपत्तेः क० आत्मनेपदं स्यात् । उत्तपते । वितपते । दीप्यत इत्यर्थः ( स्वाङ्गकर्मकाच्च ) उत्तपते पाणी । वितपते पृष्ठम् । उद्विभ्यां किम् । निष्टपति । ज्वलतीत्यर्थः ।

## आङो यमहनः ॥ २८ ॥

आङ्पूर्वाभ्यामकर्मकाभ्यां यमहनिभ्यां क० आत्मनेपदं स्यात् । आयच्छते । आहते । अकर्मकाभ्यांकिम् । आयच्छति रज्जुं कूपात् । आहन्ति वृषलं पादेन ( स्वाङ्गकर्मकाच्च ) (२) आयच्छते पाणी । आहते उदरम् ।

## समो गम्यृच्छिभ्याम् ॥ २९ ॥

संपूर्वाभ्यामकर्मकाभ्यां गम्यृच्छिभ्यां क० आत्मनेपदं स्यात् । संगच्छते समृच्छते अकर्मकाभ्यां किम् । ग्रामं संगच्छति ( समोगमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् ) । संवित्ते । सम्पृच्छते । संस्वरते । ( अर्तिश्रुदृशिभ्यश्च ) मा समृत । मा समृषाताम् ।

---

( १ ) लिप्सया हेतुभूतया तदुपगच्छतीत्यर्थः ।

( २ ) आजघ्ने विषमविलोचनस्य वक्ष इति भारविप्रयोगस्तु कथञ्चिद्योजनीयः । प्रमाद एव वा ।

संशृणुते । संपश्यते ( उपसर्गादस्य (१) त्युह्योर्वावचनम् ) निरस्यति निरस्यते वा । समूहति समूहते । वा ।

## निसमुपविभ्यो ह्वः ॥ ३० ॥

निसमुपविपूर्वात् ह्वयतेः क० आत्मनेपदं स्यात् । अकर्त्रभिप्रायार्थमिदम् । निह्वयते । संह्वयते । उपह्वयते । विह्वयते ।

## स्पर्द्धायामाङः ( २ ) ॥ ३१ ॥

आङ् पूर्वात् ह्वयतेः स्पर्द्धायां विषये क० आत्मनेपदं स्यात् । मल्लमाह्वयते । स्पर्द्धमानस्तस्याह्वानं करोतीत्यर्थः । स्पर्द्धायां किम् पुत्रमाह्वयति ।

( ३ )

## गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ ३२ ॥

गन्धनादिष्वर्थेषु वर्तमानात्करोतेः क० आत्मनेपदं स्यात् । उत्कुरुते । सूचयतीत्यर्थः । भृत्यमुदाकुरुते । भर्त्सयतीत्यर्थः । शिवमुपकुरुते । सेवत इत्यर्थः । परद्रव्यं प्रकुरुते । तत्र सहसा प्रवर्तत इत्यर्थः । एधोदकस्योपस्कुरुते । गुणान्तरमाधत्ते । गाथाः प्रकुरुते । प्रकर्षेण कथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्त इत्यर्थः । एषुकिम् ? कटं करोति ।

(४)

## अधेः प्रसहने ॥ ३३ ॥

( १ ) अकर्मकादिति न सम्बद्ध्यते ।

( २ ) यद्यप्ययं स्पर्द्धायामपि तथापि आङ्पूर्वकः शब्दने, अतः स्पर्द्धायां विषये इत्युक्तम् ।

( ३ ) गन्धनं हिंसात्मकं सूचनमित्यर्थः । अवक्षेपणं भर्त्सनम् । सेवनं सेवा । सहसाप्रवर्ततइति साहसिकस्तस्य कर्म साहसिक्यम्, प्रतियत्नो गुणाधानम् । उपयोग समीचीनो विनियोगः ।

( ४ ) प्रसहनं क्षमाभिभवश्च ।

प्रसहनेऽर्थे वर्त्तमानादधिपूर्वात् करोतेः क० आत्मनेपदं स्यात्। अधिकुरुते शत्रुम्। क्षमते अभिभवति वा।

## वे शब्दकर्मणः ॥ ३४ ॥

विपूर्वात् शब्दकर्मकात्करोतेः कर्तरि आत्मनेपदं स्यात्। स्वरान् विकुरुते। उच्चारयतीत्यर्थः। शब्दकर्मणइति किम्। विकरोति पयः।

## अकर्मकाच्च ॥ ३५ ॥

विपूर्वादकर्मकात्करोतेः क० आत्मनेपदं स्यात्। विकुर्वते नीचाः। विकारं लभन्त इत्यर्थः।

## संमाननोत्सञ्जनाचार्यकरणज्ञानभृति विगणनव्ययेषु नियः ॥ ३६ ॥

(१)

सम्माननादिषु गम्यमानेषु नयतेः क० आत्मनेपदं स्यात्।

आचार्यः शास्त्रे नयते। शास्त्रीयसिद्धान्तानुपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयतीत्यर्थः। ते च युक्तिभिर्निश्चाय्यमानाः पूजिता भवन्तीत्यर्थः। दण्डमुन्नयते। उत्क्षिपतीत्यर्थः। माणवकमुपनयते। विधिनाऽऽत्मसमीपं प्रापयतीत्यर्थः। अर्थं नयते। निश्चिनोतीत्यर्थः। कर्मकरानुपनयते। भृतिदानेनात्मसमीपं प्रापयतीत्यर्थः। करं विनयते। राजदेयं भागं निर्यातयतीत्यर्थः शतं विनयते। धर्मार्थं विनियुङ्क्तइत्यर्थः। एषुकिम्। घटं नयति।

---

(१) सम्माननं सत्कारः उत्सञ्जनमुत्क्षेपणम्। आचार्यकरणमाचार्य क्रिया। ज्ञानं प्रमेयनिश्चयः। भृतिर्वेतनम्। विगणनमृणादेर्निर्यातनम्। व्ययो धर्मार्थं विनियोगः तत्रोत्सञ्जनज्ञानविगणनव्ययाः नयतेर्वाच्या इतरे प्रयोगोपाधयः यथाशास्त्रे नयतेऽत्र नयतेः प्रापणमर्थः, शिष्यादिसम्माननन्तु तत्फलतया मानसबोधविषयः। माणवकमुपनयते, उपनयनाख्यसंस्कारेणात्मसमीपकरणं नयतेरर्थः, आचार्यकरणन्तु मानसबोधविषयइत्याद्युयम्।

## कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥

कर्तृस्थे कर्मणि नयतेर्यदात्मनेपदं तच्छरीरभिन्नएव स्यात् । क्रोधं विनयते । स्वकीयं क्रोधमपगमयतीत्यर्थः । क्रोधापनयनफलस्य चित्तप्रसादस्य कर्तृगामित्वात्प्राप्तमात्मनेपदं नियम्यते । तेनेह न, गडुं विनयति ।

(१)

## वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥

वृत्तिसर्गतायनेष्वर्थेषु वर्तमानात् क्रमतेः कर्तरि आत्मनेपदं स्यात् । ऋक्ष्वस्य क्रमते बुद्धिः । न प्रतिहन्यते इत्यथः । अध्ययनाय क्रमते । उत्सहत इत्यर्थः । क्रमन्तेऽस्मिन् शास्त्राणि ।

## उपपराभ्याम् ॥ ३९ ॥

वृत्त्यादिषु सोपसर्गात् क्रमतेः क० आत्मनेपदं तर्ह्युपपराभ्यामेव । उपक्रमते । पराक्रमते । नियमादिह न, संक्रामति । वृत्त्यादिष्वेव नेह, उपक्रामति ।

## आङ उद्गमने ॥ ४० ॥

उद्गमनेऽर्थे वर्तमानादाङ् पूर्वात्तः क० आत्मनेपदं स्यात् । आक्रमत आदित्यः । उदयतइत्यर्थः (ज्योतिरुद्गमन इतिवक्तव्यम् ) तेनेह । आक्रामति धूमो हर्म्यतलादिति । नभः समाक्रामति चन्द्रमा इत्यादौ तु व्याप्त्यर्थो बोध्यः ।

## वेः पादविहरणे ॥ ४१ ॥

पादविहरणे वर्तमानात् विपूर्वात् क्रमतेरात्मनेपदं स्यात् । साधु विक्रमते वाजिः । पादविहरण इतिकिम् । विक्रामत्यजिनसन्धिः । स्फुटतीत्यर्थः ।

## प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥

---

(१ वृत्तिरप्रतिबन्धः । सर्ग उत्साहः । तायनं स्फीतता । वृद्धिरितियावत् ।

समर्थाभ्यां प्रोपाभ्यां क्रमतेः क० आत्मनेपदं स्यात् । प्रारम्भेऽनयोस्तुल्यार्थता । प्रक्रमते । उपक्रमते । समर्थाभ्यां किम् । प्रक्रमति, गच्छतीत्यर्थः । उपक्रामति । आगच्छतीत्यर्थः ।

## अनुपसर्गाद्वा ॥ ४३ ॥

अनुपसर्गात् क्रमतेरात्मनेपदं वा स्यात् । क्रमते । क्रामति ।

## अपह्नवे ज्ञः ॥ ४४ ॥

अपलापेऽर्थे वर्तमानाज् जानातेः क० आत्मनेपदं स्यात् । शतम् । जानीते । अपलपतीत्यर्थः ।

## अकर्मकाच्च ॥ ४५ ॥

अकर्मकाज्जानातेरात्मनेपदं स्यात । सर्पिषो जानीते । तेनोपायेन प्रवर्तते इत्यर्थः । ज्ञोऽविदर्थस्येति करणे तृतीया ।

## संप्रतिभ्यामनाध्याने ॥ ४६ ॥

अनाध्यानेऽर्थे वर्तमानाज्जानातेः क० आत्मनेपदं स्यात् । शतं संजानीते । अवेक्षतइत्यर्थः । शतं प्रतिजानीते । अङ्गीकरोतीत्यर्थः । अनाध्यानेकिम् । मातुः संजानाति । उत्कण्ठापूर्वकं स्मरतीत्यर्थः ।

(१)

## भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥४७॥

भासनादिषु वदेरात्मनेपदं स्यात् । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । कर्मकरानुपवदते । सान्त्वयतीत्यर्थः । व्याकरणे वदते । तद्विषयकज्ञानवानित्यर्थः । क्षेत्रे वदते । तद्विषयकमुत्साहमाविष्करोतीत्यर्थः । क्षेत्रे विवदन्ते । विमत्या नानाविधं भाषन्तइत्यर्थः । धनिकमुपवदते । स्वाभिलषिते प्रवर्तयितुं प्रार्थयतइत्यथः ।

---

(१) भासनं दीप्तिः । उपसम्भाषा उपसान्त्वनम् । यत्न उत्साहः । विमतिर्नानामतिः । मन्त्रणमुपच्छन्दनम् ।

## व्यक्तवाचां समुच्चारणे ॥ ४८ ॥

व्यक्तवाचां समुच्चारणेऽर्थे वर्तमानाद्वदतेरात्मनेपदं स्यात् । संप्रवदन्ते ब्राह्मणाः । व्यक्तवाक्शब्देन (१) मनुष्या गृह्यन्ते तेनेह न, संप्रवदन्ति कुक्कुटाः । समुच्चारणं सम्भूयोच्चारणं, तेनेह न, ब्राह्मणो वदति ।

## अनोरकर्मकात् ॥ ४९ ॥

व्यक्तवाग्विषयादनुपूर्वाद्वदेः क० आत्मनेपदं स्यात् । अनुवदते कठः कलापस्य । अनुः सादृश्ये, तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठी । अकर्मकादिति किम् । पूर्वोक्तमनुवदति । व्यक्तवाचामित्येव, अनुवदति ।

## विभाषा विप्रलापे ॥ ५० ॥

विप्रलापात्मके व्यक्तवाचां समुच्चारणेऽर्थे वर्तमानाद्वदेरात्मने पदं वा स्यात् । विप्रवदन्ते विप्रवदन्ति वा वैद्याः । युगपत्परस्परविरोधेन वदन्तीत्यर्थः । व्यक्तवाचामित्येव, विप्रवदन्ति शकुनयः । समुच्चारणइत्येव । क्रमेण विप्रवदन्ति ।

## अवाद्ग्रः ॥ ५१ ॥

अवपूर्वाद् गिरतेः क० आत्मनेपदं स्यात् । अवगिरते । अवादिति किम् । गिरति । अवपूर्वस्य गृणातेस्तु प्रयोगो न, अनभिधानादिति भाष्यम् ।

## समः प्रतिज्ञाने ॥ ५२ ॥

प्रतिज्ञाने वर्तमानात्संपूर्वाद् गिरतेः क० आत्मनेपदं स्यात् । शब्दं नित्यं संगिरते । प्रतिज्ञान इति किम् ! संगिरति ग्रासम् ।

---

(१) व्यक्ता वाचि वर्णा एषामिति भाष्यप्रदर्शितव्युत्पत्त्या ।

## उदश्चरः सकर्मकात् ॥ ५३ ॥

उत्पूर्वात्सकर्मकाच्चरतेः क० आत्मनेपदं स्यात् । धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः । सकर्मकादितिकिम् । वाष्पमुच्चरति ।

## समस्तृतीयायुक्तात् ॥ ५४ ॥

तृतीयान्तेन युक्तात्संपूर्वाच्चरतेः । क० आत्मनेपदं स्यात् । रथेन संचरते । तृतियायुक्तात्किम् ! उभौ लोकौ संचरसि इमं चामुञ्च देवल ।
(१)

## दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥

तृतीयान्तेन युक्तात्संपूर्वाद्दाणः क० आत्मनेपदं स्यात् सा तृतीया चतुर्थ्यर्थे चेत् । दास्या संयच्छते । चेच्छन्दं चार्थे मत्वा चतुर्थ्यर्थे सा ( तृतीया ) स्यादिति तृतीयाविधायकमप्येतदेव । सा चाशिष्टव्यवहारे तु भार्यायै संप्रयच्छति ।

## उपाद्यमः स्वकरणे ॥ ५६ ॥

स्वकरणेऽर्थे वर्तमानादुपपूर्वाद्यमेः क० आत्मनेपदं स्यात् स्वकरणं स्वीकारः । न तु पाणिग्रहणमात्रम् उपयच्छते गाम् । अस्वः यदा स्वीक्रीयते तदायं विधिः । तेनेह न, स्वं शाटकान्तमुपयच्छतीति । च्विस्तु न, विचित्रास्तद्धितवृत्तयइति ।

## ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥

सन्नन्तेभ्यः ज्ञाश्रुस्मृदृशिभ्यः क० आत्मनेपदं स्यात् । धर्मं जिज्ञासते । पितरं शुश्रूषते । दिदृक्षते ।

## नानोर्ज्ञः ॥ ५८ ॥

---

(१) सहयुक्तेऽप्रधान इति तृतीयां कर्तरि कर्मव्यतिहारे इति तङञ्च विधाय प्रत्याख्यात मेतद्भाष्ये ।

अनुपूर्वात्सन्नन्ताज्जानातेः क० आत्मनेपदन्न स्यात् । पुत्रमनुजिज्ञासति । अनोः किम् । धर्मं जिज्ञासते । अनन्तरस्य विधिरिति न्यायेन पूर्वस्यैवायं निषेधः । अकर्मकाच्चेति विहितस्यात्मनेपदस्य पूर्ववत्सनइत्यनेन सन्नन्तेऽतिदिष्टस्य तु न । तेन औषधस्यानुजिज्ञासते इत्यादि सिद्धम् ।

## प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥

प्रत्याङ्पूर्वात् सन्नन्तात् शृणोतेः क० आत्मनेपदं न स्यात् । प्रति शुश्रूषति । आशुश्रूषति । साहचर्यादुपसर्गग्रहणादिह न, देवदत्तं प्रति शुश्रूषते । लक्षणेत्थमिति कर्मप्रवचनीयत्वम् ।

## शदे शितः ॥ ६० ॥

शित्प्रकृतिभूतात् शदेः क० आत्मनेपदं स्यात् । शीयते । शीयताम् शित इति किम् । शत्स्यति । अशत्स्यत् । शेषत्वात्परस्मैपदम् ।

## म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥

म्रियतेः परयोर्लुङ्लिङोः शितः प्रकृतिभूताच्च क० आत्मनेपदं स्यात् । नियमार्थमिदम् । म्रियते । म्रियताम् । अम्रियत । मृषीष्ट । अमृत । नियमादिह न, ममार । मर्तासि । मरिष्यति । अमरिष्यत् ङित्त्वन्तु स्वरार्थम् ।

## पूर्ववत्सनः ॥ ६२ ॥

सनः पूर्वो यो धातुस्तेन तुल्यं (१) सन्नन्तादात्मनेपदं स्यात आसिसिषते । शिशयिषते इत्यादि । शिशत्सति । मुमूर्षतीत्यादौ न, शदिमृङोः शित्प्रकृतित्वाभावात् । म्रियतेश्च लुङ्लिङ्परत्वभावाल्लुङ्लिङोरपि विषये न । गुपादिभ्यः सनः प्राङ्

---

(१) येन निमित्तेन सनः प्रकृतेरात्मनेपदं विहितं तदेवनिमित्तं सना व्यवहितं प्यात्मनेपदं प्रवर्तयतीत्यर्थः । तृतियान्ताद् वतिर्बोध्यः, नतु पञ्चम्यन्तात्, लक्षणाभावस्य

कुत्रापि आत्मनेपदं दृष्टमिति जुगुप्सते। मीमांसतेइत्यादौ न प्राप्नोतीतिचेन्न, अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरतीति स्वीकारात्।

## आम्प्रत्ययवत्कृञो ऽनुप्रयोगस्य ॥ ६३ ॥

अनुप्रयुज्यमानात्करोतेराम्प्रकृत्यातुल्यमात्मनेपदं स्यात्। एधांचक्रे। इन्दांचकार। इह कृञ्ग्रहणसामर्थ्यात्कृञ्चानुप्रयुज्यते इत्यत्र प्रत्याहारग्रहणं विज्ञायते। तत्फलम्, एधामास, एधांबभूवेत्यादयः। अत्र पूर्ववदित्यनुवर्त्य पूर्वेण विधिः. अपरेण नियमश्च विज्ञायते, तेन कर्तृगेऽपि क्रियाफले उम्भाञ्चकारे त्यादौ न तङ्।

## प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥

अयज्ञपात्रविषयात्प्रोपपूर्वाद्युजेरात्मनेपदं स्यात्। प्रयुङ्क्ते। उपयुङ्क्ते। अयज्ञपात्रेष्विति किम्। द्विन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति। ( स्वराद्यन्तो (१) पसृष्टादिति वक्तव्यम् ) प्रयुङ्क्ते।

## (२) समः क्ष्णुवः ॥ ६५ ॥

सम्पूर्वात् क्ष्णुतेः क० आत्मनेपदं स्यात्। संक्ष्णुते शस्त्रम्।

## (३) भुजोऽनवने ॥ ६६ ॥

पालनभिन्नेऽर्थे वर्तमानाद् भुजेः क० आत्मनेपदं स्यात्। ओदनं भुङ्क्ते। अभ्यवहरतीत्यर्थः। दिवं मरुत्वानिव भोक्ष्यते महीमित्यादौ तु न पालनमर्थः किन्तूपभोगः, आत्मसात्करणं वा।

---

( १ ) सम् निस् निर दुर् इत्येतान्निरस्य सर्वे उपसर्गाः संगृहीताः।

( २ ) समो गम्यृच्छिभ्यामित्यतो विच्छिद्य पाठस्तु सकर्मकार्थः।

( ३ ) रुधादेरेव ग्रहणमनवनप्रतिषेधात्। संयोगवद्विप्रयोगस्यापि विशेषस्मृतिहेतु-

## णेरणौ यत्कर्म णौचेत्स कर्ताऽनाध्याने ॥ ६७ ॥

ण्यन्ताद्धातोरात्मनेपदं स्यात् अण्यन्ते यत्कर्म, यदि णौ तदेव कर्म भवति, स चेत्कर्ता भवति, नतु आध्याने । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव । न्यग्भवनसमानाधिकरण व्यापारस्य प्रेरणत्वेन विवक्षया तस्मिन्णिच् । तथा पश्यन्ति भृत्या राजानम् । दर्शयते राजा स्वयमेव । अत्र दर्शनविषयीभवनसमानाधिकरणव्यापारस्य प्रवर्त्तनात्वेन विवक्षायां तस्मिन् व्यापारे णिच् । (१)

( २ )

## भीस्म्योर्हेतुभये ॥ ६८ ॥

ण्यन्ताभ्यां भीस्मिभ्यां क० आत्मनेपदं स्यात् प्रयोजकादेव-चेद्भयस्मयौ भवतः । अकर्त्रभिप्रायार्थोऽयमारम्भः । मुण्डो ( १ ) भी-

---

( १ ) अध्यारोपितप्रेषणपक्षे तिस्रः कक्ष्याःप्रतिभान्ति आरोहन्ति हस्तिनं हस्तिपकाः तान् सौकर्यातिशयाद्धस्ती प्रयुङ्क्ते इति हस्तिव्यापारे णिच् आरोहयतेहस्ती हस्तिपकान् तत्र सौकर्यातिशयप्रतिपादने तात्पर्यमिति कर्मणोऽविवक्षायां आरोहयते हस्ती स्वयमेवेति अत्रान्त्ययोर्द्वयोरप्यात्मनेपदम् । दर्शयतेराजा भृत्यानिति भाष्यकारेङ्गनात एवञ्च सूत्रे यश्च यच्चयत् ( नपुंसकमनपुंसकेनेति ) एकशेषः । कर्तरिकर्मेत्यतः कर्तरीन्यनुवर्तते अण्यन्ते ये कर्तृकर्मणी यदिण्यन्ते तदतिरिक्ते कर्तृकर्मणीन स्त इति फलन्त्वस्य-आरोहन्ति हस्तिनं हस्तिपकाः आरोहयमाणो हस्ती आरोहयति स्थलं मनुष्यानित्यत्र माभूत् अत्रहि स्थलमधिकं कर्म मनुष्या हस्तिनमारोहन्ति सौकर्यातिशयविवक्षायां हस्तिनः प्रयोजकत्वे तद्व्यापारे-णिच् । अनेन तङ् शानच्ततोमनुष्यान् आरोहयमाणो हस्तीति अत्रसौकर्यातिशयप्रतिपाद-नाय प्रेरणावृद्धिवत्तत्प्रतिपादनायैव द्विकर्मकत्वमत्रोर्ध्वदेशतत्स्थवस्तु एतदुभयसंयोगानुकूलोव्यापारोरुहेरर्थः । कर्तृस्थभावकर्मकेष्वस्योपयोगः । तद्वत्सकर्मकेष्वपि, एतत्सर्वं भाष्यशेखरयोः प्रपञ्चितम् । अपरिस्पन्दनसाधनसाध्यो धात्वर्थोभावः । सपरिस्पन्दनसाधन-साध्यक्रिया । विशेषोद्दश्यतेयत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्थात्वन्येषां शब्दैने-प्रकल्पिता ।

( २ ) भयग्रहणं स्मयस्याप्युपलक्षणं, तद्बोधकत्वे सति तदितरबोधकत्वमुपलक्षणत्वम् स्वीकारात् ।

षयते (१) । जटिलो विस्मा (२) पयते । हेतुभये किम् । कुञ्चिकया भाव-यति । रूपेण विस्माययति । करणादत्र भयस्मयौ न तु हेतोः ।

## गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥

प्रतारणेऽर्थे वर्तमानाभ्यां ण्यन्ताभ्यां गृधिवञ्चिभ्यां क० आत्मनेपदं स्यात् । माणवकं गर्धयते । वञ्चयते वा । प्रलम्भनेकिम् । श्वानं गर्धयति । अभिकाङ्क्षामस्योत्पादयतीत्यर्थः । अहिं वञ्चयति वर्जयतीत्यर्थः ।

## लियःसम्माननशालीनीकरणयोश्च ॥७०॥

सम्माननशालीनीकरणयोः प्रलम्भने चार्थे वर्तमानाण्ण्यन्ताल्लियः (३) क० आत्मनेपदं स्यात् । जटाभिरालापयते (४) पूजां समधिगच्छतीत्यर्थः । श्येनो वर्तिकामुल्लापयते । न्यक्करोतीत्यर्थः सम्माननादिष्विति किम् ! बाल-मुल्लापयति । आश्लेषयतीत्यर्थः ।

## मिथ्योपपदात्कृञोऽभ्यासे ॥ ७१ ॥

मिथ्योपपदाण्ण्यन्तात्करोतेः क० आत्मनेपदं स्यात् पौनः पुन्ये गम्ये । पदं मिथ्या कारयते । साधाचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः । मिथ्यो-पपदादिति किम् । पदं सुष्ठुकारयति । कृञः किम् । पदं मिथ्या वाचयति । अभ्यासइति किम् । पदं मिथ्या कारयति । सकृदुच्चारयतीति

---

(१) भियोहेतुभयेषुगितिषुक् । बिभ्यतं बालं मुण्डः प्रेरयतीति वाक्यम् बिभेतेर्हेतुभये इतिवैकल्पि-कात्वपक्षे तु भापयते । नात्रषुक् । तद्विधावीकारप्रश्लेषात् ।

(२) नित्यंस्मयतेरित्यात्वम् उभयत्र धर्मधर्मिणोरभेदेन विवक्षणाद्धेतोरेव भयस्मयौ !

(३) लीङ्श्लेषणे दिवादिः लीश्लेषणेक्र्यादिरुभयोरपि ग्रहणम्. निरनुबन्धग्रहणपरिभाषा तु नेह, तस्याःप्रत्ययविषयत्वात् । तत्फलन्तु वामदेवाड्ड्य ड्डयावित्यत्र वक्ष्यामः ।

(४) सम्माननविषयेऽकर्मकः कर्मणोधात्वर्थेन क्रोडीकृतत्वात् । पुत्रीयतीत्यादिवत् । वैकल्पिक-मध्यात्वमिह नित्यमेव, व्यवस्थितविभाषाश्रयणात् ।

## स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् क्रियाफले कर्तृगामिनि सति। यजते । सुनुते । कर्त्रभिप्राये किम् । यजन्ति ब्राह्मणाः । अत्र दक्षिणादिरूपं फलन्तु न ग्राह्यम् । तदुद्देशेन क्रियाऽप्रवृत्तेः । तथाचोक्तं हरिणा, यस्यार्थस्य प्रसिद्ध्यर्थमारभन्ते पचादयः । तत्प्रधानं फलन्तेषां न लाभादि प्रयोजनमिति ।

## अपाद्वदः ॥ ७३ ॥

अपपूर्वाद्वदतेरात्मनेपदं स्यात्, क्रियाफले कर्तृगामिनि सति । न्यायमपवदते । न्यायापवादेन स्वार्थं साधयामि इति मन्यते ।

## णिचश्च ॥ ७४ ॥

णिजन्ताद्धातोरात्मनेपदं स्यात्, क्रियाफले कर्तृगामिनि । यज्ञं कारयते।

## समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥

अग्रन्थविषयात्-समुदाङ्पूर्वात् यमेरात्मनेपदं स्यात् क्रियाफले कर्तृगामिनि । व्रीहीन् संयच्छते । भारमुद्यच्छते । वस्त्रमायच्छते (१) अग्रन्थे किम् ! उद्यच्छति [२] चिकित्सां वैद्यः ।

## अनुपसर्गाज्ज्ञः ॥ ७६ ॥

अनुपसर्गाज्जानातेरात्मनेपदं स्यात क्रियाफले कर्तृगामिनि । पुत्रं जानीते । अनुपसर्गादिति किम् । स्वर्गं लोकं न प्रजानाति मूढः ।

## विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥

समीपोच्चरितेन पदेन क्रियाफले कर्तृगामिनि प्रतीयमाने सति

---

(१) आङ् ग्रहणं सकर्मकार्थम् । इतरस्यतु "आङोयमहनः" इत्येवसिद्धिम ।
(२) चिकित्साशास्त्र मधिगन्तुमुद्यं करोतीत्यर्थः ।

इतः पूर्वैः पंचभिः सूत्रैर्विहितमात्मनेपदं वा स्यात्। स्वं यज्ञं यजति। यजते वा। स्वं कटं करोति कुरुते वा इत्यादि।

## शेषात्कर्तरि परस्मैपदम्॥ ७८॥

आत्मनेपदनिमित्तहीनात्कर्तरि परस्मैपदं स्यात्। भवति। बोभवीति। "कर्तरि कर्मव्यतिहारे" इत्यतः कर्तरीत्यनुवर्तमाने पुनः कर्तृग्रहणं कर्तैव यः कर्ता तत्र यथा स्यात्, न तु कर्मकर्तरीत्येतदर्थम्। अनुक्रियते स्वयमेव। पराक्रियते स्वयमेव।

## अनुपराभ्यां कृञः॥ ७९॥

कर्त्रभिप्रायार्थोऽयमारम्भः। अनुपरापूर्वात्करोतेः परस्मैपदं स्यात्। अनुकरोति। पराकरोति।

## अभिप्रत्यतिभ्यः क्षिपः॥ ८०॥

अयमपि तथा। अभिप्रत्यतिपूर्वात् क्षिपतेः परस्मैपदं स्यात्। अभिक्षिपति। प्रतिक्षिपति। अतिक्षिपति। एभ्यः किम्। आक्षिपते। कर्तरीति ग्रहणात्कर्मणि न, द्वितीयकर्तरीति ग्रहणात् कर्मकर्तर्यपि न।

## प्राद्वहः॥ ८१॥

प्रपूर्वाद्वहतेः कर्तरि परस्मैपदं स्यात्। प्रवहति। प्रात् किम्। आवहते।

## परेर्मृषः॥ ८२॥

परिपूर्वान्मृषेः परस्मैपदं स्यात्। परिमृष्यति। परेः किम्। आमृष्यते। इह परेरितियोगं विभज्य, परिवहतीत्यपि केचित्।

## व्याङ्परिभ्यो रमः॥ ८३॥

व्याङ्परिपूर्वाद्रमतेः परस्मैपदं स्यात्। विरमति। आरमति। परिरमति। एभ्यः किम्। अभिरमते।

## उपाच्च ॥ ८४ ॥

उपपूर्वाद्रमतेः परस्मैपदं स्यात् । उपरमति यज्ञदत्तं देवदत्तः । अन्तर्भावितण्यर्थत्वात्सकर्मकः ।

## विभाषाऽकर्मकात् ॥ ८५

उपपूर्वादकर्मकाद्रमेः परस्मैपदं वा स्यात् । उपरमति । उपरमते वा देवदत्तः । विनश्यति, निवर्तते वेत्यर्थः ।

## बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥

ण्यन्तेभ्यो बुधादिभ्यः क० परस्मैपदं स्यात् । णिचश्चेत्यस्यापवादः । बोधयति छात्रम् । योधयति शत्रुम् । नाशयति दुःखम् । जनयति सुखम् । अध्यापयति पुत्रम् । प्रावयति । प्रापयतीत्यर्थः । द्रावयति । विलापयतीत्यर्थः । स्रावयति । स्यन्दयतीत्यर्थः ।

## निगरणचलनार्थेभ्यश्च ॥ ८७ ॥

अभ्यवहारार्थेभ्यश्चलनार्थेभ्यश्च ण्यन्तेभ्यः परस्मैपदं स्यात् । निगारयति । आशयति । चलयति । चोपयति । ( अदेःप्रतिषेधो वक्तव्यः ) आदयते देवदत्तेन तत्त्वन्त्वस्य गतिबुद्धीतिसूत्रे द्रष्टव्यम् ।

## अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥

णेःपूर्वमकर्मकाच्चित्तवत्कर्तृकाद्धातोः क० परस्मैपदं स्यात् । बालःशेते । तं शाययति पिता । अणौ किम् । आरोहयमाणं, प्रयोजयति आरोहयते । अकर्मकात् किम् । कटं कुर्वाणंप्रयुङ्क्ते कारयते । चित्तवत्कर्तृकात् किम् । यवान् शोषयते । अत्र हेतुमण्णेर्ग्रहणं, प्रत्यासत्या बुधादिभ्यस्तस्यैव सम्भवात् ।

## न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९॥

पूर्वाभ्यां प्राप्तस्यायं निषेधः । पा, पाने । पाययते । दमु, उपशमे । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नतयते वादयते । वासयते ( पादिषु धेट उपसंख्यानम् ) धापयेते शिशुमेकं समीची ।

एतेभ्योण्यन्तेभ्यः परस्मैपदं नेति सूत्रार्थः ।

## वा क्यषः ॥ ९० ॥

क्यषन्तात्परस्मैपदं वा स्यात् । लोहितायति । लोहितायते ।

## द्युद्भ्यो लुङि ॥ ९१ ॥

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । अद्युतत् । अद्योतिष्ट । लुङिकिम् । द्योतते ।

## वृद्भ्यः स्यसनोः ॥ ९२ ॥

वृतादिभ्यश्चतुर्भ्यःस्यसनोर्विषये परस्मैपदं वा स्यात् वर्त्स्यति, वर्त्तिष्यते । अवर्त्स्यत् । अवर्तिष्यत । विवृत्सति । विवर्तिषते, न वृद्भ्यश्चतुर्भ्य इति परस्मैपदे इण्निषेधः ।

## लुटि च क्लृपः ॥ ९३ ॥

क्लृपः परस्य लुटः स्यसनोश्च विषये परस्मैपदं वा स्यात् । कल्प्तासि । कल्पितासे । कल्प्स्यति । कल्पिष्यते । चिक्लृप्सति । चिकल्पिषते तासि च क्लृप इतीट्प्रतिषेधः ।

## इति प्रथमाध्यायस्य तृतीयः पादः ।

---

# अथ प्रथमाध्यायस्य चतुर्थः पादः ।

## आकडारादेका संज्ञा ॥ १ ॥

कृत्कृत्यसंज्ञावदत्रापि समावेशे प्राप्ते नियमार्थं वचनम् । कडाराः कर्मधारय इत्यतः प्राग् एका संज्ञा इत्यधिक्रियते । उभयोः सावका-

शत्वे तु परैव स्यात्। निरवकाशत्वे तु या निरवकाशा सैव। अङ्ग संज्ञायाः कृत्तिङि लब्धावकाशायाः सुपि भपदसंज्ञाभ्यां न बाधः (१) सुपिचेत्यारम्भसामर्थ्यात्। तथाच गार्ग्य इत्यादौ अङ्गत्वा द्वृद्धिः, भत्वादलोपश्च। धनुष्कइत्यादावङ्गत्वाद्वृद्धिः, पदत्वाद्र. त्वादिकञ्च। परया ग्रामादागच्छतीत्यादौ चरितार्थया अपादानसंज्ञायाः धनुषा विध्यतीत्यादौ करणसंज्ञया बाधः। दिश्वप-इत्यादावनवकाशत्वात्पदसंज्ञाया भसंज्ञया बाधः। एवमन्यत्रा-प्यूह्यम्।

(२)

## विप्रतिषेधे परं कार्यम् ॥ २ ॥

द्वौ प्रसङ्गौ ( विधी ) यदाऽन्यार्थौ भवत एकस्मिंश्च युगपत्प्राप्नुतस्तदा विप्रतिषेधस्तस्मिन् परं कार्यं स्यात्। यथा वृक्षाभ्याम्, वृक्षेष्वित्यादौ लब्धावकाशौ "सुपिच" 'बहुवचने झल्येत्' इत्येतौ वृक्षेभ्यइत्यत्र युगपत्प्राप्नुतः, परत्वाद्बहुवचने झल्येदिति भवति।

## यूस्त्र्याख्यौ नदी ॥ ३ ॥

स्त्र्याख्यौ ईदूदन्तौ नदीसंज्ञौ स्तः। हे कुमारि। हे ब्रह्मबन्धु। अम्बार्थनद्योरिति ह्रस्वः। यू किम् ! मात्रे। स्त्र्याख्यौ किम्। ग्रामण्ये। आख्याग्रहणं नित्यस्त्रीलिङ्गप्रतिपत्त्यर्थम्। तेनेह न, ग्रामण्ये स्त्रियै

---

(१) यदि भपदसंज्ञाभ्यामङ्गसंज्ञाया बाधः स्यात्तर्हिअङ्गाधिकारे सुपिचेत्यनर्थकमेव स्यात्। नहि यञादौ सुप्यदन्तमङ्गं सम्भवति।

(२) युगपदुभयोः कार्ययोरसम्भवात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे परमेवेति नियमार्थमिदम्। तेन सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेतिसिद्धम्. फलम् तिसृणामित्यत्र पुनस्त्रयादेशो न। अथवाऽप्राप्तिरुभयोस्तुल्यबलत्वात्, यथा तुल्यबलयोरेकः प्रेष्यस्तयोः पर्यायेण कार्यं करोति। यदोभौ युगपत्प्रेषयतो, नानादिक्षु च कार्ये भवतस्तदोभयोर्नकरोति तद्वच्छास्त्रयोरपि प्रेष्यभूतयोः क्वचिल्लक्ष्ये यौगपद्यासम्भवादप्राप्तौ प्राप्तायाम् परंस्यादिति विध्यर्थम् तथाच 'पुनः प्रसङ्गविज्ञानात्सिद्ध' मिति सिद्धम् तत्फलं भिन्धीत्यत्र परत्वात्तातङि पक्षे धिभावः।

लिङ्गान्तरानभिधायकत्वं नित्यस्त्रीत्वमिति स्वीकारात् (प्रथमलिङ्गग्रहणञ्च) प्रथमलिङ्गे यौ स्त्र्याख्यावीदूदन्तौ तौ नदीसंज्ञौ स्तः कुमारीवाचरति ब्राह्मणः कुमारी । तस्मै कुमार्यै ब्राह्मणाय ।

## नेयङुवङ्स्थानावस्त्री ॥ ४ ॥

इयङुवङ्स्थानौ यौ यू तदन्तौ स्त्रीशब्दभिन्नौ स्त्र्याख्यौ नदीसंज्ञौ न स्तः । हे श्रीः । हे भ्रूः । अस्त्रीति किम् । हे स्त्रि ।

## वाऽऽमि ॥ ५ ॥

इयङुवङ्स्थानौ यौ यू तदन्तौ स्त्रीशब्दभिन्नौ स्त्र्याख्यौ नदीसंज्ञावामि वा स्तः । श्रीणाम् । श्रियाम् । भ्रूणाम् । भ्रुवाम् । अस्त्रीति किम् स्त्रीणाम् ।

## ङिति ह्रस्वश्च ॥ ६ ॥

ह्रस्वौ, इयङुवङ् स्थानौ च यौ यू तदन्तौ स्त्रीशब्दभिन्नौ स्त्र्याख्यौ वा नदीसंज्ञौ स्तो ङिति परे । मत्यै । मतये । धेन्वै । धेनवे । श्रियै । श्रिये । भ्रुवै । भ्रुवे । अस्त्रीति किम् । स्त्रियै । स्त्र्याख्यौ किम्! अग्नये ।

## शेषो घ्यसखि ॥ ७ ॥

ह्रस्वौ, यौ यू तदन्तं सखिभिन्नमनदं संज्ञं घिसंज्ञं स्यात् । हरये । भानवे । ह्रस्वौ किम् । सेनान्ये । खलप्वे । यू किम् । मात्रे । असखि किम् । सख्ये । एकसंज्ञाधिकारादेव नदीसंज्ञास्थले न घिसंज्ञेति विस्पष्टार्थं शेषग्रहणम् ।

## पतिः समास एव ॥ ८ ॥

पतिशब्दः समासएव घिसंज्ञः स्यात् । भूपतये । नेह, पत्ये । विपरीतनियमवारणार्थमेवकारः । दृढमुष्टिना ।

## षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥

षष्ठ्यन्तेन युक्तः पतिशब्दश्छन्दसि वा घिसंज्ञःस्यात् । कुलुञ्चानां

पतये नमः। कुलुञ्चानां पतये नमः अत्र वेतिविभज्य छन्दसीत्यनुवर्तते। तेन छन्दसि सर्वे विधयो विकल्प्यन्ते।

## ह्रस्वं लघु ॥ १० ॥

ह्रस्वं लघुसंज्ञं स्यात्। चेतति शोचति। लघूपधत्वात्पुगन्तेति गुणः।

## संयोगे गुरु ॥ ११ ॥

संयोगे परतो ह्रस्वं गुरुसंज्ञं स्यात्। कुण्डा। भिक्षा। शिक्षा। गुरोश्चहल इति अप्रत्ययः।

## दीर्घञ्च ॥ १२ ॥

दीर्घं च गुरुसंज्ञं स्यात्। ईहाञ्चकार। ईहा। इजादेश्च गुरुमत इत्याम्। पूर्ववदप्रत्ययः।

## यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम् ॥ १३ ॥

यस्मात्प्रत्ययो विधीयते तदादि शब्दस्वरूपं तस्मिन् प्रत्ययेपरतोऽङ्गसंज्ञं स्यात्। भवामि। तनोति। घटेन, घटाभ्याम्, इत्यादौ तु व्यपदेशिवद्भावेन। प्रत्ययग्रहणंकिम्। न्यविशत (१)। विधिग्रहणंकिम्। स्त्री इयती (२) तदादिग्रहणं विकरणविशिष्टस्यापि अङ्गसंज्ञार्थन्तेन भवामीत्यादौ दीर्घत्वादिसिद्धिः। सञ्चस्करतुः, इत्यादौ तु तदेकदेशभूतं तद्ग्रहणेन (३) गृह्यते इति परिभाषया सिद्धम्। प्रत्ययेकिम्। वाक्यस्य मा भूत्। देवदत्त ओदन (४) मपाक्षीत्।

---

(१) नेर्विशइत्यात्मनेपदविधिरस्ति ततो निविशिष्टस्याङ्गसंज्ञा स्यात्, सत्याञ्च ततः पूर्वमट् स्यात्।

(२) इदम्शब्दाद्वतुप किमिदंभ्यांवो घ इति वस्य घः, तस्य इयादेशस्तत इदंकिमोरीश्कीति इदंशब्दस्य शित्त्वात्सर्वादेशईश। (ई, इयत्) अत्र 'यस्येति च' तीकार लोपे प्रत्ययभागोऽवशिष्टस्तत उगितश्चेति ङीप् इयती, यदि विधिग्रहणन्न स्यात् तर्ह्यस्मिन्नपि प्रत्यये स्त्रीशब्दस्य (स्त्रियाः) इतीयङ् स्यात्।

(३) एतज्ज्ञापकन्तु नेदमदसोरकोरिति तत्प्रकारं तत्रैव वक्ष्यामः।

(४) अस्ति चात्र देवदत्तशब्दात्सुप्रत्ययविधिस्तदादिः देवदत्तादिसङ्घातस्तस्याङ्ग-

## सुप्तिङन्तं पदम् ।१४।

सुबन्तं तिङन्तञ्च पदसंज्ञं स्यात् । देवदत्तः पचति । तिङ्ङतिङ इति निघातः । अन्तग्रहणं ज्ञापकं संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नेति तत्फलन्तु, गौरीब्राह्मणितरा । षष्ठीसमासे तरबन्तस्य घसंज्ञायां गौरीशब्दस्य ह्रस्वः स्यात्, ब्राह्मणीशब्दस्य न स्यात् ।

## नः क्ये ।१५।

क्ये परतो नान्तमेव पदसंज्ञं स्यात् । राजीयति । राजायते । त्यक्तानुबन्धग्रहणे सामान्यग्रहणमिति क्यच् [१] क्यङोर्ग्रहणम् । नान्तमेवेति किम् [२] । वाच्यति ।

## सिति च ।१६।

सिति परे पूर्वं पदसंज्ञं स्यात् । भवदीयः । भवतष्ठक्छसाविति छस् । पदत्वाज्जश्त्वम् । ऋत्वियः । छन्दसिघसिति घस् । भत्वबाधाद् गुणो न ।

## स्वादिष्वसर्वनामस्थाने ।१७।

सर्वनामस्थानभिन्नेषु कप्प्रत्ययावधिषु स्वादिषु परतः पूर्वं

---

संज्ञायां देवदत्तशब्दात्पूर्वोऽडागमःस्यात । प्रत्ययग्रहणे सति तु यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव तदाद्यङ्गमिति स्वीकारान्न अस्य योगविभागो भाष्ये दर्शितः, यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेइति, गृह्यमाणे गृह्यतेइत्यध्याहारः तदा प्रत्यये गृह्यमाणे यस्मात्प्रत्ययविधिस्तदादिगृह्यते । तनोऽङ्गम् पूर्वोक्तार्थः संपद्यते । परिभाषाफलन्तु, यत्रप्रत्ययः सप्तम्या निर्दिश्यते ञ्नित्यादिरित्यादौ तत्रतदादेर्ग्रहणात् देवदत्तो गार्ग्यइतिसंघातस्य ञित्स्वरो न । अस्याअपवादस्तु कृद्ग्रहणे गतिकारकपूर्वपदस्यापि ग्रहणमिति. तज्ज्ञापकन्तु गतिरनन्तरइत्यनन्तरग्रहणम् । प्रकारस्तु तत्रैव द्रष्टव्यइतिदिक् ।

(१) क्यषः ककारस्तु प्रत्याख्यातः लोहितादिडाज्भ्य क्यष् वचनं भृशादिष्वितराणीति भाष्यवचनात् ; चर्मायतइत्यादौ तु क्यङेवातः चर्मायतीत्याद्युदाहरणानि चिन्त्यानि ।

(२) सूत्रमेव किमर्थमितःर्थस्तस्यायमाशयः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य पूर्वेणैव सिद्धे नियमार्थमिदम् । तत्फलन्तु, वाच्यतीत्यादौ पदत्वाभावात्कुत्वन्न ।

पदसंज्ञं स्यात् । राजभ्याम् । राजत्वम् । पदत्वान्नलोपः । असर्वनामस्थान इतिकिम् । राजानौ । ( भुवद्वद्भ्यो धारयद्भ्य इति पदसंज्ञाया उपसङ्ख्यानम् ) । तसौमत्वर्थे इत्यस्यापवादः व्यत्ययेन भवतेः शपो लुक् ।

## यचि भम् ॥१८॥

सर्वनामस्थानभिन्ने युयादिष्वजादिषु कप्प्रत्ययावधिषु स्वादिषु परतः पूर्वं भसंज्ञं स्यात् । गार्ग्यः । दाक्षिः । भत्वादल्लोपः ( नभोऽङ्गिरामनुषां वत्युपसंख्यानम् ) नभस्वत् । अङ्गिरस्वत् । मनुष्वत् भत्वाद्रुत्वन्न ( वृषण्वस्वश्वयोश्च ) वृषण्वसुः । वृषणश्वस्य यच्छिरः । भत्वान्नलोपो न ।

## तसौ मत्वर्थे ॥१९॥

मत्वर्थे प्रत्यये परे तान्तं सान्तञ्च भसंज्ञं स्यात् । विद्युत्वान् [१] । पयस्वान् । अर्थग्रहणादिहापि—पयस्वी ।

## अयस्मयादीनि छन्दसि ।२०।

छन्दसि विषये अयस्मयादीनि उभयसंज्ञानि स्युः । ससुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वन्न । अयस्मयं पात्रम् । भत्वाद्रुत्वन्न । छन्दसीति किम् । अयोमयम् ।

## बहुषु बहुवचनम् ।२१।

बहुत्वे बहुवचनं स्यात् । वृक्षाः । कथं दारा इति चेत्, अवयवबहुत्वस्यावयविन्यारोपात्, स तु शिष्टव्यवहाराद्बोध्यः ।

## द्व्येकयोर्द्विवचनैकवचने ।२२।

द्वित्वैकत्वयोर्द्विवचनैकवचने स्तः । वृक्षौ । वृक्षाः । 'एक वचन' मुत्सर्गतः करिष्यते, इतिभाष्योक्ते-रलिङ्गसंख्येभ्योऽप्येकवचनम् । उच्चैः । नीचैः ।

---

(१) देवदत्त शालायां ब्राह्मणा आनीयन्तामिति दृष्टान्तेन मतोरपि ग्रहणम् ।
(२) सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङाम् ।

## कारके ।२३।

अधिकारोऽयम् । प्रथमार्थे सप्तमी । तेनोत्तरत्रास्योपस्थितौ अपाये यद् ध्रुवं तत्कारकसंज्ञं स्यात्, तच्चापादानमित्येषोऽर्थः सम्पद्यते । ततो वक्ष्यमाणसंज्ञाभिरस्याः समावेशः । तेन स्तम्बेरमइत्यादौ सप्तमी, कारकत्वाद्गतिकारकोपपदादिति प्रकृतिस्वरश्च सिद्धः । कारक इति किम् । ब्राह्मणस्य [१] पुत्रं पन्थानं पृच्छति ।

## ध्रुवमपायेऽपादानम् ।२४।

अपाये [२] साध्ये यद् ध्रुवं तत्कारकं सदपादान [३] संज्ञं स्यात् । वृक्षात्पतति [४] । मेघाद्विद्योतते [५] । माथुराः पाटलिपुत्रकेभ्यः

---

(१) भाष्ये करोति क्रियां निर्वर्तयतीति व्युत्पत्तिदर्शनेन क्रियाजनकत्वं कारकत्वमित्यभ्युपगम्यते ब्राह्मणस्य तु न, पुत्रेणान्यथासिद्ध्या क्रियाजनकत्वाभावात् । अत एवैषां क्रियायामेवान्वयः । क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात् सर्वेषां कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वमितिदिक् विशेषस्तु तत्र तत्र द्रष्टव्यः ।

(२) अपायः संयोगपूर्वकोविभागः, स च न वास्तवसम्बन्धपूर्वको वास्तव एव, किन्तु बुद्धिपरिकल्पित सम्बन्धपूर्वको बुद्धिपरिकल्पितोऽपि । अधर्माज्जुगुप्सत इत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात् । वार्तिकञ्च नारम्भणीयमिति तदाशयः ।

(३) अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति । अपादानसमभिव्याहारे विभागोऽपि धात्वर्थइति बोध्यम् । ननु धावतोऽश्वात्पततीत्यादावध्रुवस्याश्वादेः कथमपादानत्वमितिचेन्न, तत्राध्रौव्यस्याविवक्षितत्वात् । सतोप्यविवक्षा भवति, अलोमिका, एडिकेत्यादिवत् । परस्परस्मान्मेषावपसरत इत्यादौ तु मेषपदोपात्तयोःक्रियाश्रयत्वविवक्षणात् कर्तृत्वम् परस्परपदोपात्तयोस्तयोरेव विभागाश्रयत्वविवक्षणादपादानत्वम् । व्यत्ययस्तु न, प्रयोगानुसारित्वाद्विवक्षायाः ।

(४) निर्दिष्टविषयं किञ्चिदुपात्तविषयन्तथा । अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते ॥१॥ क्रमेणोदाहरणानि मूले । वृक्षापादानविभागपूर्वकः संयोगानुकूलोव्यापारः पर्णवृत्तिः ।

(५) अत्र निस्सरणाङ्गे विद्योतने विद्युत् तिर्दर्तते ।

आढ्यतराः(१) ( जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् ) अधर्माज्जुगुप्सते । धर्माद्विरमति । धर्मात्प्रमाद्यति । कारकं सदिति सर्वत्र योजनीयम् ।

(२)

## भीत्रार्थानां भयहेतुः ।२५।

भयमाकुलीभावः । त्राणमनर्थ प्रतिघातः । बिभेत्यर्थानां त्रायत्यर्थानां च प्रयोगे भयहेतुरपादानसंज्ञः स्यात् । वृकेभ्यो बिभेति । आकुलो भवतीत्यर्थः । चौरेभ्यस्त्रायते । अनर्थं प्रतिहन्तीत्यर्थः । भयहेतुः किम् अरण्ये बिभेति ।

(३)

## पराजेरसोढः ।२६।

परापूर्वस्य जयतेः प्रयोगेऽसोढो योऽर्थः सोऽपादानसंज्ञः स्यात् । अध्ययनात्पराजयते । ग्लायतीत्यर्थः । असोढ इति किम् । शत्रून्पराजयते ।

## वारणार्थानामीप्सितः ।२७।

वारणार्थानां धातूनां प्रयोगे आप्तुमिष्टतमो योऽर्थः सोऽपादानसंज्ञः स्यात् । प्रवृत्तिविघातो [४] वारणम् । यवेभ्यो गां वारयति । ईप्सितः किम् । यवेभ्यो गां वारयति क्षेत्रे ।

## अन्तर्द्धौ येनादर्शनमिच्छति ।२८।

व्यवधाने सति यत्कर्तृकमात्मकर्मकं दर्शनाभावमिच्छति तद-

---

(१) तृतीयं यत्र क्रियावाचिपदं न श्रूयते केवलं क्रिया प्रतीयते ।

(२) अत्रापि वृकांश्चौरांश्च बुद्ध्या सम्प्राप्य तेभ्यो भयं त्राणञ्चेच्छन् निर्वतते, निवर्तयति वेति पूर्वसूत्रेणैव सिद्धमिति ।

(३) अकर्मकत्वात् षष्ठ्यां प्राप्तायां वचनम् । अत्रापि पूर्ववद्बोध्यम् ।

(४) भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापारः । ईप्सितत्वञ्च वारणार्थधात्वर्थफलाश्रयत्वम् । ततो भक्षणसंयोगजनकव्यापाराभावाश्रयत्वाद्यवानामेवापादानत्वम् । अनुकूलात्पूर्वभागे फलं ज्ञेयं विचक्षणैरिति वचनात् ।

पादानसंज्ञः स्यात् । उपाध्यायादन्तर्द्धत्ते । उपाध्यायो मां मां द्राक्षीदिति बुद्धया तिरोभवतीत्यर्थः । अन्तर्द्धौ किम् । चौरान्न [१] दिदृक्षते । इच्छतिग्रहणं किम् । अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ।

## आख्यातोपयोगे ॥ २९ ॥

उपयोगे नियमपूर्वको विद्यास्वीकारः । तस्मिन् साध्ये आख्याताऽपादानसंज्ञः स्यात् । उपाध्यादधीते । उपयोगे किम् नटस्य शृणोति ।

## जनिकर्तुःप्रकृतिः ॥ ३० ॥

जायमानस्य प्रकृतिर्योऽर्थः सोऽपादानसंज्ञः स्यात् । पुत्रात्प्रमोदो जायते । बीजादङ्कुरो जायते ।

(२)

## भुवः प्रभवः ॥ ३१ ॥

भुवः कर्तुः प्रभवो योऽर्थः सोऽपादानसंज्ञः स्यात् । हिमवतो गङ्गा प्रभवति । तत्र प्रथमं प्रकाशत इत्यर्थः ।

(३)

## कर्मणा यमभिप्रैति स सम्प्रदानम् ॥ ३२ ॥

कर्मणा करणभूतेन कर्ता यं सम्बन्धुमभिप्रैति स सम्प्रदानसंज्ञः स्यात् । उपाध्याय गां ददाति । कर्मणा किम् । कर्मणोऽप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्यैव स्यात । कर्मसंज्ञा तु पर्यायेण भवि-

---

[१] चौरकर्मकदर्शनेच्छाऽभाव इत्यर्थः । सच चौरकर्तृक स्वदर्शनाभावायैवेति प्राप्तिः ।

[२] जायमानप्रभवतोः प्रकृतिप्रभवाभ्यामविभागात् 'ध्रुवमपाय' इत्यप्राप्ता संज्ञा विधीयते । भाष्ये तु, अन्याश्चान्याश्च जायन्ते, अन्याश्चान्याश्च प्रादुर्भवन्तीति खण्डिते ।

[३] संबन्धुमितिशेषः, अभिप्रैति, इच्छतीत्यर्थः . लक्ष्येउपाध्यायसम्प्रदानकं गोकर्मकं दानमितिबोधः । अभिप्रायग्रहणसामर्थ्याद्यमभिप्रैति, यञ्चाभि प्रैष्यति यञ्चाभिप्रागादाभि मुख्यमात्रे सर्वत्रसिद्धं भवति ।

ष्यति । यंस ग्रहणं किम् । कर्तुरेव स्यात् । कर्तृसंज्ञा त्वकर्मकविषये च-रितार्था (क्रियाग्रहणं (१) कर्त्तव्यम्) युद्धाय सन्नह्यते । सन्नहनक्रियया युद्धविषयकं निश्चयं करोतीत्यर्थः । (कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा ) पशुना रुद्रं यजते । पशुं रुद्राय ददातीत्यर्थः ।

## रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥

रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः सम्प्रदानसंज्ञः स्यात् । देवदत्ताय रोचते, स्वदते, वा मोदकः [२]। प्रीयमाणः किम् । देवदत्ताय रोचते मोदकः पथि ।

## श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३४ ॥

श्लाघादीनां प्रयोगे ज्ञीप्स्यमानो योऽर्थः स सम्प्रदानसंज्ञः स्यात् । देवदत्ताय श्लाघते ह्नुते । तिष्ठते । शपते वा । श्लाघादेः स्तुत्यादिना बोधनमर्थः । स्तुत्याऽऽत्मानुरागं देवदत्तं बोधयतीत्यर्थः। स्तुतिस्तु देवदत्तस्यैव। एवं ह्नुत्या, स्थित्या, शपनेन च देवदत्तं स्वानुरागं बोधयतीत्यर्थः। ज्ञीप्स्यमान इति किम् । देवदत्ताय श्लाघते पथि ।

## (३) धारेरुत्तमर्णः ॥ ३५ ॥

धारयतेः प्रयोगे उत्तमर्णो योऽर्थः सः सम्प्रदानसंज्ञः स्यात् ।

---

(१) कर्मशब्दस्य क्रियापरत्वमप्याश्रित्य खण्डितञ्चैतद्भाष्ये । प्रकारस्तु भाष्ये द्रष्टव्यः ।

(२) देवदत्तनिष्ठप्रीत्यनुकूलप्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्ता यत्किञ्चिद्विषयकप्रीत्यनुकूलव्यापाराश्रयोऽभिलषतिकर्तेति । प्रीतिव्यधिकरणतदनुकूलो व्यापारो रुचेरर्थः । यत्किञ्चिद्विषयकप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारोऽभिलषतेरर्थ इत्यभिलषते रुच्यर्थत्वाभावः ।

(३) धृङ्, अवस्थाने ण्यन्तः, उत्तमर्णो धनस्वामी ध्रियमाणं स्वरूपेणावतिष्ठमानं शतं सः प्रयुङ्क्त इत्यर्थः ।

देवदत्ताय शतं धारयति यज्ञदत्तः । उत्तमर्णः किम् । देवदत्ताय शतं धारयति ग्रामे ।

## स्पृहेरीप्सितः ॥ ३६ ॥

स्पृहेः प्रयोगे आप्तुमिच्छाभूतो योऽर्थः स सम्प्रदानसंज्ञः स्यात् । पुष्पेभ्यः स्पृहयति । प्रकर्षविवक्षायान्तु—पुष्पाणि स्पृहयति । ईप्सित इति किम् । पुष्पेभ्यो वने स्पृहयति ।

(२)

## क्रुधद्रुहेर्ष्याऽसूयार्थानां यम्प्रति कोपः ॥ ३७ ॥

क्रुधाद्यर्थानां धातूनां प्रयोगे यम्प्रति कोपः स सम्प्रदानसंज्ञः स्यात् । क्रोधोऽमर्षः । द्रोहोऽपकारः । ईर्ष्याऽक्षमा । गुणेषु दोषारोपणमसूया । कोपप्रभवाः क्रुधादयो गृह्यन्ते । तेन सामान्येन विशेषणं यम्प्रतिकोपइति । देवदत्ताय क्रुध्यति । द्रुह्यति । ईर्ष्यति । असूयति वा यम्प्रति कोपइति किम् । शिष्यमीर्ष्यति । कालात्ययं कुर्वन्तन्न क्षमते ।

## क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥

सोपसर्गयोरनयोर्यम्प्रति कोपः स सम्प्रदानसंज्ञः स्यात् । पूर्वसूत्रापवादः । देवदत्तमभिक्रुध्यति अभिद्रुह्यति वा ।

## राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥

राधीक्ष्योः प्रयोगे यत्सम्बन्धी विविध प्रश्नः स कारकं सत् सम्प्रदानसंज्ञः स्यात् राधीक्ष्योर्विषयपर्यालोचनमर्थः । प्रश्नविषयस्य कर्मणो धात्वर्थेनोपसंग्रहादकर्मकत्वम् । देवदत्ताय राध्यति, ईक्षते वा । देवदत्तसम्बन्धिशुभाशुभं पर्यालोचयतीत्यर्थः ।

---

(१) वाकूचक्षुरादिविकारानुमेयो रूढकोप एव क्रोधः नह्यकुपितः क्रुध्यतीति भाष्यात् । तस्मात्कुप्यति कस्मैचिदित्यादिरसाधुरेव । क्रुधद्रुहोरकर्मकतरा,— कारकशेषत्वान्नटस्य शृणोतीति वत् षष्ठ्यां प्राप्तायामितरयोस्तु सकर्मकत्वाद्द्वितीयायां प्राप्तायां वचनम् ।

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ ४० ॥

प्रतिपूर्वस्याङ् पूर्वस्य च शृणोतेः पूर्वव्यापारस्य कर्त्ता सम्प्रदान संज्ञः स्यात् । विप्राय गां प्रतिशृणोति । आशृणोति वा । विप्रेण मह्यं गां देहीति पूर्वं प्रवर्तितः प्रतिजानीत इत्यर्थः । प्रयोजकत्वाद्धेतुसंज्ञायां प्राप्तायां वचनम् ।

## अनुप्रतिगृणश्च ॥ ४१ ॥

अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः पूर्वव्यापारस्य कर्ता सम्प्रदान संज्ञः स्यात् । अनुप्रतिपूर्वो गृणातिः शंसितुः प्रोत्साहने वर्तते । होत्रेऽनुगृणाति । प्रतिगृणाति वा । होता प्रथमं शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ।

## साधकतमं करणम् ॥ ४२ ॥

क्रियासिद्धौ यत्प्रकृष्टोपकारकं तत् कर्मसंज्ञं स्यात् । क्रियायः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते (१) यदा यत्र करणं तत्तदा स्मृतम् । काष्ठैः पचति । असिना छिनत्ति । ननु कारकाधिकारादेव साधकत्वे लब्धे पुनः साधकग्रहणं साधकतमपरं विज्ञास्यते, किन्तमपेतिचेन्न, कारकाधिकारे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते । इतिज्ञापनार्थं । तेनाधिकरणेति । महासंज्ञयाऽऽधारे लब्धे आधारग्रहणात्सर्वावयवव्याप्तो य आधारस्तत्रैव स्यात् । न तु गङ्गायां गावइत्यादौ । उक्तज्ञापकात्तु सर्वत्र सिद्धं भवति ।

## दिवः कर्म च ॥ ४३ ॥

दिवः साधकतमं कारक सत् कर्मसंज्ञं स्य चात्करणसंज्ञम् । अक्षैः, अक्षान् वा दीव्यति । चेन संज्ञयोः समावेशः तेन मनसा दीव्य-

---

(१) विवक्ष्यते, इत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वमस्तीत्युक्तम् । आह च, वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितं । स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ।

तीति मनसा (१) देव इत्यत्रकर्मण्यण्, करणे तृतीया चेत्युभयं सिद्धम् । अक्षैर्देवयतेइत्यादौ परस्मैपदञ्च (२) न ।

## परिक्रयणेसम्प्रदानमन्यतरस्याम् । ४४ ।

परिक्रयणे (३ साधकतमं कारकं सत् सम्प्रदानसंज्ञं वा स्यात् । शताय, शतेन वा परिक्रीतः ।

## आधारोऽधिकरणम् ॥ ४५ ॥

कर्तृकर्मद्वारा (४) क्रियाया आधारः कारकमधिकरणसंज्ञं स्यात् । त्रिधा सः । औपश्लेषिकं, (५) वैषयिकं, मभिव्याप (६) कञ्चेति । गङ्गायां गावः । धर्मे प्रवृत्तिः । तिलेषु तैलम् ।

## अधिशीङ्स्थासां कर्म ॥ ४६ ॥

अधिपूर्वाणां शीङ्स्थासामाधारः कारकं कर्मसंज्ञं स्यात् । अधिशेते । अधितिष्ठति । अध्यास्ते वा, खट्वां देवदत्तः ।

(२)

## अभिनिविशश्च ॥ ४७ ॥

अभिनिपूर्वस्य विशतेराधारः कारकं, कर्मसंज्ञं स्यात् । अभिनिवेशः

---

( १ ) मनसःसंज्ञायामिति तृतीयाया अलुक् ।

( २ ) अणावकर्मकादित्यादिना ।

( ३ ) नियतकालं वेतनादिना स्वीकरणं परिक्रयणम् ।

( ४ ) साक्षात्क्रियाधारयोः कर्तृकर्मसंज्ञाभ्यां बाधात् तदाधारस्य ग्रहणमिति ।

( ५ ) उप(समीपे) श्लेषः(सम्बन्धः) तत्कृतमौपश्लेषिकम् ।

( ६ ) सर्वावयवेन व्यापकमभिव्यापकं, तद्भिन्नं वैषयिकम् ।

( ७ ) अल्पाच्तरस्य नेः पूर्वप्रयोगाकरणमीदृशानुपूर्वीसमुदायग्रहणार्थम्. तेनेह न । निविशते यदि शूकशिखा पदे ।

आग्रहः । अभिनिभिशते धर्मम् । धर्मविषयकाग्रहवानित्यर्थः एष्वर्थेष्वभिनिविष्टानामिति भाष्यप्रयोगात् क्वचिन्न, तेन पापेऽभि निवेशइत्यादि सिद्धम् ।

## उपान्वध्याङ्वसः । ४७ ।

उपान्वध्याङ्पूर्वस्य वसतेराधारः कर्मसंज्ञः स्यात् । उपवस अनुवसति । अधिवसति । आवसति, वा ग्रामं सेना । ( वसेरश स्य (१) प्रतिषेधः ) ग्रामे उपवसति ।

## कर्तुरीप्सिततमं कर्म ॥ ४९ ॥

कर्तुः क्रियया आप्तुमतिशयेनेच्छाविषयीभूतं यत्तत्कारकं कर्मसंज्ञं स्यात् । तच्च त्रिविधं, निर्वर्त्यश्च, विकार्यश्च, प्राप्यञ्च घटं करोति । विकार्यमपि द्वेधा, प्रकृत्युच्छेदसंभूतम्, प्रकृत्यनुवृ गुणान्तरोत्पत्त्योपलक्षितञ्च, यथा काष्टानि भस्म करोति । व्रीहि प्रोक्षति । यत्र क्रियाकृतो विशेषो न, तत्प्राप्यसे वेदमधी इत्यादौ कर्तुरितिकिम् । माषेष्वश्वं बध्नाति (२) । कर्मणईप्सि माषा न कर्तुः। तमप् ग्रहणं किम् । पयसौदनं भुङ्क्ते । पुनः क ग्रहणमाधारनिवृत्यर्थम् । अन्यथेहैव स्यात्, गेहं प्रविशतीति ।

## तथायुक्तं चानीप्सितम् । ५० ।

ईप्सिततमवत् क्रियया युक्तमनीप्सितमपि कारकं कर्मसं स्यात् । तद्द्विविधं, द्वेष्यमुदासीनं च, ओदनं भुञ्जानो वि आसक्ते । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ।

---

( १ ) अश्यर्थस्य वाचको यो वसिस्तस्येत्यर्थः । मशकार्थो धूमइतिवन्निवृत्ति ग्रामेऽसौ वसंस्त्रिरात्रमुपवसतीत्येवमध्याहारं कृत्वा प्रत्याख्यातमप्येतत् ।

( २ ) माषेषु प्रसक्तमश्वमन्यत्र बध्नातीत्यर्थः ।

## अकथितञ्च ॥ ५१ ॥

अपादानादिविशेषसंज्ञाभिरकथितं कारकं सत्कर्मसंज्ञं स्यात् । दुहियाचिरुधिप्रच्छिभिक्षिचिञामुप (१) योगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना । गां दोग्धि पयः । पौरवं गां याचते । अन्ववरुणद्धि गां व्रजम् । माणवकं पन्थानं पृच्छति । पौरवं गां भिक्षते । वृक्षमवचिनोति फलानि । पुत्रं धर्मं ब्रूते । शास्ति वा ॥ प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ अजा नीयते ग्रामम् । दुह्यते गौः पयः । गम्यते यज्ञदत्तो ग्रामं देवदत्तेन । नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः । चकारेण जयत्यादीनां संग्रहः । गत्यर्थग्रहणमुत्तरसूत्रोपात्तधातूपलक्षणम् । अजां नयति ग्रामम् । भारं वहति ग्रामम् । हरति वा । देवदत्तं ग्रामं गमयतीत्यादि (कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ) ।

क्रोशमास्तेकारेय श्चाकर्मणाम् ) कुरून् स्वपिति ।

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥ ५२ ॥

गत्याद्यर्थानांशब्दकर्मकाणामकर्मकाणाञ्चाणौ यः कर्ता स णौ-कर्मसंज्ञः स्यात् । गच्छति देवदत्तः । गमयति देवदत्तम् । बुध्यते देवदत्तः । बोधयति देवदत्तम् । अश्नाति देवदत्तः । आशयति । देवदत्तम् अधीते देवदत्तः । अध्यापयति देवदत्तम् । आस्ते देवदत्तः । आसयति देवदत्तम् । (जल्पतिप्रभृतीनामुपसंख्यानम् ) जल्पति देवदत्तः । जल्पयति देवदत्तमित्यादि (दृशेश्च ) पश्यति रूपतर्कः । दर्शयति रूपतर्कम् । (आदिखादिनीवहीनां प्रतिषेधः) अत्ति देवदत्तः । आदयति देवदत्तेन । ( सर्वमेव प्रत्यवसानार्थकार्यमदेर्नेत्यपरः ) इदमेषां जग्धम्

---

( १ ) अपूर्वविधाने दुह्यादीनां मुख्यकर्मणो निमित्तं यत् तदकीर्तितं कविनाऽऽचरितम् । ब्रुविशास्योः प्रधान कर्मणा यत्सम्बध्यते तदपीत्यर्थः ।

(वहेरनियन्तृकर्तृकस्य) नियन्तृकर्तृकस्य तु वहन्ति बलीवर्दाः। वाहयन्ति बलीवर्दान्। (भक्षेरहिंसार्थस्य) भक्षयति पिण्डीं देवदत्तः। भक्षयति पिण्डीं देवदत्तेन। हिंसार्थस्य तु भक्षयन्ति यवान् बलीवर्दाः। भक्षयन्ति यवान् बलीवर्दान्। येषां कालाध्वभिन्नं कर्म न संभवति तेऽत्राकर्मकाः। तेन कालाध्वकर्मसम्भवेऽपि भवति-वासमासयति देवदत्ताम्। अविवक्षितकर्मकेषु च न भवति। पाचयति देवदत्तेनेत्यादौ। सूत्रे बुद्धिग्रहणेन ज्ञानसामान्यार्थानामेव ग्रहणम्, दृशेश्चेति लिङ्गात्। तेन स्मरति जिघ्रतीत्यादीनां न स्मरति देवदत्तः। स्मारयति देवदत्तेन। एषां किम्। पचति देवदत्तः। पाचयति देवदत्तेन। अणौ किम्। गमयन्तं देवदत्तं विष्णुमित्रः प्रयुङ्क्ते। गमयति देवदत्तेन विष्णुमित्रः।

## हृक्रोरन्यतरस्याम् ॥ ५३ ॥

हृक्रोरणौ यः कर्ता स णौ वा कर्मसंज्ञः स्यात्। प्राप्ताप्राप्तविभाषेयम्। अभ्यवहरति छात्रः। अभ्यवहारयति छात्रम् छात्रेण वा प्रत्यवसानार्थत्वात् प्राप्तिः। विकुर्वते छात्राः। विकारयति छात्रान्, छात्रैर्वा। अकर्मकत्वात्प्राप्तिः। अन्यत्राप्राप्तिः (वाबचने अभिवादिदृशोरात्मनेपद उपसंख्यानम्) अभिवदति देवदत्तः। अभिवादयते देवदत्तम् देवदत्तेन वा। पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् भृत्यैर्वा राजानम्।

## स्वतन्त्रः कर्ता ॥ ५४ ॥

क्रियासिद्धौ स्वातन्त्र्येण विवक्षितो (१) योऽर्थः स कर्तृसंज्ञः स्यात्। देवदत्तो गच्छति। गमधातूपात्तव्यापाराश्रयत्वाद्देवदत्तस्य कर्तृत्वम्। प्रयोजकेऽप्येतद्भवति स्वव्यापारे तस्यापि स्वतन्त्रत्वात्।

## तत्प्रयोजको हेतुश्च ॥ ५५ ॥

स्वतन्त्रकर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात्। गमयति

(१) कारकाणां विवक्षाधीनत्वात्।

देवदत्त [१] यज्ञदत्तः । संज्ञासमावेशार्थश्चकारः, हेतुत्वात्तद्व्यापारे हेतुमति चेति णिच् । कर्तृत्वात्कर्तरि लकारः ।

## प्राग्रीश्वरान्निपाताः ॥ ५६ ॥

अधिरीश्वर इत्यतः प्राङ् निपाता इत्यधिक्रियते । प्राग् ग्रहणं संज्ञासमावेशार्थं तेन पूर्वं निपातसंज्ञाः सन्तो गत्यादिसंज्ञाः स्युः । तत्फलं संज्ञासमावेश एव । निपातत्वादव्ययत्वम् । अव्ययत्वाच्च सुपो लुक् । रेफविशिष्ट ग्रहणं व्याप्तिन्यायेन 'ईश्वरे तोसुन्कसुनौ' वित्यस्यावधित्वं मा भूदिति । अव्ययीभावस्याव्ययसंज्ञारम्भात् प्रत्यासत्त्याश्रयणे तु रेफो न कर्तव्य इति भाष्ये स्थितम् ।

(२)

## चादयोऽसत्वे ॥ ५७ ॥

चादयो निपातसंज्ञाः स्युर्न तु सत्वे । लोधं नयन्ति पशु मन्यमानाः । पशु इति सम्यगर्थे । असत्वे किम् । पशुर्वै पुरुषः । प्रसज्यप्रतिषेधः किम् ! विप्रातीति, विप्रः । क्रियाद्रव्यसङ्घातवचनोऽयम् ।

(३)

## प्रादयः ॥ ५८ ॥

प्रादयोऽसत्त्ववचना निपातसंज्ञा स्युः । एकयोगे सति तु क्रियायोगएव गत्युपसर्गसंज्ञावन्निपातसंज्ञा स्यात् । तदभावे प्राचार्यइत्यादौ न स्यात् । निपातसंज्ञाऽभावे पूर्वपदप्रकृतिस्वरो न स्यात ।

---

(१) गमनानुकूलव्यापाराश्रयत्वात् देवदत्तस्य कर्तृत्वम् । तदनुकूलव्यापाराश्रयत्वाच्च यज्ञदत्तस्य ।

(२) सत्वमिह द्रव्यम् । तच्च:-वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः । इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमित्युच्यते । एवञ्चेत्तर्हि गुणेऽतिव्याप्तिः । अतो भेद्यत्वेन विशेष्यतया योऽर्थो विवक्षितः सोऽर्थो द्रव्यमित्युच्यते । क्रियाद्रव्यसमुदायस्यान्यत्वाद् द्रव्यादन्यस्मिन्नर्थे वर्तते विप्रशब्दः ।

(३) प्र, परा, अप, सम्, अनु अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप, ॥ एते प्रादयः । सान्तयोः फलं निरयते, दुरयते रुत्वस्यासिद्धत्वाल्लत्वन्न ।

## उपसर्गाः क्रियायोगे ॥ ५९ ॥

क्रियायोगे प्रादय उपसर्गसंज्ञाः स्युः । प्राचर्छति । पलायते । उपसर्गत्वाद् (१) वृद्धिलौ । क्रियायोगे किम् । प्रनायको देशः । (मरुच्छब्दस्योपसंख्यानम् ) मरुद्भिर्दत्तो मरुत्तः (२) श्रच्छब्दस्योपसंख्यानम् ) श्रद्धा ।

## गतिश्च । ६० ।

प्रादयः क्रियायोगे गतिसंज्ञाः स्युः । उपसर्गसंज्ञया सह समावेशार्थश्चकारः । तेन प्रणयमित्यादावुपसर्गत्वाण्णत्वं, गतित्वात्कृदुत्तरपदप्रकृतिस्वरश्च सिद्ध्यति । (कारिकाशब्दस्योपसंख्यानम् ) कारिकाकृत्य । (पुनश्चनसौ छन्दसि ) पुनरुत्स्यूतं वासो देयम् । उशिगदूतश्चनो हितः । यत्क्रियायुक्तास्तत्प्रति गत्युपसर्गसंज्ञा भवन्तीति वक्तव्यम् ) विगताः सेचका अस्मात्, विसेचकः । प्रगता नायका अस्मात्, प्रनायकः । उपसर्गत्वाभावात् षत्वणत्वे न ।

## ऊर्यादिच्विडाचश्च ॥ ६१ ॥

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । ऊरीभूय । शुक्लीकृत्य । शुक्लीभूय । पटपटाकृत्य । पटपटाभूय ।

## अनुकरणं चानितिपरम् । ६२ ।

अनितिपरमनुकरणं क्रियायोगे गतिसंज्ञं स्यात् । खाट्कृत्य । अनितिपरं किम् । खाडितिकृत्वा निरष्ठीवत् । उपसर्गत्वे सतिधातोः प्राक् प्रयोगः स्यात् ।

## आदरानादरयोः सदसती ॥ ६३ ॥

आदरानादरयोरर्थयोः सदसच्छब्दौ क्रियायोगे गतिसंज्ञौ स्तः

(१) उपसर्गादृतिधाताविति वृद्धिः । उपसर्गस्यायताविति लत्वम् ।

(२) तत्वे कर्तव्ये एव उपसर्गसंज्ञाऽइष्यते तेनान्यकार्याणि नेत्यन्यत्र विस्तरः ।

प्रीतिपूर्वकः प्रत्युत्थानादिरादरः । अवज्ञया प्रत्युत्थानाद्युपेक्षा त्वनादरः । सत्कृत्य । असत्कृत्य । अनयोः किम् । सत्कृत्वा । असत्कृत्वा । शोभनमशोभनञ्च कृत्वेत्यर्थः ।

## भूषणेऽलम् ॥ ६४ ॥

भूषणेऽर्थेऽलंशब्दः क्रियायोगे गतिसंज्ञः स्यात् । अलङ्कृत्य । भूषणे किम् । अलङ् कृत्वौदनं गतः । पर्याप्तमित्यर्थः । अनुकरणमित्यादयस्त्रयो योगाः स्वभावतः कृञ् विषयाः ।

## अन्तरपरिग्रहे ॥ ६५ ॥

अपरिग्रहे गम्येऽन्तरशब्दः क्रियायोगे गतिसंज्ञः स्यात् । अन्तर्हत्य । मध्येहत्वेत्यर्थः । अपरिग्रहे किम् । अन्तर्हत्वा मूषिकां श्येनो गतः, परिगृह्य गतः इत्यर्थः ( अन्तःशब्दस्याङ् किविधिसमासणत्वेषूपसंख्यानम् ) अन्तर्द्धा । अन्तर्द्धिः । अन्तर्हत्य । अन्तर्हण्यात् ।

## कणेमनसी श्रद्धाप्रतीघाते ॥ ६६ ॥

श्रद्धाप्रतीघातेऽर्थे वर्तमानौ कणेमनस्शब्दौ गतिसंज्ञौ स्तः । कणेहत्य, मनोहत्य वा पयः पिबति । कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये वर्तते, मनस् शब्दोऽपि तत्रैव, अतिशयेनाभिलष्य तन्निवृत्तिपर्यन्तं पिबतीत्यर्थः । तत्र श्रद्धाया अपगमात् प्रतीघातो धातुगतिसमुदाय गम्यः । श्रद्धाप्रतीघाते किम् । कणेहत्वा । सूक्ष्मतण्डुलावयवे हत्वेत्यर्थः । मनोहत्वा । मनस्शब्दश्च तसि ।

## पुरोऽव्ययम् ॥ ६७ ॥

अव्ययं पुरःशब्दः क्रियायोगे गतिसंज्ञः स्यात् । पुरस्कृत्य । नमस्पुरसोरिति सत्वम् । अव्ययं किम् । पुरःकृत्वा ।

## अस्तञ्च ॥ ६८ ॥

अस्तमित्यव्ययं क्रियायोगे गतिसंज्ञं स्यात् । अस्तंगत्य । अव्ययं किम् । अस्तं कृत्वा काण्डम् । क्षिप्तमित्यर्थः

## अच्छ गत्यर्थवदेषु ॥ ६९ ॥

एषां योगे अच्छेत्यव्ययं गतिसंज्ञं स्यात्। अच्छगत्य। अच्छोद्य। अभिमुखं गत्वा, उक्त्वा चेत्यर्थः। अव्ययं किम्? जलमच्छङ् गच्छति, निर्मलमित्यर्थः।

## अदोऽनुपदेशे ॥ ७० ॥

अनुपदेशेऽदः शब्दो गतिसंज्ञः स्यात्। अदःकृत्य। अदःकृतम्। स्वयं पर्यालोच्य, पर्यालोचितं वा। अनुपदेशे किम्। परम्प्रति कथने मा भूत्। अदः कृत्वा गतः। परमुपदिश्येत्यर्थः।

## तिरोऽन्तर्द्धौ ॥ ७१ ॥

अन्तर्द्धौ तिरस् शब्दः क्रियायोगे गतिसंज्ञः स्यात्। तिरोभूय। अन्तर्द्धौ किम्। तिरोभूत्वा स्थितः। पार्श्वतो भूत्वेत्यर्थः।

## विभाषा कृञि ॥ ७२ ॥

प्राप्तविभाषेयम्। अन्तर्द्धौ तिरस्शब्दः कृञो योगे वा गतिसंज्ञः स्यात्। तिरःकृत्य। तिरस्कृत्य। तिरसोऽन्यतरस्यामिति सत्वविकल्पः। पक्षे तु तिरःकृत्वा काष्ठमित्येव। तत्र गतिग्रहणानुवृत्तेः।

## उपाजेऽन्वाजे ॥ ७३ ॥

उपाजेऽन्वाजेशब्दौ एदन्तौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य बलाधाने वर्तेते। उपाजेन्वाजेशब्दौ कृञो योगे विभाषा गतिसंज्ञौ स्तः। उपाजेकृत्य। उपाजेकृत्वा। अन्वाजेकृत्य। अन्वाजेकृत्वा।

## साक्षात्प्रभृतीनि च ॥

साक्षात्प्रभृतीनि कृञ्योगे वा गतिसंज्ञानि स्युः। [ साक्षात्प्रभृतिषु च्व्यर्थवचनम् ] असाक्षात्साक्षात्कृत्वा, साक्षात्कृत्य। साक्षात्कृत्वा, वा। लवणङ्कृत्य। लवणङ् कृत्वा। मकारान्तत्वञ्च गतिसं

ज्ञासन्नियुक्तं निपात्यते "लवणीकृत्ये" ति तु ऊर्यादिच्विडाचश्चेति बोध्यम् ।

## अनत्याधान उरसिमनसी ॥ ७५ ॥

अनत्याधानेऽर्थे उरसिमनसिशब्दौ कृञोयोगे वा गतिसंज्ञौ स्तः । उरसिकृत्य । उरसिकृत्वा । अभ्युपगम्येत्यर्थ । मनसिकृत्य । मनसिकृत्वा । निश्चित्येत्यर्थः । अत्याधानमुपश्लेषस्तत्र न, उरसि कृत्वा पाणिं शेते ।

## मध्ये पदे निवचनेच ॥ ७६ ॥

मध्ये पदे निवचने, एते त्रयः कृञ्योगे वा गतिसंज्ञाः स्युरनत्याधाने । मध्येकृत्य । मध्ये कृत्वा । पदेकृत्य । पदे कृत्वा । निवचनेकृत्य । निवचने कृत्वा । निवचनं वचनाभावः । अनत्याधाने किम् । पदे कृत्वा शिरः शेते ।

## नित्यं हस्तेपाणावुपयमने ॥ ७७ ॥

उपयमने हस्तेपाणौशब्दौ कृञो योगे नित्यं गतिसंज्ञौ स्तः । हस्ते-कृत्य, पाणौकृत्य महास्त्र णि । स्वीकृत्येत्यर्थः । उपयमनेकिम् हस्ते कृत्वा सुवर्णं गतः ।

## प्राध्वं बन्धने ॥ ७८ ॥

बन्धनेऽर्थे प्राध्वमित्यव्ययं कृञो योगे नित्यं गतिसंज्ञं स्यात् । प्राध्व-ङ्कृत्य । बन्धनेनाऽऽनुकूल्यं कृत्वेत्यर्थः । बन्धनेकिम् ! प्राध्वं कृत्वा । प्रार्थनादिनाऽऽनुकूल्यं कृत्वेत्यर्थः ।

## जीविकोपनिषदावौपम्ये ॥ ७९ ॥

जीविकोपनिषदौ शब्दौ, औपम्येऽर्थे कृञो योगे गतिसंज्ञौ स्तः । जीविका जीवनोपायः । जीविकामिव कृत्वा, जीविकाकृत्य उपनिषदमिव कृत्वा, उपनिषत्कृत्य । औपम्ये किम् ! जीविकां कृत्वा ।

## ते प्राग्धातोः ॥ ८० ॥

प्रादय उपनिषदन्ता धातोः प्राक् सन्तो गत्युपसर्गसंज्ञाः स्युः ।

एवञ्च छन्दसि परव्यवहितवचनमनितिपरवचञ्च न कार्य्यमिति साध्ये स्थितम् ।

## छन्दसि परे ऽपि ॥ ८१ ॥

## व्यवहिताश्च ॥ ८२ ॥

स्पष्टार्थाविमौ । हरिभ्यां याह्योक आ । आमन्द्रैरिन्द्र हरिभिर्याहि ।

## कर्मप्रवचनीयाः ॥ ८३ ॥

रीश्वरात्प्रागिदमधिक्रियते । कर्मप्रवचनीया इति महासंज्ञाकरणं, कर्म, क्रियां (१) प्रोक्तवन्तः, कर्मप्रवचनीया इत्यन्वर्थसंज्ञा विज्ञानार्थं, शाकल्यस्य संहितामनु प्रावर्षत् । अत्र वाक्ये अप्रयुज्यमानस्य श्रुधातोर्गम्यमाना या निशमनक्रिया तत्कृतो वर्षसंहितयोर्हेतुहेतुमद्भावलक्षणसम्बन्धोऽनुना प्रतीयते इति नास्ति वर्षक्रियायोगोऽनोः ।

(२)

## अनुर्लक्षणे ॥ ८४ ॥

लक्षणेऽर्थे द्योत्येऽनुः कर्मप्रवचनीयसंज्ञः शाकल्यस्य संहितामनुप्रावर्षदित्यत्र हेतुभूत संहितोपलक्षितं वर्षणमित्यर्थात्, हेतु भूते लक्षणे परत्वात्तृतीया प्राप्ता, पुनः संज्ञाविधानसामर्थ्याद् द्वितीयैव भवति ।

## तृतीयाऽर्थे ॥ ८५ ॥

तृतीयार्थे द्योत्येऽनु कर्मप्रवचनीयसंज्ञः स्यात् । तृतीयार्थशब्देन साहित्यं लक्ष्यते । नदीमन्ववसिता सेना । नद्या सम्बद्धेत्यर्थः ।

---

(१) प्रयुज्यमाने क्रियापदे क्रियाविशेषं द्योतितवन्त इत्यर्थः ।

(२) ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम् । ज्ञानजन्यज्ञानविषयत्वं लक्ष्यम् । शाकल्यसंहिताभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणमिति बोधात् ।

## हीने ॥ ७६ ॥

हीनेऽर्थे द्योत्येऽनुः कर्मप्रवचनीयसंज्ञः स्यात् । अन्वर्जुनं कर्णः । अर्जुनप्रतियोगिकापकर्षरूपसम्बन्धवानित्यर्थः । द्वितीया तृत्कृष्टादेव, शक्तस्वभावात् ।

## उपोऽधिके च ॥ ७७ ॥

अधिके हीने चार्थे उपः कर्मप्रवचनीयसंज्ञः स्यात् । खारीतोऽधिको द्रोण इत्यर्थः यस्मादधिकमिति सप्तमी । हीने, उपार्जुनं कर्णः ।

## अपपरी वर्जने ॥ ७८ ॥

वर्जने द्योत्ये अपपरी कर्मप्रवचनीयसंज्ञौ स्तः । अप त्रिगर्तेभ्यो वृष्टो देवः । परि त्रिगर्तेभ्यो वृष्टो देवः । पञ्चम्यपाङ्परिभिरिति पञ्चमी । वर्जने किम् । ओदनं परि षिञ्चति । सर्वत इत्यर्थः । उपसर्गत्वात् षत्वम् ।

## आङ् मर्यादावचने ॥ ७९ ॥

मर्यादावचने द्योत्ये आङ् कर्मप्रवचनीयसंज्ञः स्यात् । आ पाटलिपुत्रकेभ्यो वृष्टो देवः । आ बालेभ्यः पाणिनेर्यशः । मर्यादावचने किम् । ईषदर्थे क्रियायोगे च मा भूत् ।

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥

लक्षणादिषु विषयभूतेषु प्रतिपर्यनवः कर्मप्रवचनीयसंज्ञाः स्युः । लक्षणे—वृक्षम्प्रति पर्यनु वा विद्योतते विद्युत् । कञ्चित्प्रकारं प्राप्त इत्थम्भूतस्तदाख्याने, यथा-साधुर्देवदत्तो मातरम्प्रति, पर्यनु वा । अत्र मां प्रति, पर्यनु (वा) स्यात् । उपसर्गत्वाभावात्षत्वन्न । यो मम भागः स्यादित्यर्थः । स्वस्वामिभावो द्वितीयार्थः । व्याप्तुमिच्छा वीप्सा (१) भूतं भूतम्प्रति, पर्यनु वा रक्षति प्रभुः । सकलभूत-

(१) व्यापनेच्छेत्यर्थः । व्यापनं व्याप्तिः सा चात्र भूतवृक्षादिद्रव्याणां रक्षणसेकादिभिः साकल्येन सम्बन्धरूपा ।

मित्यर्थः। वृक्षं वृक्षम्प्रति सिञ्चति। उपसर्गसंज्ञाविरहात् षत्वन्न। परिशब्दयोगे पञ्चमी तु न। तत्र साहचर्याद्वर्जनार्थस्य ग्रहणात्।

## अभिरभागे ॥ ९१ ॥

भागवर्जे लक्षणादौ द्योत्ये अभिः कर्मप्रवचनीयसंज्ञः स्यात्। वृक्षमभि द्योतते। साधुर्देवदत्तो मातरमभि। वृक्षं वृक्षमभिसिञ्चति। अभागे किम्। यदत्र ममाभिष्यात्तद्दीयताम्।

## प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥

प्रतिनिधिप्रतिदानयोरर्थयोः प्रतिः कर्मप्रवचनीयसंज्ञः स्यात्। प्रति यज्ञदत्तो देवदत्तात्। देवदत्तस्य प्रतिनिधिर्यज्ञदत्तइत्यर्थः तिलेभ्यः प्रति यच्छति माषान्।

## अधिपरी अनर्थकौ ॥ ९३ ॥

अनर्थकौ अधिपरी शब्दौ कर्मप्रवचनीयसंज्ञौ स्तः। कुतोऽध्यागच्छति। कुतः पर्यागच्छति। गतिगतावित्ति निघातो न।

## सुः पूजायाम् ॥ ९४ ॥

पूजायां सुः कर्मप्रवचनीयसंज्ञः स्यात्। सुसिक्तं, सुस्तुतम्। अनुपसर्गत्वात्षो न। पूजायांकिम्। सुषिक्तं किं तवात्र। क्षेपोऽयं न त्वत्र पूजा। सुष्ठुरित्यत्रातिशयमात्रं विवक्षितं न पूजा।

## अतिरतिक्रमणे च ॥ ९५ ॥

अतिक्रमणे पूजायाञ्चातिः कर्मप्रवचनीयसंज्ञः स्यात्। अतिसिक्तम्। अतिस्तुतम्। बहुतरं, समीचीनं वा सिक्तं, स्तुतञ्चेत्यर्थः।

## अपिः पदार्थसम्भावनाऽन्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥

पदस्य ( अप्रयुज्यमानस्य ) अर्थः पदार्थः। सर्पिषोऽपि स्यात्। सर्पिषो बिन्दुरपि स्यादित्यर्थः अनुपसर्गत्वान्न षः। अपि स्तुयाद्

विष्णुम् । अपि सिञ्च। धिग् देवदत्तमपि स्तुयाद् वृषलम् । अपि सिञ्च, अपि स्तुहि । यथाप्राप्तं षत्वं वार्यते। एषु अोत्येष्वपिरुक्तसंज्ञ इति वृत्तिः ।

## अधिरीश्वरे ॥ ९७ ॥

ईश्वरेऽर्थे अोत्येऽधिः कर्मप्रवचनीयसंज्ञः स्यात् । अधि देवदत्ते पञ्चालाः । अधि पञ्चालेषु देवदत्तः ।

## विभाषा कृञि ॥ ९८ ॥

कृञो योगेऽधिः कर्मप्रवचनीयसंज्ञो वा स्यादीश्वरेऽर्थे। यदत्र मामधिकरिष्यति । विनियोक्ष्यतइत्यर्थः । विनियोक्तुरीश्वरत्वं गम्यते । कर्मत्वाद् द्वितीया । तिङि चोदात्तवतीति निघातो न, गतिसंज्ञाया बाधात् ।

## लः परस्मैपदम् ॥ ९९

लादेशाः परस्मैपदसंज्ञाः स्युः । पचन्तं पश्य ।

## तङानावात्मनेपदम् ।१०० ॥

लादेशौ तङानावात्मनेपदसंज्ञौ स्तः । आनेति शानच्कानचोर्ग्रहणम्, त्यक्तानुबन्धत्वात् । आस्ते । आसीनः । पेचिवान् ।

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥

तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमसंज्ञानि स्युः । शतृक्वस्वोः सावकाशापि परस्मैपदसंज्ञा प्रथमादिसंज्ञाभिर्न बाध्यते । सिचि परस्मैपदेष्विति लिङ्गात् । तिप्, तस्, झि, इति प्रथमः। सिप्, थस थ, इति मध्यमः । मिप् वस् मस् इत्युत्तमः । आत्मनेपदेषु-त, आताम्, झ, ति प्रथमः । थास्, आथाम्, ध्वम्, इति मध्यमः । इट् वहि, महिङ्. इत्युत्तमः ।

## तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥

लब्धप्रथमादिसंज्ञानि पुनस्त्रीणि त्रीण्येकमेकम्प्रति एकव-

चनद्विवचनबहुवचनसंज्ञानि स्युः । तानीत्युक्तिः संज्ञासमावेशार्था । तिप्, तस्, झि, एते क्रमेण एकवचनद्विवचनबहुवचनसंज्ञकाः । एवमन्यत्रापि ।

## सुपः ॥ १०३ ॥

सुपस्त्रीणि त्रीणि एकमेकम्प्रति एकवचनादिसंज्ञानि स्युः । सुइत्येकवचनम् । औइति द्विवचनम् । जसिति बहुवचनम् । एवंसर्वत्र ।

## विभक्तिश्च ॥ १०४ ॥

सुप्तिङौ विभक्तिसंज्ञौ स्तः । चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । घटः । घटात् । पचावः । पचामः । न विभक्तौ तुस्मेति निषेधादित्संज्ञा न ।

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥

लकारवाच्यकारकवाचिनि युष्मदि अप्रयुज्यमाने प्रयुज्यमाने च मध्यमः स्यात् । उपपदत्वञ्चेह समीपोच्चरितत्वम् । त्वं पचसि । त्वमनुभूयसे । समानाधिकरणे किम् । त्वां पश्यति । त्वया दृश्यते ।

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

मन्यधातुरुपपदं यस्य धातोस्तस्मिन् प्रकृतिभूते सति मध्यमः स्यात् मन्यतेस्तूत्तमः स्यात् स चैकार्थस्य वाचकः स्यात् परिहासे गम्यमाने । सत्यप्यश्वादौ परिहासशीलः प्रतारयन्प्रयुङ्क्ते, एहि, मन्ये ( मन्यसे ) अश्वेन यास्यसि । ( यास्यामीति ) यातस्तेन पिता । एवं द्विवचनबहुवचनयोरप्युदाहरणान्यूह्यानि । मन्यतिरुत्वेकवचनान्त एव । युष्मद्युपपदे किम् । एतु भवान्मन्यते अश्वेन यास्यामीत्येव । श्यना निर्देशात्तानादियोगे न, एहि, मनुषे रथेन यास्यामीति । प्रहासे किम् । यथार्थकथने मा भूत्, मन्यसे अश्वेन यास्यामीति, यातस्तेन पिता ।

## अस्मद्युत्तमः ॥ १०७ ॥

लकारवाच्यकारकवाचिनि अस्मदि अप्रयुज्यमाने प्रयुज्यमाने चोत्तमः स्यात् । अहं त्वां पश्यामि । त्वयाऽहं दृश्ये ।

## शेषे प्रथमः ॥ १०८ ॥

मध्यमोत्तमविषयादन्यत्र प्रथमः स्यात् । पचति । पचतः पचन्ति । भूयते ।

## परः सन्निकर्षः संहिता ॥ १०९ ॥

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् । संहिताप्रदेशाः, संहितायामित्यादौ । दध्यत्र । मध्वत्र ।

## विरामोऽवसानम् ॥ ११० ॥

वर्णानामभावोऽवसानसंज्ञः स्यात् । घटः । घटात् । घटाद् । संहितावसानयोर्लोकविदितत्वात्सिद्धमिति भाष्यम् । तथाच तदर्थं सूत्रद्वयन्न कार्यम् ॥

इति प्रथमोऽध्यायः ॥

———

❀ ओ३म् ❀

# + अथ द्वितीयाध्यायस्य प्रथमः पादः +

(१)

## समर्थः पदविधिः ॥ १ ॥

परिभाषेयम् । पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः । वक्ष्यति द्वितीया, श्रितादिभिः समस्यते । कष्टं, श्रितः । कष्टश्रितः । समर्थग्रहणात्, पश्य देवदत्त ! कष्टं, श्रितो विष्णुमित्रो गुरुकुलमित्यत्र न । इह समानार्थेन वाक्येन भवितव्यं समासेन चेतिभाष्यात् महत्कष्ट श्रित इत्यादौ वाक्येन योऽर्थो गम्यते, नासौ जातुचित् समासेन गम्यते, इत्यगमकत्वात्समासो नेति । सति च गमकत्वे देवदत्तस्य गुरुकुलमित्यादौ भवत्येव । उक्तञ्च हरिणा:—समुदायेन सम्बन्धो येषां गुरुकुलादिना । संस्पृश्यावयवाँस्तेऽपि युज्यन्ते तद्वता सह ।

---

(१) सामर्थ्यं द्विविधं, एका+र्थीभावो व्यपेक्षा च, संसृष्टार्थं समर्थं सम्बद्धार्थं समर्थमिति भाष्यदर्शनात् । तत्र वृत्तावेकार्थीभावो वाक्ये व्यपेक्षा । परार्थाभिधानं वृत्तिः । वृत्यर्थावबोधकं वाक्यं विग्रहः । स च द्विविधः लौकिकोऽलौकिकश्चेति । लौकिकत्वं, प्रयोगार्हत्वम् । यथा कष्टं श्रित इत्यादि । अलौकिकत्वं प्रयोगानर्हत्वम् । यथा, कष्ट अम् श्रित सु । इत्यादि एवं सर्वत्रोह्यम् ।

+विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वमेकार्थीभावत्वम् । स्वार्थे पर्यवसायिनां पदानामाकाङ्क्षादिवशाद्यः परस्परसम्बन्धः सा व्यपेक्षा ।

## सुबामन्त्रिते पराङ्गवत्स्वरे । २ ।

सुबन्तमामन्त्रिते परतः पराङ्गवत्स्यात् स्वरे कर्त्तव्ये । परशुनाऽऽटन्नित्यादौ पूर्वस्य पराङ्गवद्भावेनामन्त्रितग्रहणेन ग्रहणादामन्त्रितस्य चेत्याद्युदात्तः । सुप् किम् ! पीड्ये पीड्यमान ! आमन्त्रिते किम् ! गेहे गार्ग्यः । अङ्गग्रहणं मृत्पिण्डीभूतः स्वरं लभेतेत्येतदर्थम् । वत्किम् । स्वाश्रयमपि यथा स्यात्-आम्र कुण्डेनाटन् 'आमएकान्तर मित्येकान्तरता । स्वरे किन् । कूपे सिञ्चन् । चर्मनमन् षत्वणत्वे मा भूताम् । (तन्निमित्तग्रहणं कर्त्तव्यम्) तेनेह न, क्षलैणाग्ने । (सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात्) तीक्ष्णया सूच्या सीव्यन् । (परमपि सच्छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम्) वृणीष्वदुहितर्दिवः । (अव्ययप्रतिषेधश्च) उच्चैरधीयान ! (अनव्ययीभावस्य) उपाग्न्यधीयान ! ।

(१)

## प्राक्कडारात्समासः । ३ ॥

कडारात्प्राक्समासइत्यधिक्रियते । प्राग्वचनमव्ययीभावादिसंज्ञाभिः समावेशार्थम् । तेन, पर्यायो न ।

## सह सुपा । ४ ।

सहेतियोगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । अनुव्यचलत् । अनुप्रादिशत् । ततःसुपा । सुबन्तं समर्थेन सुबन्तेन सह समस्यते । यस्य समासस्य लक्षणान्तरं नास्ति, तस्येदमेव बोध्यम् ।

(१) समसनं समासः । ऐकपद्यमैकस्वर्य्यञ्च समासस्य प्रयोजनम् । सहसुपेति विहितः केवलसमासो विशेषसंज्ञाऽनवगमात् । प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावः । प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषः । प्रायेणान्यपदार्थप्रधानो बहुव्रीहिः । उभयपदार्थप्रधानो द्वन्द्वः । तत्पुरुषभेदः कर्मधारयः । कर्मधारयभेदो द्विगुः । एवञ्च सप्तधा समासः । सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा । सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः । गुरुकुलम् । अनुव्यचलत् । कुम्भकारः । कटप्रूः । पिबतखादता । जहिजोडः । इति क्रमेण कारिकोदाहरणानि ।

पुनरुत्स्यूतं वासो देयम्। (इवेन विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्च ) वाससीइव। कन्येइव।

## अव्ययीभावः ॥ ५ ॥

अधिकारोऽयम्। महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्। तेनाव्ययसंज्ञा न वक्तव्या भवति।

## अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥ ६ ॥

एष्वर्थेषु वर्तमानं सुबन्तमव्ययं सुबन्तेन सहैकार्थभूतं सत्प्राक् समाससंज्ञं ततोऽव्ययीभावसंज्ञम्। विभक्ति (१) रिह कारकशक्तिः। वचनशब्दस्य कर्मल्युडन्तस्य प्रत्येकं (२) योगः। हरौ, इत्यधिहरि। अलौकिकविग्रहे तु प्रथमा (३) षष्ठी वा स्थापनीया। घटस्य समीपं, उपघटम्। मद्राणां समृद्धिः, सुमद्रम्। यवनानां व्यृद्धिः, (४) दुर्यवनम्। विघ्नस्याभावो निर्विघ्नम्। हिमस्यात्ययो, अतिहिमम्। निद्रासम्प्रति न युज्यते, इत्यतिनिद्रम्। विष्णुशब्दस्य प्रकाशः, इतिविष्णु। रथानां पश्चात्, अनुरथम्। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। तत्र रूपस्य योग्यमनुरूपम्। अर्थमर्थं प्रतीति, प्रत्यर्थम्। शक्तिमनतिक्रम्य, यथाशक्ति। हरेः सादृश्यं, सहरि। ज्येष्ठानामानु

(१) विभज्यतेऽनया प्रातिपदिकार्थ इतिव्युत्पत्या।

(२) द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसंबध्यतेइति।

(३) अधिकरणत्वस्याधिनोक्तत्वात्सप्तम्यप्राप्तेः।

(४) विगताऋद्धिर्व्यृद्धिरितियवनसंबन्धिऋद्ध्यभावइत्यर्थः। अर्थाभावेतूत्तरपदार्थाभावएवेति विशेषः।

पूर्व्येणेत्यनुज्येष्ठम् चक्रेण युगपदिति, सचक्रम् (१)। सदृशः सख्या-ससखि । सम्पत्तिरनुरूपआत्मभावः । ब्रह्मणोऽनुरूपं, सब्रह्म गर्गाणाम् तृणमपरित्यज्य, सतृणमभ्यवहरति । न त्वत्र तृणभक्षणे तात्पर्यम् । अग्निग्रन्थपर्यन्तमधीते, साग्न्यधीते ।

## यथाऽसादृश्ये ॥ ७ ॥

सादृश्यनिरासार्थमिदम् । यथाशब्दोऽसादृश्यएवसमस्यते । यथा दत्तस्तथा मित्रः । दत्तस्योपमानत्वं यथाशब्दोद्योतयति । नञसादृश्ये यथार्थे वा पूर्वेण प्राप्तो निषिध्यते ।

## यावदवधारणे ॥ ८ ॥

अवधारणेऽर्थे वर्तमानं यावदव्ययं समर्थेन सुबन्तेन सह समस्यते, सोऽव्ययीभावः (२)। यावन्तिअमत्राणि, यावदमत्रम् अवधारणे किम् (६)। यावद्दत्तं तावद्भुक्तम् ।

## सुप् प्रतिना मात्रार्थे । ९ ।

सुबन्तं मात्रार्थे वर्तमानेन प्रतिना समर्थेन सुबन्तेन सह समस्यते सोऽव्ययीभावः । शाकस्य लेशः, शाकप्रति । मात्रार्थे किम् । वृक्षम्प्रति विद्योतते विद्युत् । पुनः सुब्ग्रहणमव्ययनिवृत्यर्थम् ।

## अक्षशलाकासंख्याः परिणा । १० ।

अक्षादयस्तृतीयान्ताः परिणा समर्थेन सुबन्तेन सह समस्यन्ते अयथाजानीयके द्योत्ये सोऽव्ययीभावः । अक्षेन न तथा वृत्तं यथापूर्व

---

( १ ) सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येतदर्थम् । उक्तोदाहरणे सादृश्यवत एव प्राधान्यन्न तु सादृश्यस्येति ।

( २ ) यावदिति तद्धितान्तेनास्वपदविग्रहः ।

( ६ ) कियद् भुक्तमितिनावधारयामि ।

मिति, अक्षपरि । शलाकापरि । एकपरि (अक्षशलाकयोश्चैकवचनान्तयोः) तेनेह न, अक्षाभ्यामक्षैर्वा न तथावृत्तमिति (कितवव्यवहारइतिवक्तव्यम्) तेनेह न, अक्षेणेदं न तथा वृत्तमिति ।

## विभाषा ॥ ११ ॥

अधिकारोऽयम् ।

## अपपरिबहिरञ्चवः पञ्चम्या ॥ १२

अपादयः सुबन्ताः पञ्चम्यन्तेन समर्थेन सुबन्तेन सह वा समस्यन्ते सोऽव्ययीभावः । अपदेवम् । अपदेवात् । परिदेवम् । परिदेवात् । देवं वर्जयित्वेत्यर्थः । बहिर्ग्रामम् । बहिर्ग्रामात् । प्राग् ग्रामम् । प्राग् ग्रामात् । पञ्चमीग्रहणं बहिर्योगे तद्विधानार्थम् ।

## आङ् मर्यादाऽभिविध्योः ॥ १३ ॥

मर्यादाभिविध्योराङ् पंचम्यन्तेन समर्थेन सुबन्तेन सह वा समस्यते सोऽव्ययीभावः । आत्रिगर्तं, आ त्रिगर्तेभ्यो वा वृष्टो देवः तं विना । मर्यादा । तमभिव्याप्याभिविधिः ।

## लक्षणेनाभिप्रती आभिमुख्ये ॥ १४ ॥

आभिमुख्ये वर्तमानौ अभिप्रती शब्दौ लक्षणवाचिना समर्थेन सुबन्तेन सह वा समस्येते सोऽव्ययीभावः । अभ्यग्नि, प्रत्यग्नि वा शलभाः पतन्ति । अग्निमभि, प्रति वा । लक्षणेनेतिकिम् । स्रुघ्नादागतस्तमेव प्रतिनिवृत्तः । अत्र स्रुघ्नः कर्मीभूतो न लक्षणम् । अभिप्रतीइति किम् । येनाग्निस्तेन गतः । येनाग्निर्गतस्तेन गतइतिप्रतीते गमनस्याग्निर्लक्षणम् । आभिमुख्यइति किम् । अभ्यङ्का गावः । अभिनवोऽङ्कआसामिति । अङ्कोऽत्र गवां लक्षणं, न त्वत्राऽऽभिमुख्यम् ।

## अनुर्यत्समया ॥ १५ ॥

यस्य समीपवाची अनुः तेन लक्षणभूतेन समर्थेन सुबन्तेन सह

वा समस्यते सोऽव्ययीभावः । अनुवनम् अनु वनस्य वाऽशनिर्गतः । तत्समीपं गतइत्यर्थः । अनुरिति किम् । वनं समया । यत्समयेति किम् । वृक्षमनु विद्योतते ।

## यस्य चायामः ॥ १६ ॥

यस्यायामोऽनुना द्योत्यस्तेन लक्षणभूतेनानुर्वा समस्यते सोऽव्ययीभावः । आयामो दैर्घ्यम् । अनुगङ्गं, गङ्गाया अनु, वा वाराणसी । गङ्गा दैर्घ्य-सदृशदैर्घ्योपलक्षितेत्यर्थः ।

## तिष्ठद्गु प्रभृतीति च ॥ १७ ॥

तिष्ठद्गुप्रभृतीनि निपात्यन्ते । तिष्ठन्ति गावो यस्मिन् कालविशेषे स तिष्ठद्गु दोहनकालः । इद शत्रादेशो निपात्यते । आयान्ति गावो यस्मिन् काले स आयतीगवम् । श देशः पुवंद्भावविरहः समासान्तश्च निपात्यते । चकारोऽवधारणार्थस्तेनैषां वृत्यन्तरन्न । परमं तिष्ठद्गु ।

## पारेमध्ये षष्ठ्यावा ॥ १८ ॥

पारे मध्ये शब्दौ षष्ठ्यन्तेन सह वा समस्येते सोऽव्ययीभावः । एदन्तत्वञ्चानयोर्निपात्यते । महाविभाषया वाक्ये सिद्धे पुनर्वाग्रहणात् पक्षे षष्ठीसमासोऽपि । गङ्गायाः पारं । पारेगङ्गम्, गङ्गा पारं वा । गङ्गाया मध्यं, मध्येगङ्गं, गङ्गामध्यं वा ।

## संख्या वंश्येन ॥ १९ ॥

संख्यावाचि सुबन्तं वंश्यवाचिना स० सु० सह समस्यते सोऽव्ययीभावः । द्वौ मुनी वंश्यौ इति द्विमुनि व्याकरणस्य । एकविंशतिर्भारद्वाजा वंश्या इति एकविंशतिभारद्वाजम् ।

## नदीभिश्च ॥ २० ॥

संख्यावाचि सुबन्तं नदीवाचकैः स० सु० सह वा समस्यते ।

सोऽव्ययीभावः । ( समाहारे चायमिष्यते ) सप्तानां गङ्गानां समाहारः, सप्तगङ्गम् । द्वियमुनम् । स्वरूपस्य सञ्ज्ञायाश्च न ग्रहणं बहुवचननिर्देशात् ।

## अन्यपदार्थे च सञ्ज्ञायाम् । २१ ।

अन्यपदार्थे वर्तमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायां सोऽव्ययीभावः । वाक्येन संज्ञाऽनवगमान्नित्यसमासः । उन्मत्तगङ्गं नाम देशः । अन्यपदार्थे किम् । कृष्णावेणी । संज्ञायां किम् । शीघ्रगङ्गो देशः ।

## तत्पुरुषः । २२ ।

अधिकारोऽयम्, प्राग्बहुव्रीहेः ।

## द्विगुश्च । २३ ।

द्विगुरपि तत्पुरुषसंज्ञः स्यात् संख्यापूर्वो द्विगुरित्यत्र चकारं पठित्वैव संज्ञासमावेशसिद्धेरिदं सूत्रं नावश्यकमिति । द्विगोस्तत्पुरुषत्वे टजचौ प्रयोजनम् पञ्चानां गवां समाहारः, पञ्चगवम् । द्व्यङ्गुलम् । (१)

## द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥ २४ ॥

द्वितीयान्तं श्रितादिप्रकृतिकैः समर्थैः सुबन्तैः सह वा समस्यते स तत्पुरुषः । विष्णुं श्रितः, विष्णुश्रितः (२) । दुःखातीतः । कूप (३)-पतितः । ग्रामगतः । तरङ्गात्यस्तः । सुखप्राप्तः । सुखापन्नः । ( श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् ) ग्रामं गमी, ग्रामगमी । ग्रामगामी ।

---

( १ ) गोरतद्धितलुकीतिटच् द्वे अङ्गुली प्रमाणमस्येति विग्रहः । तत्पुरुषस्याङ्गुलेरित्यच् ।

( २ ) विष्णुकर्मकश्रयणकर्तेति वाक्यार्थः । एवमन्यत्रापि ।

( ३ ) निपातनादिट् ।

## स्वयं क्तेन ॥ २५ ॥

स्वयमिति सुबन्तं क्तान्तप्रकृतिकेन स० सु० सह वा समस्यते स तत्पुरुषः। स्वयंकृतः तस्यापत्यं, स्वायङ्कृतिः ऐकस्वर्यमैकपद्यञ्च समासस्य प्रयोजनम्।

## खट्वा क्षेपे ॥ २६ ॥

खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन स० सु० सह क्षेपे समस्यते स तत्पुरुषः। खट्वारूढो जाल्मः। नातिवृत्तवानित्यर्थः। क्षेपइति किम्। खट्वामारूढः।

## सामि ॥ २७ ।

सामीति क्तान्तप्रकृतिकेन स० सु० सह वा समस्यते स तत्पुरुषः। सामिकृतम्। अर्द्धं कृतमित्यर्थः।

## कालाः ॥ २८ ॥

कालवाचिनो द्वितीयान्ताः क्तान्तप्रकृतिकेन स० सु० सह वा समस्यन्ते स तत्पुरुषः। अनत्यन्तसंयोगार्थं वचनम्। मासं प्रमितः मासप्रमितश्चन्द्रमाः। मासं परिछेत्तुमारब्धवानित्यर्थः।

## अत्यन्तसंयोगे च ॥ २९ ॥

कालवाचिनो द्वितीयान्ताः स० सु० सह वा समस्यन्तेऽत्यन्तसंयोगे गम्यमाने स तत्पुरुषः। मुहूर्तं सुखं, मुहूर्तसुखम्। मुहूर्तव्यापिसुखमित्यर्थः।

## तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥

तृतीयान्तं तृतीयान्तार्थकृतेन गुणवचनेनार्थशब्देन च सह वा समस्यते स तत्पुरुषः। शङ्कुलाखण्डः धान्येनार्थः, धान्यार्थः तत्कृतेतिकिम् शिरसा खल्वाटः।

## पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥

तृतीयान्तं पूर्वादिप्रकृतिकैः समर्थैः सुबन्तैः सह वा समस्यते स तत्पुरुषः। मासेन पूर्वः, मासपूर्वः। मात्रा सदृशः, मातृसदृशः मातृसमः। मासोनम्। मासविकलम्। वाक्कलहः। आचारनिपुणः गुडमिश्रः। आचारश्लक्ष्णः। (अवरस्योपसंख्यानम्) माषेनावरो, माषावरः।

## कर्तृकरणे कृता बहुलम् ॥ ३२ ॥

कर्तरि करणे च या तृतीया यदन्तं कृदन्तप्रकृतिकेन स० सु० सह वा समस्यते स तत्पुरुषः। देवेन त्रातो देवत्रातः। नखैर्भिन्नो नखभिन्नः। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्, नखनिर्भिन्नः। कर्तृकरणे किम्। भिक्षाभिरुषितः। हेतौ तृतीया। कृता किम्! काष्ठैः पचतितराम्। बहुलग्रहणादिह न, दात्रेण लूनवान्।

## कृत्यैरधिकार्थवचने ॥ ३३ ॥

कर्तरि करणे च या तृतीया तदन्तं कृत्यप्रत्ययान्तप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः। काकैः पेया, काकपेया नदी। पूर्णतोयत्वात्तटस्थैरपि पातुं शक्येति स्तुतिः। काकैरप्येषा पातुं शक्याऽल्पतोयत्वादिति निन्दा।

## अन्नेन व्यञ्जनम् ॥ ३४ ॥

व्यञ्जनवाचि तृतीयान्तमन्नवाचिसुबन्तेन सह वा समस्यते स तत्पुरुषः। दध्ना उपसिक्त ओदनः, दध्योदनः। युक्तार्थसंप्रत्ययाच्च सामर्थ्यमिति भाष्यादसामर्थ्यन्न। शब्दशक्तिस्वभावाद्युक्तार्थसंप्रत्ययः।

## भक्ष्येण मिश्रीकरणम् ॥ ३५ ॥

मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन सह वा

समस्यते स तत्पुरुषः । गुडेन मिश्राः धानाः । वृत्तौ मिश्रण क्रियान्तर्भावो बोध्यः । खरविशद (१) मभ्यवहार्यं भक्ष्यम् ।

## चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥३६॥

चतुर्थ्यन्तं चतुर्थ्यन्तार्थाय यत्तद्वाचिनाऽर्थादिभिश्च समस्यते स तत्पुरुषः । यूपाय दारु, यूपदारु । कुण्डलाय हिरण्य, कुण्डलहिरण्यम्, तदर्थेन प्रकृतिविकृतिभावएव समासः, बलिरक्षितग्रहणाज्ज्ञापकात् । तेनेह न, रन्धनाय स्थाली । अश्वघासादयस्तु षष्ठीसमासाः, बोध्याः (अर्थशब्देन नित्यसमासः सर्वलिङ्गता च वक्तव्या) ब्राह्मणायायं, ब्राह्मणार्थः सूपः । ब्राह्मणार्था यवागूः । ब्राह्मणार्थं पयः । महाराजबलिः । गवे हितं, गोहितम् । गोसुखम् । गोरक्षितम् ।

## पञ्चमी भयेन ॥ ३७॥

पञ्चम्यन्तं भयप्रकृतिकेन स० सुबन्तेन सह वा समस्यते स तत्पुरुषः वृकाद् भयं, वृकभयम् । ( भयभीतभीतिभीभिरिति वक्तव्यम् ) वृकाद् भीतः । वृकभीतः । वृकभीतिः । वृकभीः । अपरस्तु भयनिर्गतजुगुप्सुभिरित्याह, तन्मते ग्रामनिर्गतः । अधरजुगुप्सुरिति सिद्धम् ।

## अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥३८॥

अल्पं पञ्चम्यन्तमपेतादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः । सुखादपेतः । सुखापेतः । कल्पनापोढः । स्वर्गपतितः । तरङ्गापत्रस्तः । तेभ्यो भीत इत्यर्थः । अल्पश इत्युक्तेर्नेह, प्रासादात्पतितः ।

## स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥३९॥

स्तोकान्तिकदूरार्थकृच्छ्राणि पञ्चम्यन्तानि क्तान्तप्रकृतिकेन सुबन्तेन सह वा समस्यन्ते स तत्पुरुषः । स्तोकान्मुक्तः । अल्पान्मुक्तः

(१) खरं कठिनं, विशदं विभक्तावयवम् ।

अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । पञ्चम्याः स्तोकादिभ्य इत्यलुक् ।

## सप्तमी शौण्डैः ।४०।

सप्तम्यन्तं शौण्डादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः । बहुवचननिर्देशादाकृत्यर्थावगतिः । अक्षेषु शौण्डः । अक्षशौण्डः । अक्षकितवः । वनेऽन्तर्वनांतरित्यत्र तु, अव्ययविन आधारत्वविवक्षायां सप्तमी । ब्राह्मणाधीनः ।

## सिद्धशुष्कपक्वबन्धैश्च ।४१।

सप्तम्यन्तं सिद्धादिप्रकृतिकै सुबन्तैः सह वा समस्यते स तत्पुरुषः । सांकाश्ये सिद्धः, सांकाश्यसिद्धः । आतपशुष्कः । स्थालीपकः । चक्रबन्धः ।

## ध्वाङ्क्षेण क्षेपे ।४२।

सप्तम्यन्तं ध्वाङ्क्षवाचिना सुबन्तेन सह वा समस्यते । गम्यमाने । तीर्थे ध्वाङ्क्ष इव, तीर्थध्वाङ्क्षः । यथा तीर्थका का न चिरं स्थातारो भवन्ति एवं यो गुरुकुलानि गत्वा न चिरं तिष्ठति स उच्यते तीर्थकाकइति । क्षेपेकिम् । तीर्थे ध्वाङ्क्षस्तिष्ठति ।

## कृत्यैर्ऋणे ॥ ४३ ॥

सप्तम्यन्तं कृत्यप्रत्ययान्तप्रकृतिकैः सुबन्तैः सह वा समस्यते ऋणे गम्यमाने स तत्पुरुषः । मासेदेयमृणम् । यद्यस्य नियोगतः कार्यमृणन्तस्य तद्वदतीतिभाष्यात्पूर्वाह्णेगेयं सामेत्यादावपि । तत्पुरुषे कृतीनि सप्तम्याअलुक् ( यद्ग्रहणाञ्चर्कनव्यम् ) तेनेह न, पूर्वाह्णे दातव्या भिक्षा ।

## संज्ञायाम् ॥ ४४ ॥

सप्तम्यन्तं समर्थेन सुबन्तेन सह समस्यते संज्ञायां गम्यमानायाम् । अरण्येतिलकाः वनेकसेरुकाः । हलदन्तादिति सप्तम्यलुक् ।

## क्तेनाहोरात्रावयवाः । ४५ ।

अहरवयवा रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तप्रकृतिकेन सुबन्तेन सह वा समस्यन्ते स तत्पुरुषः । पूर्वाह्णे कृतं, पूर्वाह्णकृतम् । पूर्वरात्रे कृतं, पूर्वरात्रकृतम् । अवयवग्रहणं किम् । अह्नि दृष्टम् । रात्रिवृत्तमनुयोक्तुमुद्यतेत्यादौ तु "कर्तृकरणे कृता बहुल" मिति बोध्यम् ।

## तत्र । ४६ ।

तत्रेत्येतत्सप्तम्यन्तं क्तान्तप्रकृतिकेन स० सु० सह वा समस्यते स तत्पुरुषः । तत्रभुक्तम् ।

## क्षेपे । ४७ ।

सप्तम्यन्तं क्तान्तप्रकृतिकेन स० सु० सह समस्येते क्षेपे गम्यमाने स तत्पुरुषः । अवतप्तेनकुलस्थितं त एतत् । यथाऽवतप्ते नकुला न चिरं स्थातारो भवन्ति, एवं कार्याण्यारभ्य यो न चिरं तिष्ठति स एवमुच्यते । कृद्ग्रहणे गतिकारकपूर्वस्यापीति सनकलेन समासः ।

## पात्रेसमितादयश्च । ४८ ।

एते निपात्यन्ते, क्षेपे गम्यमाने । पात्रेसमिताः । भोजनसमय एव संगताइत्यर्थः । उदुम्बरमशकः । योऽल्पे तृप्तो नास्मात्परमस्तीति मन्यते । चकारोऽवधारणार्थस्तेनैषां समासान्तरे घटकतया प्रवेशो न । परमाः पात्रेसमिता इति ।

## पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । ४९ ।

पूर्वकालादयः सुबन्ताः समानाधिकरणेन स० सुबन्तेन सह वा समस्यन्ते स त० । पूर्वकाल इत्यर्थनिर्देशस्तेन पूर्वकालोऽपरकालेन समस्यते । पूर्वनिपातनियमार्थं सूत्रम् । पूर्वं स्नातः पश्चादनुलिप्तः, स्नातानुलिप्तः । एकशाला । सर्वयाज्ञिकाः । जरत्तार्किकाः पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः । समानाधिकरणेनेति किम् । एकस्याः शौक्ल्यम् ।

## दिक्संख्ये संज्ञायाम् ॥ ५० ॥

दिग्वाचिनः संख्यावाचिनश्च सुबन्ताः समानाधिकरणेन स० सुबन्तेन सह समस्यन्ते संज्ञायाम् । विशेषणं विशेष्येणेति सिद्धे दिक्संख्ये संज्ञायामेव समानाधिकरणेन समस्यते इति नियमार्थम् । पूर्वेषुकामशमी । सप्तर्षयः । नियमादिह न, उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ।

## तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥

तद्धितार्थे विषये उत्तरपदे च परतः समहारे च वाच्ये दिग्वाचिनः संख्यावाचिनश्च सुबन्ताः बन्ताः समानाधिकरणेन स० सुबन्तेन सह समस्यन्ते स तत्पुरुषः । पूर्वस्यां शालायां भवः, पौर्वशालः(१) । पूर्वशा(२) लाप्रियः । दिक्षु समाहारो नास्त्यनभिधानात् । पञ्च (३) कपालः । पञ्चगवधनः (४) । पंचपूली (५) ।

## संख्यापूर्वो द्विगुः ॥ ५२ ॥

तद्धितार्थेत्यत्रोक्तः संख्यापूर्वो द्विगुसंज्ञः । पंचगवम् ।

## कुत्सितानि कुत्सनैः ॥ ५३ ॥

कुत्सितप्रकृतीनि सुबन्तानि कुत्सनप्रकृतिकैः सुबन्तैः सह वा समस्यन्ते प्रवृत्तिनिमित्तकुत्सायामेवायमिष्यते । विशेष्यस्य

---

(१) भव इति तद्धितार्थस्तद्विषये पूर्वं समासे कृते दिक्पूर्वपदादसंज्ञायामिति ञः ।

(२) पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः । तेन समासान्तोदात्तत्वं लकाराकारस्य भवतीति ।

(३) पञ्चसु कपालेषु संस्कृत इति विग्रहे संस्कृतं भक्षा इत्यण्, तस्य द्विगोर्लुगनपत्य इति लुक् ।

(४) अत्र त्रिपदे बहुव्रीहौ पूर्वयोस्तत्पुरुषे गोरतद्धितलुकीति टच् ।

(५) द्विगोरिति ङीप् ।

पूर्वनिपातार्थोऽयम् । वैयाकरणश्चासौ खसूचिश्च, वैयाकरणखसूचिः । यः प्रश्नं विस्मारयितुं खं सूचयति स एवमुच्यते । मीमांसकदुर्दुरूढः । मीमांसकश्चासौ दुर्दुरूढश्च, मीमांसकदुर्दुरूढः । याज्ञिकितवः । यो याज्ञिको दक्षिणामात्रपरः सन्नयाज्यमपि याजयति स एवमुच्यते । कुत्सायां किम् । वैयाकरणो दरिद्रः ।

## पापाणके कुत्सितैः ॥ ५४ ॥

पापाणके सुबन्ते, कुत्सितैः समानाधिकरणैः स० सुबन्तैः सह वा समस्येते । पापश्चासौ नापितश्च, पापनापितः । अणककुलालः । कुत्सनाभिधायिनावेतौ । पूर्वेण प्राप्ते पूर्वनिपातार्थमिदम् ।

## उपमानानि सामान्यवचनैः ॥ ५५ ॥

उपमानवाचिप्रकृतिकानि सुबन्तानि सामान्यवाचिप्रकृतिकैः समर्थैः सुबन्तैः सह वा समस्यन्ते । घनइव (१) श्यामः, घनश्यामः । उपमानानीति किम् । देवदत्ता श्यामा ।

## उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥ ५६ ॥

उपमितं (उपमेयं) (२) व्याघ्रादिभिः समानाधिकरणैः समर्थैः सुबन्तैः सह समस्यते साधारणधर्मस्याप्रयोगे । विशेष्यस्य पूर्वनिपातार्थोऽयमारम्भः । पुरुषो व्याघ्रः इव पुरुषव्याघ्रः । सामान्याप्रयोगे किम् । पुरुषो व्याघ्र इव शूरः । ननु कथं भाष्याब्धिःवत्रातिगम्भीर

---

(१) येन वस्त्वन्तरं स्ववृत्तिधर्मवत्वेन परिच्छिद्यते तदुपमानम । अत्र घनवृत्तिश्यामवत्वेन देवदत्त इतरेभ्यः परिछिद्यतेऽतोघनस्योपमानत्वम् । उपमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वं । सामान्यवचनत्वम् । अस्ति चात्रोभयसाधारणधर्मः श्यामत्वम्, तद्विशिष्टोपमेयवचनो देवदत्तस्तमाह श्यामशब्दः । इह पूर्वपदं तत् सदृशे लाक्षणिकमतएव सामानाधिकरण्यान्मृगीइवचपला मृगचपलेत्यादौ पुंवद्भावः ।

(२) गुणक्रियाभ्यां समभिव्याहारे जातिसंज्ञयोरेव विशेष्यता । गुणयोः, क्रिययोः,-गुणक्रिययोश्च परस्परमनियमएव, व्याप्यव्यापकभावानापन्नजात्योरप्येवं, तद्भावापन्नयोस्तु व्यापकस्यैव विशेष्यता ।

इति कैय्यटः । नेह गाम्भीर्यं साधारणधर्मत्वेन विवक्षितं किन्तु-वितत्दुरवगाहत्वादिकम् । अस्त्येव तस्याप्रयोगइतिमयूरव्यंसकादि-त्वादिति वा ।

## विशेषणं विशेष्येण बहुलम् । ५७ ।

विशेषणं समानाधिकरणेन विशेष्यवाचिना समर्थेन सुबन्तेन सह बहुलं समस्यते । कृष्णाश्चते तिलाश्चेति कृष्णतिलाः । खञ्ज-कुब्जः । कुब्जखञ्जः । पाचकपाठकः । इत्याद्यूहनीयम् ।

## पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च । ५८ ।

पूर्वादयः सुबन्ताः समानाधिकरणेन समर्थेन सुबन्तेन सह वा समस्यन्ते स तत्पुरुषः । पूर्वनिपातार्थमिदम् पूर्ववैयाकरणः । अपरा-ध्यापकः । प्रथमाध्यापक इत्यादि । इमः स राजन्यकमेकवीरइत्या-दिकविवाक्ये बहुलग्रहणं शरणीकर्तव्यम् ।

## श्रेण्यादयः कृतादिभिः । ५९ ।

श्रेण्यादयः पठ्यन्ते, कृतादिराकृतिगणः । श्रेण्यादयः सुबन्ताः कृतादिभिः समानाधिकरणैः समर्थैः सुबन्तैः सह वा समस्यन्ते स तत्पुरुषः । (श्रेण्यादिषु च्व्यर्थवचनम्) अश्रेणयः श्रेणयः कृताः श्रेणिकृताः । च्व्यन्तानान्तु परत्वात् कुगतिप्रादय इति नित्य-समासः ।

## क्तेन नञ्विशिष्टेनानञ् । ६० ।

नञ्रहितं क्तान्तं नञ्विशिष्टेन क्तान्तेन समानाधिकरणेन स-मर्थेन सुबन्तेन सह वा समस्यते स तत्पुरुषः । कृतञ्च तदकृतञ्च कृताकृतम् । एकदेशस्य करणात् कृतं देशान्तरस्याकरणात्तदेवा-कृतञ्चोच्यते (कृतापकृतादीनामुपसंख्यानम्) कृतापकृतम् । भुक्त-विभुक्तम् । पीतविपीतम् । (गतप्रत्यागतादीनाञ्चोपसंख्यानम्) गतप्रत्यागतम् । यातानुयातम् ।

## सन्महत्परमोत्कृष्टाः पूज्यमानैः । ६१ ।

एते सुबन्ताः पूज्यमानैः समानाधिकरणैः सुबन्तैः सह वा समस्यन्ते । सत्पाठकः । महावैयाकरणः । परमपुरुषः । उत्कृष्टपुरुष-इत्यादि । पूज्यमानैः किम् उत्कृष्टो गौः । पङ्कादुद्धृतइत्यर्थः । महापापमित्यादौ तु विशेषसमासो बोध्यः । महत्त्वेन पापस्य पूजास्त्येवेति केचित् ।

## वृन्दारकनागकुञ्जरैः पूज्यमानम् । ६२

पूज्यमानवाचिसुबन्तमेतैः समानाधिकरणैः सह वा समस्यते । गोवृन्दारकः । गोनागः । गोकुञ्जरः । व्याघ्रादेराकृतिगणत्वात्सिद्धे सामान्यप्रयोगार्थं वचनम् । गोवृन्दारकः पूजनीयः ।

## कतरकतमौ जातिपरिप्रश्ने । ६३ ।

जातिपरिप्रश्नेऽर्थे वर्तमानौ कतरकतमौ समानाधिकरणेन समर्थेन सुबन्तेन सह समस्येते स तत्पुरुषः । कतरकठो भवतोः । कतमकठो भवताम् । कतमसाहचर्यात्किनरशब्दस्यापि तथाविधस्यैव ग्रहणे सिद्धे जातिपरिप्रश्नग्रहणं ज्ञापकमन्यत्रापि कतमशब्दः साधुरिति । जातिपरिप्रश्ने किम् । कतरो भवतोर्देवदत्तः । कतमो भवतां देवदत्तः ।

## किं क्षेपे । ६४ ।

किंसुबन्तं समानाधिकरणेन प्राग्वत् क्षेपे गम्ये । किराजा यो न रक्षति । किंसखा योऽभिद्रुह्यति । क्षेपे किम् ! को राजा पाटलिपुत्रे ।

## (१) पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः । ६५ ।

जातिवाचिसुबन्तं पोटादिभिः समानाधिकरणैः स० सुबन्तैः

(१) स्त्रीपुंसलक्षणा पोटा । गृष्टिरेकवारप्रसूता । धेनुः प्रत्यग्रप्रसवा । वशा वन्ध्या । वेहद् गर्भघातिनी । वष्कयणी तरुणवत्सा ।

सह समस्यते । इभी चासौ पोटा च, इभपोटा । इभयुवतिः । अग्निस्तोकः । उदश्वित्कतिपयम् । गोगृष्टिः । गोधेनुः । गोवशा । गोवेहत् । गोवष्कयणी । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । जातिःकिम् । देवदत्तः प्रवक्ता । धूर्तवक इति तु प्रयोक्तुः प्रमाद एव ।

## प्रशंसा (१) वचनैश्च । ६६ ।

जातिवाचि सुबन्तं प्रशंसावचनैः समानाधिकरणैः समर्थैः सुबन्तैः सह समस्यते । गोमतल्लिका । गोमचर्चिका, इत्यादि । जातिः किम् । कुमारीमतल्लिका । वचनग्रहणं रूढिपरिग्रहार्थम् ।

## युवा खलतिपलितवलिनजरतीभिः । ६७ ।

युवशब्दः खलत्यादिभिः समानाधिकरणैः सुबन्तैः सह समस्यते । युवा चासौ खलतिश्च, युवखलतिः । युवपलितः । युववलिनः । युवजरती । ननु जरत्या युवशब्देन सामानाधिकरण्याभावात्कथं समास इतिचेन्न । जरतीग्रहणं ज्ञापकं 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहण' मिति तत्फलं, युवतिः खलती, युवखलती ।

## कृत्यतुल्याख्या अजात्या । ६८ ।

कृत्यप्रत्ययान्तास्तुल्याख्याश्च सुबन्ता अजातिवचनेन समानाधिकरणेन स० सुबन्तेन सह समस्यन्ते । भोज्यञ्च तदुष्णञ्च, भोज्योष्णम् । भोज्यलवणम् । तुल्यश्चासौ श्वेतश्चेति तुल्यश्वेतः । सदृशश्वेः । तुल्यमहानित्यादौ तु परत्वादनेन सन्महदिति बाध्यते पूर्वनिपातनियमार्थमेतत् ।

## वर्णोवर्णेन । ६९ ।

वर्णवाचि सुबन्तं वर्णवाचिना समानाधिकरणेन स० सुबन्तेन सह समस्यते । कृष्णश्चासौ सारङ्गश्च, कृष्णसारङ्गः । विशेषणं विशेष्येणेत्येव सिद्धे नारम्भणीयोऽयं योगः ( शाकपार्थिवादीना-

( १ ) मतल्लिका मचर्चिका प्रकाण्डमुद्घतल्लजौ । प्रशस्तवाचकान्यमूनीति कोशः ।

मुपसंख्यानमुत्तरपदलोपश्च ) शाकप्रियः पार्थिवः शाकपार्थिवः। इत्यादि।

## कुमारः श्रमणादिभिः। ७०।

कुमारशब्दः श्रमणादिभिः समानाधिकरणैः समर्थैः सुबन्तैः सह समस्यते। लिङ्गविशिष्टपरिभाषया कुमारी श्रमणा कुमारश्रमणा। कुमारप्रव्रजिता। कुमाराध्यापकः। पूर्वनिपातनियमार्थो योगः।

## चतुष्पादो गर्भिण्या॥ ७१॥

चतुष्पाज्जातिवाचिनः सुबन्ताः गर्भिणीशब्देन सह समस्यन्ते। गोगर्भिणी। अजागर्भिणी (चतुष्पाज्जातिरिति वक्तव्यम्) तेनेह न, कालाक्षी गर्भिणी। चतुष्पादइतिकिम्। ब्राह्मणी गर्भिणी।

## मयूरव्यंसकादयश्च॥ ७२॥

एते समुदाया निपात्यन्ते। व्यंसको धूर्तः। मयूरश्चासौ व्यंसकश्च, मयूरव्यंसकः। एवकारार्थश्चकारः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमो मयूरव्यंसकइति। छात्रव्यंसकः (एहीडादयोऽन्यपदार्थे) एहि, ईड, इति यस्मिन्कर्मणि तदेहीडं कर्म। एवमेहियवमित्यादि। (जहि (१) कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति) जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः। जहिस्तम्बः (आख्यातमाख्यातेन क्रियासातत्ये) अश्नीत, पिबत, इत्येवं यत्र सततमभिधीयते सा अश्नीतपिबता क्रिया। विशेषस्तु गणपाठे द्रष्टव्यः।

इति प्रथमः पादः॥

---

(१) जहीत्येतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत्कर्ताऽभिधीयत इत्यर्थः।

# ॥ अथ द्वितीयपादारम्भः ॥

## पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥१॥

षष्ठीसमासापवादः । पूर्वादयः सुबन्ता एकाधिकरणे वर्तमानेनैक(१) देशिना सह समस्यन्ते । पूर्वं कायस्य, पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । एकदेशिना किम् । पूर्वं नाभेः (२)कायस्य । नाभेः पूर्वो यो भागः, स कायसम्बन्धीत्यर्थः । एकाधिकरणे किम् पूर्वं छात्राणाम् । समुदायसमुदायिसम्बन्धे षष्ठी । सर्वस्यैकदेशवाचिनोऽह्ना समासइति संख्याविसायेतिसूत्रे सायग्रहणेन ज्ञाप्यते । तेनाह्नो मध्यं मध्याह्नः । सायाह्नः । केचित्तु सामान्यापेक्षं ज्ञापकमिति सर्व एकदेशिवाची कालेन समस्यते इति व्याचक्षते तेन मध्यरात्र इत्याद्यपिसिद्धम् ।

(३)

## अर्द्धं नपुंसकम् ॥ २ ॥

षष्ठीसमासापवादः । नपुंसकवाच्यर्द्धशब्द एकाधिकरणे वर्तमानेनैकदेशिना सह वा समस्यते अर्द्धं पिप्पल्याः, अर्द्धपिप्पली । एकाधिकरणेकिम् । अर्द्धं पिप्पलीनाम् । एकदेशिना किम् । अर्द्धं पशोर्देवदत्तस्य । देवदत्तोऽत्र स्वामी नत्ववयवीति । नपुंसकं किम् । ग्रामार्द्धः ।

---

( १ ) एकदेशोऽस्यास्तीति, एकदेशी, अवयवीत्यर्थः ।
(२) नाभेरिति दिग्योगलक्षणापञ्चमी । पूर्वस्य नाभिरवधिर्नत्वेकदेशिनीत्यतो न समासः ।
(३) अर्द्धमिति निर्देशादेव सिद्धे नपुंसकग्रहणं सूत्रे लिङ्गनिर्देशो न विवक्ष्यतइति ज्ञापनार्थन्तेन 'तस्येदमि' ति लिङ्गत्रये भवति ।

## द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥३॥

द्वितीयादयः सुबन्ता एकाधिकरणे वर्तमानेनैकदेशिना सह वा समस्यन्ते। षष्ठीसमासापवादः। अन्यतरस्यांग्रहणसामर्थ्यात्पक्षे सोऽपि। भिक्षाया द्वितीयं, द्वितीयभिक्षा। भिक्षाद्वितीयं वा। एवं तृतीयभिक्षादि। एकाधिकरणेकिम्। द्वितीयं भिक्षाणाम्। एकदेशिना किम्। द्वितीयं भिक्षाया भिक्षुकस्य।

## प्राप्तापन्ने च द्वितीयया ॥४॥

प्राप्तापन्नशब्दौ द्वितीयान्तेन सह वा समस्येते, अकारश्चानयोरन्तादेशः। प्राप्तो जीविकां, प्राप्तजीविकः। अन्यतरस्यामित्यनुवृत्तेस्तु-जीविकाप्राप्तः। एवमापन्नजीविकः। जीविकापन्नः। अकारविधानफलन्तु स्त्रियाम्। जीविकां प्राप्ता, प्राप्तजीविकेत्यादि।

## कालाः परिमाणिना ॥५॥

कालवाचिसुबन्ताः परिमाणिवाचिना सुबन्तेन सह वा समस्यन्ते स तत्पुरुषः। मासो जातस्य यस्य सः मासजातः। यस्य जननादूर्ध्वं मासो गतः स व्यवह्रियते। एवं द्व्यहजात (१) इत्यादिरपि। मासौ जातस्य यस्येत्यादौ तु न, अनभिधानात्।

## नञ् ॥६॥

नञ् समर्थेन सुबन्तेन सह वा समस्यते, स तत्पुरुषः। न ब्राह्मणः अब्राह्मणः। क्षत्रियादौ सादृश्यनिमित्ताध्यारोपितं ब्राह्मण्यम्। न तु तात्विकमिति नञ्प्रयोगेण द्योत्यते। अत उत्तरपदार्थस्यैव प्राधान्यम्।

(१) उत्तरपदेन परिमाणिना द्विगोः समासवचनम्) द्विगोरित्यस्याग्रे 'सिद्धये' इतिशेषः द्वे अहनी जातस्य यस्येति विग्रहे द्व्यन्हजात इति, अन्होऽन्ह इत्यन्हादेशः। तत्र तु 'न संख्यादे' रिति निषेधः।

## ईशदकृता ।७।

ईषदकृदन्तेन सुबन्तेन सह वा समस्यते । ( ईष गुणवचनेनेति वक्तव्यम् ) ईषत्पिङ्गलः । ईषत्कडारः । गुणवचनेनेत्युक्तया नेह-ईषद्गार्ग्यः ।

## षष्ठी ।८।

षष्ठ्यन्तं समर्थेन सुबन्तेन सह वा समस्यते स तत्पुरुषः । राज्ञः पुरुषो राजपुरुषः । ( कृद्योगा च षष्ठी समस्यत इति वक्तव्यम् ) इध्मस्य व्रश्चनः, इध्मव्रश्चनः । तत्स्थैश्च गुणैः षष्ठी समस्यत इति वक्तव्यम् ) चन्दनस्य गन्धः, चन्दनगन्धः । पटहशब्दः । नदीघोषः ( न तु तद्विशेषणैरिति वक्तव्यम् ) घृतस्य तीव्रो गन्धः ।

## याजकादिभिश्च । ९ ।

षष्ठ्यन्तं याजकादिभिः सह वा समस्यते स तत्पुरुषः । ब्राह्मणयाजकः । क्षत्रियपूजकः । तृजकाभ्यां कर्तरीत्यस्य प्रतिप्रसवोऽयम् । ( गुणात्तरेण तरलोपश्चेति वक्तव्यम् ) सर्वेषां श्वेततरः सर्वश्वेतः

## न निर्द्धारणे । १० ।

निर्द्धारणे या षष्ठी सा न समस्यते । गवां कृष्णा सम्पन्नक्षीरतमा ( प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् ) सर्पिषो ज्ञानम् मधुनो ज्ञानम् ।

## (१) पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन । ११ ।

षष्ठयन्तं पूरणादिभिः समर्थैः सुबन्तैः सह न समस्यते । सतां षष्ठः । पूरणप्रत्ययान्तो गृह्यते, न तु पूरणशब्दः लोपे चेत्पादपूरणमिति सूत्रप्रयोगाज्ज्ञापकात् । काकस्य कार्ष्ण्यम् । ब्राह्मणस्य

(१) गुणशब्दः केवलस्य गुणस्य गुणोपसर्जनद्रव्यस्य च प्रातिपादकः, व्याप्तिन्यायात् ।

शुक्लाः । यदाऽर्थात्प्रकरणाद्वा दन्ताइति विशेष्यं निर्ज्ञातं तदेदमुदाहरणम् । अनित्योऽयं गुणेन निषेधः । संज्ञाप्रमाणत्वादित्यादनिर्देशात् । तेन करणपाटवमित्यादि सिद्धम् । सुहितार्थास्तृप्त्यर्थाः । फलानां सुहितः । फलैस्तृप्तइत्यर्थः । चौरस्य (१) द्विषन् । पुरा सूर्यस्यो (२) देतोः । ब्राह्मणस्य कर्तव्यम् । तव्यता तु भवत्येव । स्वकर्तव्यम् । विशेषस्तु स्वरे । सर्पिषः पीयमानस्य (३)। यजुषः क्रियमाणस्य ।

## क्तेन च पूजायाम् । १२ ।

मतिबुद्धीति सूत्रेण विहितो यः क्तस्तदन्तप्रकृतिकेन सुबन्तेन सह षष्ठयन्तं न समस्यते । राज्ञां मतो बुद्धः, पूजितो वा । पूजाग्रहणं सूत्रस्योपलक्षणमिति । यदा कर्त्रादेरेव शेषत्वविवक्षया षष्ठी तदा भवत्येव समासः । रामहितइत्यादौ ।

## अधिकरणवाचिना च । १३ ।

अधिकरणवाची यः क्तस्तदन्तेन सह षष्ठी न समस्यते । इदमेषामासितं, गतं, भुक्तं वा ।

## कर्मणि च । १४ ।

कर्मणीत्येवं विहिता या षष्ठी सा न समस्यते । चित्रं गवां दोहोऽगोपेन । यद्यनेन कर्मषष्ठीमात्रं न समस्यते इत्यभिप्रेतं स्यात्तर्हि तृजकाभ्यां निषेधं नारभेत ।

## तृजकाभ्यां कर्तरि । १५ ।

कर्तरि यौ तृजकौ तदन्ताभ्यां षष्ठयन्तं न समस्यते । वज्रस्य

(१) 'द्विषः शतुर्वा वचनमि'ति पाक्षिकी कर्मणि षष्ठी ।

(२) अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इतिवचनात्षष्ठी । सक्त्वाभ्यां साहचर्यात् कृदव्ययस्यैव ग्रहणं तेन तदुपरीत्यादि सिद्धम् ।

(३) समानाधिकरणमसमर्थवद्भवतीतितु न अधात्वविहितमित्येवं तत् ।

भर्ता ओदनस्य पाचकः। याजकादिषु तु पतिपर्यायस्य भर्तृशब्दस्य ग्रहणम् (१) कर्तरिकिम्। इक्षूणां भक्षणमिक्षुभक्षिका (२) 'जनि-) कर्तुःप्रकृतिः' तत्प्रयोजकोहेतुश्चेति निर्देशाभ्यामनित्योऽयं निषेधस्तेन घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहइत्यादि सिद्धम्।

## कर्तरि च। १६।

कर्तरि या षष्ठी तदन्तमकेन सह न समस्यते। भवतः शायिका। "पर्यायार्हर्णो" तिण्वुच्। तृच् तु नानुवर्तते, तद्योगे कर्तुरभिहितत्वेन तस्मिन् षष्ठ्यसम्भवात्।

## नित्यं क्रीडाजीविकयोः। १७।

क्रीडाजीविकयोरर्थयोः षष्ठ्यन्तमकेन सह नित्यं (३) समस्यते स तत्पुरुषः। उद्दालकपुष्पभञ्जका। क्रीडाविशेषस्य संज्ञेयम्। दन्तलेखकः।

## कुगतिप्रादयः। १८।

कुशब्दो गतिसंज्ञकाः प्रादयश्च समर्थेन नित्यं समस्यन्ते स तत्पुरुषः। कुत्सितः पुरुषः। कपुरुषः। ऊरीकृत्य। प्रादिग्रहणमगत्यर्थम्। तथाचोक्तम्। (स्वती पूजायाम्)। सुराजा। अतिराजा। दुर्निन्दायाम्। दुष्कुलम्। (आङीषदर्थे) आपिङ्गलः। (कुःपापार्थे) कुपुरुषः। (प्रादयो गताद्यर्थे प्रथमया) प्रगत आचार्यः, प्राचार्यः। प्रान्तेवासी [अत्यादयः क्रान्ताद्यर्थे द्वितीयया] अतिक्रान्तः खट्वामतिखट्वः [अवादयः क्रुष्टाद्यर्थे तृतीयया] अवक्रुष्टः कोकिलयाऽवकोकिलः [पर्यादयो ग्लानाद्यर्थे चतुर्थ्या] परिग्लानोऽध्ययनाय पर्यध्ययनः। [निरादयः क्रान्ताद्यर्थे पञ्चम्या] निष्क्रान्तः कौशाम्ब्या निष्कौशा-

---

( १ ) रुढेर्बलीयस्त्वात्।

( २ ) पर्यायार्हर्णोत्पत्तिषु ण्वुच्। धात्वर्थनिर्देशे ण्वुल् वा।

( ३ ) अविग्रहो नित्यसमासः, अस्वपदविग्रहो वा।

म्बिः । ( अव्ययं प्रवृद्धादिभिः ) पुनःप्रवृद्धम् । पुनःसुखम् । ( अव्ययमव्ययेन ) प्रप्रयज्ञपतिम् । ( उदात्तवता तिङा गतिमता च तिङाव्ययम् ) । अनुव्यचलत् । अनुव्याकरोत् ।

## उपपदमतिङ् । १९ ।

उपपदं सुबन्तं समर्थेन सह नित्यं समस्यते, अतिङन्तश्चायं तत्पुरुषसमासः । कुम्भं करोतीति, कुम्भकारः । अलौकिकं वाक्यन्तु, कुम्भ अस् कार इति । अतिङ् किम् । मा भवान् भूत् । सुपेति तृतीयान्तं नानुवर्तते, तेन गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति सिद्धम् । तत्फलन्तु, व्याघ्री (१) । अश्वक्रीती (२) ।

## अमैवाव्ययेन । २० ।

अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारं भुङ्क्ते । सम्पन्नङ्कारं लवणंकारं वा । अमैवेति किम् । अग्रेभोजम् । अग्रेभुक्त्वा । 'विभाषाऽग्रेप्रथमपूर्वेषु' इति क्त्वाणमुलौ विधियेते । अव्ययेन किम् । कुम्भकार इत्यादौ न स्यात् ।

## तृतीयाप्रभृतीन्यन्यतरस्याम् । २१ ।

उपदंशस्तृतीयायामित्यादीन्युपपदानि अमन्तेनाव्ययेन सह वा

---

(१) व्याजिघ्रतीती व्याघ्री, अत्र हि व्याङ् पूर्वाज्जिघ्रते 'रातश्चोपसर्गे' इति कः । आकारलोपे च कृते, व्याङ्घ्र शब्देन गतिसमासः । स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तये सङ्ख्याकर्मादियोगो विवक्षणीयः; तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधायेत्यादिन्यायात् ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् टाबेवस्यान्नतु ङीष् । घ्रशब्दमात्रस्य अजातिवाचित्वात् । सुबुत्पत्तेः प्रागेव जायमानस्तु समासो लिङ्गयोगानपेक्षत्वेनान्तरङ्गत्वाद्भवति, ततो जातिलक्षणो ङीष् ।

(२) कर्तृकरणेइति समासः सच कारकसमासत्वात्सुबुत्पत्तेः प्रागेव लिङ्गयोगानपेक्षत्वेन भवति । ततश्च क्रीतान्तकरणपूर्वोऽकारान्तः सम्भवति, तेन ङीष् ।

समस्यन्ते । मूलकेनोपदंशं, मूलकोपदंशम् । उच्चैः कारम् । इह समासपक्षे कृदुत्तरपदप्रकृतिस्वरः । आदिर्णमुल्यन्यतरस्यामित्याद्युदात्तत्वमसमासपक्षे तु 'उच्चैः' रित्यन्तोदात्तः । स्वरादिषु तथापाठात्कारमित्याद्युदात्तम् । अभाकिम् । पर्याप्तो भोक्तुम् ।

## क्त्वा च ॥ २२ ॥

तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते । उच्चैः कृत्य । उच्चैःकृत्वा । अव्यये यथाभिप्रेतेत्यादिना क्त्वा । समासे नञ्पूर्वे क्त्वेति ल्यप् । तृतीयाप्रभृतीनीत्येव । अलं कृत्वा । खलु कृत्वा ।

## शेषो बहुव्रीहिः ॥ २३ ॥

अधिकारोऽयम् । यस्य त्रिकस्यानुक्तः समासः स शेषः । कस्य चानुक्तः प्रथमायाः । ततश्च प्रथमान्तानां बहुव्रीहिरिति, अर्थात्समानाधिकरणानां च । कण्ठेकालइत्यादौ तु 'सप्तमी विशेषणे' इति ज्ञापकाद्बोध्यः ।

## अनेकमन्यपदार्थे ॥ २४ ॥

अनेकं सुबन्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । प्राप्तमुदकं यं, स प्राप्तोदको ग्रामः । ऊढो रथो येन, स ऊढरथोऽनड्वान् । उपहृतपशुर्देवदत्तः । उद्धृतौदना स्थाली । चित्रगुः पुरुषः । वीरपुरुषको ग्रामः । प्रथमार्थे तु न, वृष्टे देवे गतः, अनेकोक्तेर्बहूनामपि । सुसूक्ष्मजटकेशेन सुलभाजिनवाससा । पुत्री पर्वतराजस्य कुतो हेतोर्विवाहित ( बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम् ) व्यधिकरणानां मा भूत् । पञ्चभिर्भुक्तमस्य । ( अव्ययानाञ्च ) उच्चैर्मुखः । नीचैर्मुखः, ( सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च ) कण्ठेकालो यस्यसकण्ठेकालः ( समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदस्य च लोपो वक्तव्यः ) केशसमाहारश्चूडा अस्य केशचूडः । सुवर्णविकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः [ प्रादिभ्यो धातुजस्य वा ] प्रपतितं पर्णमस्य प्रपर्णः । [ नञोऽस्त्यर्थानां बहुव्रीहिरुत्तरपदलोपश्च ]

अविद्यमानःपुत्रो यस्य, सोऽपुत्रः ( सुबधिकारेऽस्तिक्षीरादिवचनम् ) अस्तिक्षीरा ब्राह्मणी ।

## संख्ययाऽव्ययासन्नादूराधिकसंख्याःसंख्येये ॥ २५ ॥

अव्ययादयः सुबन्ताः संख्येयेऽर्थे वर्तमानया संख्यया सह समस्यन्ते स च बहुव्रीहिः । दशानां समीपे ये, ते उपदशाः (१) । नव, एकादश वेत्यर्थः । आसन्नदशाः(२) अदूरदशाः । अधिकदशाः । + द्वौ वा त्रयो वा द्वित्राः । द्विर् दश, (३) द्विदशाः ।

## दिङ्नामान्यन्तराले ॥ २६ ॥

दिशां नामानि सुबन्तान्यन्तराले वाच्ये समस्यन्ते स च बहु० । दक्षिणस्याः पूर्वस्याश्च दिशोऽन्तरालं या दिक् सा दक्षिणपूर्वा 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव' इति । नामग्रहणं रूढ्यर्थं, तेनेह न, ऐन्द्र्याश्च कौवेर्याश्च दिशो यदन्तरालम् ।

## तत्र तेनेदमितिसरूपे ॥ २७ ॥

सप्तम्यन्ते ग्रहणविषये सरूपे तृतीयान्ते च प्रहरणविषये सरूपे इदं युद्धमित्यर्थे समस्येते कर्मव्यतिहारे, स च बहुव्रीहिः । इति करणं लौकिकविवक्षातात्पर्यग्राहकम् । तेनैतत्सर्वं लभ्यते । केशेषुकेशेषु गृहीत्वा इदंयुद्धं प्रवृत्तं केशाकेशि । दण्डैश्च दण्डैश्च प्रहृत्य इदंयुद्धं प्रवृत्तं दण्डादण्डि । "इच् कर्मव्यतिहारे" इतिसमासान्त इच् । तदन्तमव्ययम् । तिष्ठद्गुप्रभृतिष्विचः पठितत्वात् । अन्येषामपि दृश्यत इतिपूर्वपदस्य दीर्घः । मुष्टामुष्टि, इति तु प्रमादिकमेव ।

---

(१) बहुव्रीहौ संख्येये डजबहुगणादितिडच् ।+द्वौ वा इत्युक्ते त्रयो वेति गम्यते त्रयोवेत्युक्ते द्वे वेतिगम्यते । सैषा पञ्चाधिष्ठाना वाक्, तत्रयुक्तं बहुवचनम् ।

(२) आसन्ना दशानामिति विग्रहः । एवमग्रेऽपि ।

(३) वृत्तौ सुजर्थस्यान्तर्भावान्न प्रयुज्यते सुच् ।

# तेन सहेति तुल्ययोगे ॥ २८ ॥

तुल्ययोगे वर्तमानं सहेत्यव्ययं तृतीयान्तेन सह वा समस्यते स बहुव्रीहिः । पुत्रेण सह, सपुत्रः । सहपुत्रो वा वोपसर्जनस्येति वा सभावः । तुल्ययोगेकिम् । सहैव दशभिः पुत्रैर्भारं वहति गर्दभी विद्यमानैरेवेत्यर्थः ।

# चार्थे द्वन्द्वः ॥ २९ ॥

चार्थेव र्तमानमनेकं शेष सुबन्तं समस्यते । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । अहरहर्नयमानो गामश्वं पुरुषंपशुं वैवस्वतो न तृप्यति, अत्र गवादीनां नयतिक्रियायामेवान्वयः । गम्यमानत्वाच्चशब्दो न प्रयुज्यते, इतरस्यानुषङ्गिकत्वेनान्वयेऽ(१) न्वाचयः । यथा भिक्षामट गाञ्चानय । मिलितानामन्वयः (२) इतरेतरयोगः । यथा, धवखदिरौ छिन्धि । समूहः (३) समाहारः । यथा रथिाश्वरोहम् । शेषं किम नीलोत्पलम् । अनेकमिति किम् । होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वङ्कृत्वा पुनर्द्वन्द्वे तु होतृपोत्रोतोरप्यानङ् । समुच्चयान्वाचययोस्तु न समासोऽसामर्थ्यात् (४) ।

# उपसर्जनं पूर्वम् ॥ ३० ॥

समासे उपसर्जनं पूर्वं प्रयोज्यम् । अधिहरि । कष्टश्रित इत्यादि ।

---

(१) आनुषङ्गिकत्वमनुद्देश्यत्वम् । अन्यस्य प्राधान्यञ्च तत्सम्बन्धिक्रियायाअवश्यकर्तव्यत्वरूपम् ।

(२) परस्परापेक्षाणामुद्भूतावयवभेदसमूहरूपाणामित्यर्थः ।

(३) अनुद्भूतावयवभेदः समूह इत्यर्थः । तत्रेतरेतरयोगे उद्भूतावयवभेदसमूहस्य प्रतीत्या प्रत्येकवृत्तिधर्मरूपमेव प्रवृत्तिनिमित्तम् । समाहारे त्वतिरिक्तत्वेनैव समूहस्य भानात्समूहत्वं प्रवृत्तिनिमित्तमिति विशेषः ।

(४) एकार्थीभावरूपसामर्थ्याभावात् ।

(१)

## राजदन्तादिषु परम् ॥ ३१ ॥

राजदन्तादिषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजा, राजदन्तः। वनस्याग्रे, अग्रेवणम् ।

## द्वन्द्वे घि ॥ ३२ ॥

द्वन्द्वे घिसंज्ञकं प्राक् प्रयोज्यम् । कविदत्तौ । द्वन्द्वइति किम् । विस्पष्ट-पटुः ।

## अजाद्यदन्तम् ॥ ३३ ॥

द्वन्द्वे अजाद्यदन्तं पूर्वं प्रयोज्यम् । अश्वरथाः । (बहुष्वनियमः) इन्द्राश्वरथाः । अश्वरथेन्द्रा वा । इन्द्राग्नीत्यादौ तु परत्वादयमेव ।

## अल्पाच्तरम् ॥ ३४ ॥

निपातनात्तरप कुत्वचुत्वयोरभावश्च । द्वन्द्वेऽल्पाच् पूर्वं प्रयोज्यम्। धवखदिरौ । धनपतिरामकेशवानामित्यादौ तु पूर्वं रामकेशवयोर्द्वन्द्वस्ततो धनपतिना सह, एवञ्चाल्पाच्त्वाद्धनपतिशब्दस्यैव पूर्वनिपातः । ( अनेकप्राप्तावेकत्र नियमोऽनियमः शेषेषु ) पटुमृदुशुक्लाः । पटुशुक्लमृदवो वा । (ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम्) शिशिरवसन्तावुदगयनस्थौ। कृत्तिकारोहिण्यः । ( अभ्यर्हितञ्च ) मातापितरौ । श्रद्धामेधे । (लघ्वक्षरम्) कुशकाशम् । शरचापम् । अपरआह, ( सर्वतएवाभ्यर्हितं पूर्वं निपततीति वक्तव्यम् ) दीक्षातपसी । श्रद्धातपसी [ वर्णानामानुपूर्व्येण ] ब्राह्मणक्षत्रियविट्शूद्राः । [ भ्रातुश्च ज्यायसः ] युधिष्ठिरार्जुनौ । [ संख्याया अल्पीयस्याः ] एकादश । द्वादश [ धर्मादिषूभयम् ] धर्मार्थौ [२] । अर्थधर्मौ ।

---

(१) इदं सर्वसमासविषयम् । षष्ठीसमासकर्मधारयद्वन्द्वानां तत्र पाठात् ।
(२) एतत्सर्वं राजदन्तादिगणे गणपाठे द्रष्टव्यम् ।

## सप्तमी विशेषणे बहुव्रीहौ ॥ ३५ ॥

सप्तम्यन्तं विशेषणञ्च बहुव्रीहौ पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। चित्रगुः। (बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्) विश्वे देवाः यस्य स विश्वदेवः। विश्वयशाः। द्विपुत्रः (तयोश्च परत्वात्संख्यायाः द्व्यन्याय। त्र्यन्याय। (वा प्रियस्य) प्रियगुडः। गुडप्रियो वा (सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम्) गडुःकण्ठे यस्य, स गडुकण्ठः।

## निष्ठा ॥ ३६ ॥

निष्ठान्तं बहुव्रीहौ पूर्वं प्रयोज्यम्। कृतकटः। (निष्ठायाः पूर्व निपाते जातिकालसुखादिभ्यः परवचनम्) पलाण्डु (१) भक्षिती। मासजाता। सुखजाता। दुःखजाता। (प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः) अभ्युद्यतः। असिपाणिः। (द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन) इन्द्राग्नी। उभाभ्याम्ल्पाच्तरम्-वागग्नी। वागिन्द्रौ।

## वाऽऽहिताग्न्यादिषु ॥ ३७ ॥

आहिताग्न्यादिषु निष्ठान्तं वा पूर्वं प्रयोज्यम्। आहिताग्निः। अग्न्याहितो वा। आकृतिगणोऽयम्।

## कडाराः कर्मधारये ॥ ३८ ॥

कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः जैमिनिकडारः। कर्मधारये किम्। कडारपुरुषको ग्रामः।

इति द्वितीयः पादः ॥

---

(१) अस्वाङ्गपूर्वपदाद्वेति ङीष्।

# अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

## अनभिहिते ॥ १ ॥

अधिकारोऽयम् । तिङ्कृत्तद्धितसमासैः परिसंख्यानमिति भाष्यम् । क्रियते कटः । (१) कृतः कटः । कर्मणस्तिङ्कृद्भ्यामुक्तत्वान्न द्वितीया । औपगवः । सम्बन्धस्य तद्धितेनोक्तत्वान्न षष्ठी । चित्रगुः । समासेन स्व-स्वामिभावसम्बन्धस्योक्तत्वात् षष्ठ्यभावः । परिगणनं किम् । करोति कटं भीष्मम् । कटशब्दादुत्पद्यमानया द्वितीययाऽभिहितं कर्मेति भीष्मादिभ्यो द्वितीया न प्राप्नोति ।

## कर्मणि द्वितीया ॥ २ ॥

अनभिहिते कर्मणि द्वितीया स्यात् । कटं करोति । अनभिहिते किम् । कर्तव्यः कटः ( समयानिकषाहायोगेषूपसंख्यानम् ) समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । ( उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ) उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्जाल्मम् उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधोऽधो ग्रामम् । बुभुक्षितन्न प्रतिभाति किञ्चित् ।

---

(१) विभक्त्यर्थः संख्या, कारकं वा, तत्राद्ये कर्मणि द्वितीयेत्यस्यानभिहिते कर्मणि यदेकत्वं, तत्र द्वितीयैकवचनमित्यर्थः । अधिकाराभावे कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्त्या तदेकत्वप्रतिपादनायाम् दुर्वारः स्यात् । न च परत्वात्प्रथमैव स्यादितिवाच्यम्, कर्तव्यः कट इत्यादौ ततोऽपि परत्वेन कृद्योग लक्षणषष्ठीप्रसङ्गादन्त्ये तु कारकस्य क्तप्रत्ययादिनैवोक्तत्वात्प्रातिपदिकार्थ उत्पन्नायाः प्रथमाया एकत्वादिबोधनसम्भवादमादिविभक्तेरप्रवृत्तौ नावश्यकमिदमिति भाष्ये द्रष्टव्यम् ।

## तृतीया च होश्छन्दसि ॥ ३ ॥

जुहोतेरनभिहिते कर्मणि तृतीया स्याच्चाद्द्वितीया । यवाग्वाऽग्निहोत्रं (१) जुहोति । यवागूमग्निहोत्रं जुहोति ।

## अन्तराऽन्तरेण युक्ते ॥ ४ ॥

आभ्यां योगे द्वितीया स्यात् । अन्तरा त्वां माञ्चाग्निः । तव मम च मध्येऽग्निरित्यर्थः । मृणालसूत्रामलमन्तरेण (२) स्थितश्चलच्चामरयोर्द्वयं मः । अग्निमन्तरेण न सुखम् । साहचर्यान्निपातयोर्ग्रहणान्नेह किमनयोरन्तरेण (३) ज्ञातेनेति । युक्तग्रहणान्नेह अन्तरा त्वां माञ्च देवदत्तस्य घटः ।

(४)

## कालाध्वनोरत्यन्तसंयोगे ॥ ५ ॥

कालवाचिभ्योऽध्ववाचिभ्यश्च द्वितीया स्यात् तयोरत्यन्तसंयोगे गम्यमाने मासं कल्याणी । मासमधीते । मासं गुडधानाः । क्रोशं भुङ्क्ते । क्रोशं गिरिः । अत्यन्तसंयोगे किम् । मासस्य द्विरधीते ।

---

(१) अग्निहोत्रशब्दो ज्योतिषि वर्त्तते, हविषि च, जुहोतिश्च प्रीणनार्थः प्रक्षेपणार्थश्च । एवञ्चैतयोरुदाहरणयोराद्ये यवाग्वा करणेनाग्निहोत्रं 'ज्वलितमग्निं' प्रीणातीत्यर्थः । द्वितीये तु यवाग्वभिन्नं हविरग्नौ प्रक्षिपतीत्यर्थः । एवञ्च न्यायसिद्धे द्वितीयातृतीये, नार्थोऽनेनेति भाष्यम् ।

(२) चलच्चामरयोर्द्वयस्य मध्यइत्यर्थः ।

(३) विशेषवाच्यत्रान्तरशब्दः ।

(४) अन्तमतिक्रान्तः, अत्यन्तः स चासौ संयोगश्चेत्यत्यन्तसंयोगः । केनेत्याकाङ्क्षायां गुणक्रियाद्रव्यैरेवेति बोध्यम् । अभावेन चेति नागेशीयेऽधिकम् तेन मासंभोजनाभावइत्यस्य संग्रहः । रात्रौजागर्यादित्यादौ त्वाधिकरणविवक्षया सप्तमी अत्र कारकशब्देन शक्तिर्गृह्यते सा च कालभेदाद् भिद्यते एका हि अद्य भुजेः साधनमपरा ह्यहेऽतीते भुजेरतउक्तम् कर्तृशक्त्योरिति ।

## अपवर्गे तृतीया ॥ ६ ॥

कालाध्वनोरत्यन्तसंयोगे फलप्राप्तौ गम्यमानायां कालाध्ववाचिभ्यस्तृतीया स्यात् । अह्ना: क्रोशेन वाऽनुवाकोऽधीतः अपवर्गे किम् मासमधीतो नायातः

## सप्तमीपञ्चम्यौ कारकमध्ये ॥ ७ ॥

कारकशक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ स्तः । अद्य भुक्त्वाऽयं द्व्यहाद्वा भोक्ता शक्त्योर्मध्येऽयं कालः इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । कर्तृकर्मणोर्मध्येऽयमध्वा ।

## कर्मप्रवचनीययुक्ते द्वितीया ॥ ८ ॥

कर्मप्रवचनीययुक्ते द्वितीया स्यात् । वृक्षमनु(१) विद्योतते विद्युत । एवमन्यत्रापि ।

## यस्मादधिकम् यस्य चेश्वरवचनं तत्र सप्तमी ॥९॥

यस्मादधिकं यस्य चेश्वरवचनं तत्र कर्मप्रवचनीययुक्ते सप्तमी स्यात् । उपखार्यां द्रोणः । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः । स्वस्वामिनोः पर्यायेण (२) सप्तमी ।

## पञ्चम्यपाङ्परिभिः ॥ १० ॥

एतैः कर्मप्रवचनीयैर्योगे पञ्चमी स्यात् । अपविष्णोः । परिविष्णोः । अपेन साहचर्यात्परेर्वर्जनार्थस्य ग्रहणं तेन लक्षणादिषु न, वृक्षं परि विद्योतते विद्युत आत्रिगर्तेभ्यो वृष्टो देवः ।

---

(१) द्वितीयार्थो लक्ष्यलक्षणभावः सम्बन्धी हेतुश्चेत्यनुना द्योत्यते ।

(२) ईश्वरउच्यते येन तदीश्वरवचनमैश्वर्यं, मथवेश्वरशब्दो भावप्रधानो, यस्य स्वामिन ईश्वरत्वमुच्यतइत्यर्थः ।

## प्रतिनिधिप्रतिदाने च यस्मात्[1] ॥ ११ ॥

यस्मात् प्रतिनिधिप्रतिदाने भवतस्ततः कर्मप्रवचनीययुक्तात्पञ्चमी स्यात् । अभिमन्युरर्जुनतःप्रति । अर्जुनसदृशोऽभिमन्युरित्यर्थः । तिलेभ्यः प्रतियच्छति माषान् । ये पूर्वं गृहीतास्तिलास्तेभ्यो माषाणां प्रतिदानम् ।

## गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । १२ ।

गत्यर्थानामध्वभिन्ने कर्मणि द्वितीयाचतुर्थ्यौ स्तश्चेष्टायां गम्यमानायाम् । ग्रामं गच्छति । ग्रामाय गच्छति । ( अध्वन्यर्थग्रहणम् ) तेनेहापि न, उत्पन्थानं गच्छति, वीवधं गच्छति । ( आस्थितप्रतिषेधश्च ) (२) यो ह्युत्पथेन पन्थानं गच्छति, पथे गच्छतीत्येव तत्र भवितव्यम् । गत्येर्थत्ति किम् । ओदनं पचति । कर्मणि किम् ! अश्वेन व्रजति । चेष्टायां किम् । मनसा पितरं व्रजति । अनध्वनिकिम् । पन्थानं गच्छति । भाष्येऽनध्वनीत्यपनीयअसम्प्राप्ते कर्मणीति वचनादिह न-अजां नयति ।

## चतुर्थी संप्रदाने ॥ १३ ॥

अनुक्ते संप्रदाने चतुर्थी स्यात् । विप्राय गां ददाति । छात्रा रोचते मोदकः ( चतुर्थीविधाने तादर्थ्य उपसंख्यानम् ) कुण्डलाय हिरण्यम् । यूपाय दारु । ( क्लृपि सम्पद्यमाने च ) मूत्राय कल्पते यवागूः । उच्चाराय यवान्नम् । ( उत्पातेन ज्ञाप्यमाने ) वाताय कपिला विद्युदित्यादि ( हितयोगे च ) हितममायाविने ।

---

( १ ) पञ्चम्यर्थः सम्बन्धः । अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ, कर्मकिभावल्युडन्तौ तेन प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततइत्यर्थः । प्रतिनिधिः सदृशः । प्रतिदानं दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम् ।

( २ ) आस्थितआक्रान्तः सन् यदा पस्था गम्यते तदाऽनध्वनीति प्रतिषेधः । यदा तूत्पथेन पन्था आक्रमितुमिष्यते तदा भवत्येव चतुर्थी ।

## क्रियार्थोपपदस्य च कर्माणि स्थानिनः । १४ ।

क्रियार्था क्रिया उपपदं यस्य तस्याप्रयुज्यमानस्य तुमुनादेः कर्मणि चतुर्थी स्यात् । फलेभ्यो याति । फलान्याहर्तुमित्यर्थः । क्रियार्थोपपदस्येति किम् । प्रविश पिण्डीम् । स्थानिनः किम् । फलान्याहर्तुं याति ।

## तुमर्थाच्च भाववचनात् । १५ ।

भाववचनाश्चेतिसूत्रेण योविहितस्तदन्ताच्चतुर्थी स्यात् । यागाय याति । यष्टुं यातीत्यर्थः । (१)

## नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च । १६ ।

एभिर्योगे चतुर्थी स्यात् । गुरवे नमः । स्वस्ति छात्राय अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । अलं मल्लो मल्लाय । प्रभुः समर्थो वा । पर्याप्त्यर्थग्रहणादिह न, अलङ्कुरुते देवदत्तम् ।

(२)

## मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । १७ ।

प्राणिभिन्ने मन्यतेः कर्मणि वा चतुर्थी स्यादनादरे द्योत्ये । न त्वा तृणं, तृणाय वा मन्ये । ( नावादिष्विति वक्तव्यम् ) येषु प्राणिष्वप्राणिषु वा चतुर्थी नेष्यते ते नावादयः । न त्वा काकं मन्ये । न त्वा शुकं मन्ये । न त्वा नावं मन्ये, इत्यादि ( प्रकृष्य कुत्सितग्रहणं कर्तव्यम् ) तेनेह न-त्वां तृणं मन्ये । श्यना निर्देशादिह न-न त्वा तृणं मन्वे ।

---

( १ ) भाववचनेनैव तादर्थ्यस्य द्योतितत्वात्तादर्थ्ये चतुर्थी न स्यादिति सूत्रारम्भः

( २ ) अनादरस्तिरस्कारः, स च मन्यकर्मविशेषणन्तद्द्योतकं यत्कर्मेत्यर्थः तेन युष्मद् शब्दान्न चतुर्थी । तृणतुल्यमपि न मन्येइत्यर्थः कर्मात्र चतुर्थ्यर्थः ।

## कर्तृकरणयोस्तृतीया। १८।

अनभिहितयोः कर्तृकरणयोस्तृतीया स्यात्। अर्जुनेन बाणेन हतः कर्णः। (तृतीयाविधाने प्रकृत्यादिभ्यः उपसंख्यानम्) प्रकृत्या दर्शनीयः। प्रायेण याज्ञिकः। गम्यमानाऽपि क्रिया कारकविभक्तेर्निमित्तमिति क्रियाध्याहारेण सर्वत्र करणे तृतीयेति भाष्यम्।

## सहयुक्तेऽप्रधाने। १९।

सहयोगेऽप्रधाने तृतीया स्यात्। पुत्रेण सहागमनं देवदत्तस्य अप्रधाने किम्। प्रधानात्तृतीया मा भूत। सहयुक्तेऽप्रधानवचनमनर्थकं 'उपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वा' दन्यत्रापि यथा गाः स्वामी व्रजतीत्यत्र स्वामीश्वराधिपतीत्युपपदविभक्तिं बाधित्वा कारकविभक्तित्वाद् द्वितीया भवति, एवमत्रापि यथाप्राप्तं कारकविभक्तिरेव भविष्यति।

## येनाङ्गविकारः। २०।

येन विकृतेनावयवेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यात्। अक्ष्णा (१) काणः। पादेन खञ्जः। अङ्ग (२) ग्रहणं किम्। अक्षि काणमस्य।

## इत्थम्भूत लक्षणे। २१।

कञ्चित्प्रकारं प्राप्त इत्थम्भूतः, तल्लक्षणे तृतीया स्यात्। जटाभिस्तापसः (३)। जटाज्ञाप्यं यत्तापसत्वं तद्विशिष्ट इत्यर्थः।

---

(१) यद्यपि अक्ष्येव काणं तथापि अवयवधर्मस्य समुदाये आरोपात्तदवच्छिन्ने शरीरे च व्यवहारो निरूढः। यद्यपि काणादिशब्दा अक्ष्यादिविकारवाचका एव तथापि द्वौ विप्रौ इतिवद् व्यवहारः।

(२) येन गुणेन काणत्वादिना अवयवस्य विकारो लक्ष्यते ततस्तृतीयेत्यर्थापत्तौ अक्षि काणमस्येत्यादौ प्रथमा बाधित्वा गुणवचनादेव तृतीया स्यात्। अक्ष्णा काण इत्यादौ तु षष्ठी।

(३) यद्यपि जटाभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियां प्रति करणत्वात्तृतीया सिद्ध

## संज्ञोऽन्यतरस्यां कर्मणि ॥ २२ ॥

सम्पूर्वस्य जानातेरनभिहिते कर्मणि तृतीया वा स्यात् । पित्रा, पितरं वा संजानीते । कृद्योगे तु परत्वात्षष्ठी । मातुः संज्ञाता । ( उपपदविभक्तेश्चोपपदविभक्तिर्विप्रतिषेधेन ) तुल्यो गोभिः, स्वामी । तुल्यो गवां स्वामी । तुल्यार्थैरिति षष्ठीतृतीये भवतः ।

## हेतौ । २३ ।

हेत्वर्थे तृतीया स्यात् । हेतुरिह कारणम् । दण्डेन घटः । पुण्येन गौरवर्णः । पुण्येन दृष्टो भवान् । योग्यतामात्रयुक्तोऽनाश्रितव्यापारोऽर्थो द्रव्यगुणक्रियाविषयो हेतुः (१) । ( निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम् ) किं निमित्तं वसति । केन निमित्तेन वसति । कस्मै निमित्ताय वसति । कस्मान्निमित्ताद्वसति । कस्य निमित्तस्य वसति । कस्मिन् निमित्ते वसति । एवं कारणादिकमुदाहार्यम् ।

## अकर्तर्यृणे पञ्चमी ॥ २४ ॥

कर्तृवर्जिते ऋणे हेतौ पञ्चमी स्यात् । तृतीयाऽपवादः । शताद्बद्धः । अकर्तरिकिम् । शतेन बन्धितः । शतमिहोत्तमर्णेन धार्यमाणत्वादृणं, बन्धने प्रयोजकमिति हेतुः कर्तृसञ्ज्ञञ्च ।

## विभाषा गुणेऽस्त्रियाम् । २५ ।

अस्त्रीलिङ्गे गुणहेतौ वा पञ्चमी स्यात् जाड्यात्, जाड्येन वा बद्धः । पाण्डित्यात्, पाण्डित्येन वा मुक्तः । गुणे किम् । धनेन

---

तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम् । यत्रेत्थंभूतस्य पृथग्भूतं लक्षणं तत्र भवितव्यं प्राधान्येन, लक्षणं प्रति निर्देशादिति कमण्डलुपाणिं छात्रमद्राक्षीदित्यत्र न ।

( १ ) एतेन करणस्य व्यावृत्तिः । करणत्वन्तु क्रियामात्रविषय व्यापारनियतञ्च ।

कुलम् । अस्त्रियां किम् । बुद्धय, मुक्तः । सत्वे (१) निविशतेऽपैति पृथग्-जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुणः । बाहुलकं प्रकृतेस्तनुदृष्टेरित्युक्तेः प्रायिकमेतत् । तेन धूमादग्निमान्नास्ति घटोऽनुपलब्धेरित्यादीनां निर्वाहः ।

## षष्ठी हेतुप्रयोगे ॥ २६ ॥

हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी स्यात् । अन्नस्य हेतोर्वसति ।

## सर्वनाम्नस्तृतीया च ॥ २७ ॥

हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये सर्वनाम्न तृतीया स्यात्, चात् षष्ठी । केन हेतुना, कस्य हेतोर्वा वसति ।

## अपादाने पञ्चमी ॥ २८ ॥

अनभिहितेऽपादाने पञ्चमी स्यात् । ग्रामादागच्छति । चौराद्बिभेतीत्यादि ( पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम् ) प्रासादमारुह्य प्रेक्षते, (२) प्रासादात्प्रेक्षते । ( अधिकरणे च ) आसने उपविश्य प्रेक्षते, आसनात्प्रेक्षते । ( प्रश्नाख्यानयोश्च ) कुतो भवान् ! (३) पाटलिपुत्रात् ( यतश्चाध्वकालनिर्माणम् ) (४)

---

(१) द्रव्यमाश्रीयते ततएव द्रव्यान्निवर्तते भिन्न जातीयेषु दृश्यते यः स गुणः एतेन जातेर्गुणत्वन्निवारितम् । क्रियायास्तु पूर्वोक्तलक्षणयोगाद् गुणत्वम्प्राप्नोतीत्याह । आधेयइति उत्पाद्यो यथा घटादेःपाकजो रूपादिः । अक्रियाजोऽनुत्पाद्यो यथाऽऽकाशादेर्महत्त्वादिः । क्रिया तूत्पाद्यै व न नित्येति तस्या द्वैविध्याभावाद्गुणत्वाभावः । एवन्तु द्रव्यस्यापि गुणत्वम्प्राप्नोतीत्यतआह असत्वप्रकृतिरिति अद्रव्यस्वभाव इत्यर्थः ।

(२) चक्षुरिन्द्रिय तेजोरूपं विषयग्राहित्वात्प्रसाददेशादपक्रम्य गच्छतीत्यर्थे ध्रुवमपाये इत्येव सिद्धम् । दर्शिकपक्षे तु तेजोरूपमिन्द्रियमन्यदन्यदुत्पद्यतेइत्यर्थः ।

(३) अत्रापि आगच्छतीति प्रयोक्तव्यं सन्न प्रयुज्यते ।

(४) अत्र निस्सृत्येत्यर्थः ।

गवीधुमतः सांकाश्यं चत्वारि योजनानि । (१) कार्तिक्या आग्रहायणी मासे । ( तद्युक्तात्काले सप्तमी ) कार्तिक्या आग्रहायणी मासे ( अध्वनः प्रथमा च ) गवीधुमतः सांकाश्यं चत्वारि योजनानि, चतुर्षु योजनेषु वा ।

## अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ॥ २९ ॥

अन्यादिभिर्युक्ते पञ्चमी स्यात् । अन्यो देवदत्तात् । आराद्देवदत्तात् । इतरो देवदत्तात् । ऋते देवदत्तात् । दिशि दृष्टः शब्दो दिक्शब्दः । तेन सम्प्रति देशकालवृत्तिनापि योगे । ग्रामात्पूर्वो देशः । चैत्रात्पूर्वः फाल्गुनः । अवयववाचिभिर्योगे तु न, तस्य परमाम्रेडितमिति लिङ्गात् । तेन पूर्वो भागः कायस्येति सिद्धम् । अञ्चूत्तरपदग्रहणं, 'षष्ठ्यतसर्थेति' बाधितुं । ग्रामात्प्राक् प्रत्यग् वा । दक्षिणा ग्रामात् । दक्षिणाहि ग्रामात् ।

## षष्ठ्यतसर्थप्रत्ययेन ॥ ३० ॥

अतसर्थप्रत्ययेन योगे षष्ठी स्यात् । दक्षिणतो ग्रामस्य । दक्षिणोत्तराभ्यामित्यसुच् । पुरस्ताद् ग्रामस्य ।

## एनपा द्वितीया ॥ ३१ ॥

एनबन्तेन योगे द्वितीया स्यात् । दक्षिणेन ग्रामम् (२) ।

## पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ॥ ३२ ॥

---

(१) कार्त्तिक्याः प्रभृत्याग्रहायणे मासे गत इतियोजनीयम् । यस्य चभावेनेति सप्तमी अत्र प्रभृतियोगे पञ्चमी भाष्यकारवचनादेव । अध्वनः प्रथमापि न्यायसिद्धैव गवीधुमतो निस्सृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततस्सांकाश्यम् । एवं च सर्वेष्टसिद्धिं प्रदर्श्य खण्डितानि । विशेषस्तु भाष्यकैयटयोः ।

(२) एनपेति योगविभागेन षष्ठ्यपीतिवृत्तिस्तेन दक्षिणेन ग्रामस्येत्यपि सिद्धम् । नैतद्भाष्ये ।

एभिर्योगे तृतीया स्यात्पञ्चमी च । पृथग् ग्रामेण, ग्रामाद्वा । एवं विनादियोगेऽपि । विनायोगे क्वचिद् द्वितीया तु 'ततोऽन्यत्रापि दृश्यत' इत्यनेन बोध्या ।

## करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य।३३।

अद्रव्यार्थेभ्यः स्तोकादिभ्यः करणे तृतीतापञ्चम्यौ स्तः । पक्षे पञ्चम्यर्थे वचनम् । स्तोकेन, (१) स्तोकाद्वा मुक्तः । एवमल्पादिभ्योऽपि । (२) असत्ववचनस्येतिकिम् । स्तोकेन विषेण हतः । करणेकिम् स्तोकं पचति ।

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ॥३४॥

दूरार्थैरन्तिकार्थैश्च योगे षष्ठी वा स्यात् । पक्षे पञ्चमी । दूरम्, आन्तिकं वा, ग्रामस्य ग्रामाद्वा ।

## दूरान्तिकार्थेभ्यो द्वितीया च ॥३५॥

दूरार्थेभ्योऽन्तिकार्थेभ्यश्च द्वितीया स्याच्चात्पञ्चमीतृतीये । ग्रामस्य दूरं, दूराद् दूरेण वा । एवमन्तिकम् । अन्तिकात् । अन्तिकेन वा । असत्ववचनस्येत्यनुवर्तते । तेनेह न-दूरः पन्थाः ।

## सप्तम्यधिकरणे च ॥ ३६ ॥

अधिकरणे सप्तमी स्याच्चकाराद्दूरान्तिकार्थेभ्यः कटे आस्ते । पठने इच्छाऽस्ति । तिलेषु तैलम् । दूरान्तिकार्थेभ्यो विभक्तित्रयमुक्तमनेन च सप्तमीति स्वार्थे चतस्रो विभक्तयः फलिताः । ( क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ) । अधीती व्याकरणे । परिगणिती याज्ञिके ( साध्वसाधुप्रयोगे च ) साधुर्देवदत्तो मातरि । असाधुर्मातुले ( कार-

---

(१) अनायासेनेत्यर्थः ।

(२) सत्ववचनत्वमिह सत्वविशेषकत्वम् । एवञ्च सामानाधिकरण्येन प्रातिपदिकार्थविशेषकं व्युदस्यते ।

कार्हाणाञ्च कारकत्वे ) ऋद्धेषु भुञ्जानेषु दरिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते । (अकारकाणाञ्चाकारकत्वे) मूर्खेष्वासीनेषु ऋद्धा भुञ्जते। वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति । (तद्विपर्यासे च) ऋद्धेष्वासीनेषु च मूर्खा भुञ्जते । ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति (निमित्तात्कर्मसंयोगे) चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

## यस्य च भावेन भावलक्षणम् ॥ ३७ ॥

यस्य क्रियया क्रियान्तरं लक्ष्यते ततः [१] सप्तमी स्यात् । निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणमित्युच्यते [२] ब्राह्मणेष्वधीयानेषु गतः । गोषु दुह्यमानासु गतः । दुग्धास्वागतः।

## षष्ठी चानादरे ॥ ३८ ॥

अनादरे गम्यमाने यस्य क्रियया क्रियान्तरं लक्ष्यते ततः षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा प्राव्राजीत् । रुदन्तं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

(३)

## स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ३९ ॥

---

(१) ज्ञापकक्रियाश्रयवाचकात् । तेन ब्राह्मणपदाधीयानपदाभ्यां सप्तमी सिद्धा । क्रियाश्रयः कर्ता कर्म च तत्र पूर्वं कर्तर्युदाहरणन्ततः कर्मणि ।

(२) काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति, काचित् स्वधारकालाव्यवहितपूर्वकालेन, यथा गोषु धुक्ष्यमाणास्वित्यादौ । काचित्स्वाधारकालान्तरकालेन यथागोषुदुग्धासु ज्ञापकं समर्थस्तस्य भावलक्षणमित्युक्तेः क्रिययामेवान्वयः । लक्ष्यलक्षणभावःशब्दबोध्यएवैतच्छास्त्रप्रवृत्तौ निमित्तं न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोध्यम् । अन्यथोदिते तमो नष्टमित्यादावेव स्यान्नतूक्तोदाहरणेषु ।

(३) ( विरूपाणामपि समानार्थाना ) मित्येकशेषस्तु न शब्दपरत्वात् । स्वाम्यर्थइत्युक्तौ पर्यायान्तरसंग्रहापत्तिः ।

स्वाम्यादिभिः सप्तभिर्योगे षष्ठीसप्तम्यौ स्तः। षष्ठ्यां प्राप्तायां सप्तम्यर्थं वचनम्। गवां गोषु वा स्वामी, ईश्वरो,ऽधिपतिः, दायादः, (गवात्मकस्य दायस्यादातेत्यर्थः) साक्षी। प्रतिभूः। प्रसूतः (गाए·वानुभवितुं जात इत्यर्थः)।

## आयुक्तकुशलाभ्याञ्चासेवायाम्। ४०।

आयुक्तकुशलाभ्यां योगे षष्ठीसप्तम्यौ स्त आसेवायां गम्यमानायाम् आसेवा तात्पर्यम्। आयुक्तो व्यापारितः। कुशलो निपुणः। आयुक्तः कुशलो वा पठनस्य पठने वा। आसेवायामिति किम्। आयुक्तो गौः शकटे। ईषद्युक्तइत्यर्थः।

(१)
## यतश्च निर्धारणम्। ४१।

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम्। यतोनिर्धारणं ततःषष्ठीसप्तम्यौ स्तः। मनुष्याणां, मनुष्येषु वा क्षत्रियाः शूराः। गवां, गोषु वा, कृष्णा बहुक्षीरा। अध्वगानां धावन्तः शीघ्रतमाः। अमीषां छात्राणां मैत्रः पटुः।

## पञ्चमी विभक्ते। ४२।

निर्धार्यमाणस्य यत्र भेद एव तत्र निर्द्धारणाश्रयणात्पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः (२)। इदञ्च सूत्रं बुद्धिकल्पितमपायमाश्रित्यापादानप्रकरणे प्रत्याख्यातम्।

## साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः। ४३।

साधुनिपुणाभ्यां योगे सप्तमी स्यादर्चायां गम्यमानायां न

---

(१) निर्धारणविशिष्टस्य एकदेशस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकारकं पृथक्करणं तद्वाचकादित्यर्थः। यतःकिम्? जात्यादिविशिष्टस्य यस्यस्वेतरव्यावृत्तधर्मवत्त्वबोधनन्ततो माभूत्। षष्ठीबाधवत् प्रथमाबाधस्यापि सम्भवात्।

(२) पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतरा इतिबोधः।

तु प्रतेः प्रयोगे । साधुर्निपुणो वा पितरि । अर्चायां किम् ? निपुणो राज्ञो भृत्यः । इह तत्वकथने तात्पर्यम् । साधुशब्दप्रयोगे त्वनर्चायामपि "साध्वसाधुप्रयोगे चे" ति वार्तिकात् ( अप्रत्यादिभिरिति वक्तव्यम् ) तेनेह न -साधुर्देवदत्तो मातरं प्रति पर्यनु वा ।

## प्रसितोत्सुकाभ्यां तृतीया च । ४४ ।

प्रसितोत्सुकाभ्यां योगे तृतीयास्याच्चात्सप्तमी । केशैः केशेषु वा प्रसितः । उत्सुको वा । बद्धइवेत्यर्थः । उत्सुकसाहचर्यात्तदर्थसदृशोऽर्थो गृह्यते

## नक्षत्रे च लुपि । ४५ ।

नक्षत्रे प्रकृत्यर्थे लुप्संज्ञया यः प्रत्ययो लुप्यते तदर्थे वर्तमानात्तृतीयासप्तम्यौ स्तोऽधिकरणे । मूलेन, मूले वा तिष्ठति । लुपि किम् । पुष्ये शनिः । अधिकरणे किम् । अद्य पुष्यः ।

(२)

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ४६ ।

मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे च प्रथमा स्यात् । ग्राम उच्चैस्तव स्वम् । ग्राम उच्चैस्ते स्वम्, स्त्री । पुमान् । नपुंसकम् । कुमारी । वृक्षः । कुण्डम् । द्रोणः । खारी । आढकम् । एकः द्वौ । बहवः । वीरः पुरुष इत्यादौ तु विशेष्यविशेषणभावस्याधिकस्य प्रतीतावपि तस्य वाक्यार्थत्वेन बहिरङ्गत्वात्प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेरन्तरङ्गत्वात्पूर्वं शक्यार्थमादाय प्रथमा । पश्चात्पदान्तरसन्निधानेन विशेषार्थप्रतीतावपि जातसंस्कारो न निवर्तत इति ।

---

( १ ) प्रातिपदिकार्थशब्देनात्रप्रवृत्तिनिमित्तं तदाश्रयश्च गृह्यते । एवञ्च प्रातिपदिकार्थ इत्यस्यालिङ्गालिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुमादयः, लिङ्गावशिष्टपरिभाषया स्त्रीशब्दोऽपि चोदाहरणम् । अन्ये लिङ्गाधिक्यादेः । द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादीनां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वयि । तस्य प्रातिपदिकार्थेनाग्रहणात्परिमाणग्रहणम् । उक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् । प्रत्ययनियमपक्षएव सूत्रकारसम्मतो मात्रग्रहणात् ।

## संबोधने च । ४७ ।

संबोधनमभिमुखीकरणम् । तत्र वर्तमानात्प्रातिपदिकात् प्रथमा स्यात् । देव ! पाहि ।

## साऽऽमन्त्रितम् । ४८ ।

संबोधने या प्रथमा तदन्तमामन्त्रितसंज्ञं स्यात् । हे पचन् ! । "आमन्त्रितस्य च" इत्यानुदात्तः ।

## एकवचनं सम्बुद्धिः । ४९ ।

संबोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् । हे कवे ! । एङ्ह्रस्वादिति सम्बुद्धिलोपः ।

## षष्ठी शेषे । ५० ।

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषस्तत्र (१) षष्ठी स्यात् राज्ञः पुरुषः ।

## ज्ञोऽविदर्थस्य करणे । ५१ ।

अज्ञानार्थस्य जानातेः शेषत्वेन विवक्षिते करणे षष्ठी स्यात् । समासनिवृत्त्यर्थमिदं प्रकरणम् । सर्पिषो ज्ञानम् । सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः । अविदर्थस्येति किम् । स्वरेण पुत्रं जानाति ।

## अधीगर्थदयेशां कर्मणि । ५२ ।

अधीगर्थदयेशां शेषत्वेन विवक्षिते कर्मणि षष्ठी स्यात् । मातुः

---

प्रवृत्तिनिमित्तं वृक्षादीनां वृक्षत्वादिकं, तदाश्रयश्च वृक्षादिरिति नैतावदेव वृक्षेत्युक्तौ प्रतीयते, किन्तु लिङ्गाद्याधिक्यन्तदर्थं लिङ्गादिग्रहणम् ।

(१) यद्यपि कर्मादिभ्यो ऽन्येऽर्था न सन्ति । यदत्रोदाह्रियते राज्ञःपुरुषइति तत्रापि राजा कर्ता पुरुषः सम्प्रदानमिति गम्यते तथापि कर्मादीनामविवक्षा शेष इति बोध्यम् ।

स्मरणम् । सर्पिषो दयनम् । ईशनं वा । कर्मणीति किम् । मातुर्गुणस्मरणम् । करणे शेषत्वेन विवक्षिते षष्ठीसमासो भवत्येव । शेषइति किम् । मातरं स्मरति ।

## कृञः प्रतियत्ने ॥ ५३ ॥

करोतेः शेषत्वेन विवक्षिते कर्मणि षष्ठी स्यात् । एधोदकस्योपस्करणम् (१) ।

## रुजार्थानां भाववचनानामज्वरेः ॥ ५४ ॥

ज्वरिवर्जितानां भावकर्तृकाणां रोगार्थानां धातूनां प्रयोगे षष्ठी स्यात् । चौरस्य रोगस्य रुजा । रोगकर्तृका चौरसम्बन्धिनी रुजेत्यर्थः । ( अज्वरिसंताप्योरिति वाच्यम् ) तेनेह न-चौरं ज्वरयति । वृषलं सन्तापयति । भाववचनानामिति किम् ? । नदी कूलानि रुजति ।

## आशिषि नाथः ॥ ५५ ॥

आशीरर्थस्य नाथतेः शेषत्वेन विवक्षिते कर्मणि षष्ठी स्यात् । सर्पिषो नाथनम् । । सर्पिर्मे भूयादित्याशासनम् । आशिषि किम् । माणवकनाथनम् । तत्सम्बन्धिनी याच्ञेत्यर्थः ।

(२)
## जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ॥ ५६ ॥

हिंसार्थानां जासयादीनां शेषत्वेन विवक्षिते कर्मणि षष्ठी स्यात् । जासीति निर्देशात् हिंसायामिति वचनाच्च चौरादिकस्य ग्रहणम् । चौरस्योज्जासनम् । चौरस्य निप्रहणम् । निप्रौ संहतौ विपर्यस्तौ व्यस्तौ च । चौरस्योन्नाटनम् (३) । चौरस्योत्क्राथनम् । चौरस्योत्पेषणम् । हिंसायामिति किम् । धानाः पिनष्टि ।

---

( १ ) दकशब्द उदकपर्यायः ;

( २ ) निप्रोपसृष्टो हनो निप्रहणः, शब्दपरत्वेऽपि हन्तरेति सौत्रत्वाण्णत्वम् ।

( ३ ) घटादेर्न ग्रहण दीर्घनिर्देशात् । एतत्सूत्रप्रामाण्यान्नटसाहचर्याच्च क्राथेश्चुरादिकस्य ग्रहणं तस्याकृतिगणत्वादिति । निपातनत्वे तु कर्मत्वेन विवक्षायां चौरस्य क्राथनमिति न सिद्ध्येत् तस्य शेषषष्ठीविषयत्वादिति नागेशः ।

## व्यवहृपणोः समर्थयोः ॥५७॥

समर्थयोर्व्यवहृपणोः शेषे कर्मणि षष्ठी स्यात् । शतस्य व्यवहरणम् । पणनं वा । शतसम्बन्धि देवनं, क्रयविक्रयरूपेण विनियोगो वेत्यर्थः । समर्थयोः किम् । शलाकाव्यवहारः । गणनेत्यर्थः । देवपणनम् । स्तुतिरित्यर्थः ।

## दिवस्तदर्थस्य ॥५८॥

द्यूतार्थस्य क्रयविक्रयरूपव्यवहारार्थस्य च दीव्यतेर्वा कर्मणि षष्ठी स्यात् । शतस्य दीव्यति । तदर्थस्य किम् । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ।

## विभाषोपसर्गे ॥५९॥

पूर्वयोगापवादः । उपसृष्टस्य तदर्थस्य दीव्यतेर्वा कर्मणि (१) षष्ठी स्यात् । शतस्य, शतं वा प्रतिदीव्यति ।

## द्वितीया ब्राह्मणे ॥६०॥

ब्राह्मणविषये प्रयोगे तदर्थस्य दीव्यतेः कर्मणि द्वितीया स्यात् । गामस्य तदहः सभायां वा दीव्येयुः ।

## प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ॥६१॥

दैवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषस्यैकवचनं-प्रेष्येति । साहचर्याद् ब्रुविरपि तादृश एव गृह्यते । प्रेष्यब्रूहीत्येनयोर्हविर्विशेषस्य वाचकात्कर्मसंज्ञकात्षष्ठी स्याद् देवतासम्प्रदाने । अग्नये छागस्य हविषो वपाया मेदसः प्रेष्यानुब्रूहि वा । प्रेष्यब्रुवोरितिकिम् । अग्नये छागं हविर्वपां मेदो जुहुधि । हविषः किम् । अग्नये गोमयान् प्रेष्य । देवतासम्प्रदाने किम् । माणवकाय पुरोडाशान् प्रेष्य (हविषः प्रस्थितस्य प्रतिषेधः) तेनेह न, इन्द्राग्नीभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रेष्य ।

---

(१) अत्र शेष इति न सम्बन्ध्यते । पूर्वोत्तरसूत्रारम्भादिति कैयटः ।

## ष्ठ्यर्थे बहुलं छन्दसि ॥६२॥

छन्दसि विषये चतुर्थ्यर्थे षष्ठी बहुलं स्यात् । गोधा कालका दार्वाघाटस्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः । बहुलग्रहणात्, पुरुषमृगश्चन्द्रमसे इत्यादौ चतुर्थ्येव ( षष्ठ्यर्थे चतुर्थी वक्तव्या ) या खर्वेण पिबति तस्यै खर्व जायते ।

## यजेश्च करणे ॥६३॥

यजतेः करणे षष्ठी वा स्यात् । घृतस्य घृतेन वा यजते ।

## कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ॥६४॥

शेष इति सम्बद्ध्यते । कृत्वोऽर्थानां प्रयोगे शेषे कालवाचिन्यधिकरणे षष्ठी स्यात् । पञ्चकृत्वोऽह्नो भोजनम् । द्विरह्नो भोजनम् । शेषे किम् । द्विरहन्यधीते ।

## कर्तृकर्मणोः कृति ॥६५॥ (१)

कृद्योगेऽनभिहितयोः कर्तृकर्मणोः षष्ठी स्यात् । भवतः शायिका । अपां स्रष्टा । कर्तृकर्मणोरिति किम् । शस्त्रेण भेत्ता । कृतीतिकिम् । तद्धितप्रयोगे मा भूत् । कृतपूर्वी कटम् (२) ।

## उभयप्राप्तौ कर्मणि ॥६६॥

उभयोः (३) प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी स्यात् ।

---

(१) अत्र शेष इति न सम्बद्ध्यते । सूत्रवैयर्थ्यापत्तेः । कृद्योगा षष्ठी समस्यत इति वार्तिकेन तत्र समासस्येष्टत्वात् कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते । तेन स्तोकम्पाक इत्यादौ क्रियाविशेषणात् षष्ठी न ।

(२) अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षयाऽकर्मकत्वाद्भावेक्ते पूर्वादिनिरिति तद्धितस्तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव । तत्रोक्तरीत्या षष्ठ्यभावेऽनभिहितत्वाद् द्वितीया । एवंरीत्या साधुत्वेऽत्रत्यभाष्यमेव मानम् ।

(३) तेनैकनिमित्तत्वलाभादोदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रि-

आश्चर्यो गवां दोहोऽगोपेन ( अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम् ) भेदिका (१) देवदत्तस्य काष्ठनाम् । चिकीर्षा (२) विष्णुमित्रस्य कटस्य ( शेषे (३) विभाषा ) शोभना खलु पाणिनेः सूत्रस्य कृतिः, पाणिनिना वा ।

(४)
## क्तस्य च वर्तमाने ॥ ६७ ॥

वर्तमानार्थस्य क्तस्य योगे षष्ठी स्यात् । राज्ञां मतः । बुद्धः । पूजितो वा । क्तस्येतिकिम् । ओदनं पचमानः । छात्रस्य हसितमित्यादौ तु कर्तुः शेषत्वेन विवक्षणात्सिद्धम् ।

## अधिकरणवाचिनश्च ॥ ६८ ॥

अधिकरणवाचिनः क्तस्य योगे षष्ठी स्यात् । इदमेषामासितं । शयितम् । इह कर्तरि षष्ठी । सकर्मकेभ्यस्त्वधिकरणे क्ते कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाविशेषात्, इदमेषां भुक्तमोदनस्य । मध्येऽपवादन्यायादुभयप्राप्तौ कर्मणीति तु कर्तृकर्मणोः कृती त्यस्यैवापवादः ।

## न लोकाव्ययनिष्ठाखलर्थतृनाम् ॥ ६९ ॥

ल, उ, उक, अव्यय निष्ठा, खलर्थ, तृन्, एषां प्रयोगे षष्ठी न स्यात् ।

---

या कर्तृकर्मणोः षष्ठीप्राप्तो नायं नियमइतिभावः । प्राप्तिपदेन चोभयोः प्रयोगएवायं निषेधइतिध्वनितम् ।

(१) धात्वर्थनिर्देशे ण्वुल् ।

(२) सन्नन्तात्करोतेरप्रत्ययादितिअप्रत्ययः ।

(३) स्त्रीप्रत्ययइत्येके तस्योक्तमुदाहरणम् । अपरे तु अकारभिन्ने कृन्मात्रे, तेन शब्दानामनुशासनमाचार्यस्याचार्येण वेत्यपि ।

(४) मतिबुद्धीति वर्त्तमाने क्तः ।

ओदनं पचन् । पचमानः । पेचिवान् । बभ्रिर्वज्रम् । पपि: सोमम् । ददिर्गाः । अत्र किकिनोर्लिड्वदतिदेशः । घटं चिकीर्षुः बालमलङ्करिष्णुः । वाराणसीं गामुकः । ( उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः ) धनस्य कामुकः । कटं कृत्वा । ( अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः ) पुरा सूर्यस्योदेतोराधेयः । पुरा वत्सानामपाकर्तोः । पुरा क्रूरस्य विसृपो विरप्शिन् । ओदनं भुक्तवान् देवदत्तः । देवदत्तेन भुक्तम् । त्वया भुक्तम् । ईषत्पानः सोमो भवता । तृन्निति शतृशानचावित्यारभ्यातृनो नकारात्प्रत्याहारः । सोमं पवमानः । नटमाघ्नानः । अधीयन् पारायणम् । कर्ता कटानिति सर्वं सिद्धम् ( द्विषः शतुर्वा वचनम् ) चौरं चौरस्य वा द्विषन् ।

## अकेनोर्भविष्यदाधमर्ण्ययोः । ७० ।

भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् यवान् लावको व्रजति । ग्रामं गमी । शतं दायी । भविष्यदाधमर्ण्ययोरिति किम् । यवानां लावकः ।

## कृत्यानां कर्तरि वा । ७१ ।

कृत्यानां योगे कर्तरि वा षष्ठी स्यात् । कर्तव्यमिदं देवदत्तेन । देवदत्तस्य वा । कर्तरि किम् । गेयो माणवकः साम्नाम् । भव्यगेयेतिकर्तरि यद्विधानादनभिहितं कर्म । भाष्ये योगविभागो दर्शितः । तद्यथा उभयप्राप्तौ 'कृत्यानां' प्रयोगे षष्ठी न भवतीति, ग्राममाकृष्टव्या शाखा देवदत्तेन । ततः 'कर्तरि वा षष्ठी स्यात् । पूर्वोक्तमुदाहरणम् ।

(१)

## तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् । ७२ ।

---

(१) तुल्यार्थैस्तुल्यत्वार्थैरित्यर्थः, अतएवातुलोपमाभ्यामिति चरितार्थम् । अतएव पर्युदासादनव्यययोग एव । तेनेवशब्दयोगे न ।

तुलोपमावर्जितैस्तुल्यार्थैर्योगे तृतीया या स्यात्पक्षे षष्ठी। तुल्यः, समः, सदृशो वा देवदत्तेन, देवदत्तस्य वा। अतुलोपमाभ्यां-किम्। तुला, उपमा वा देवदत्तस्य नास्ति।

## चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ॥ ७३ ॥

आशिषि गम्यमानायामायुष्यादिभिर्योगे चतुर्थी वा स्यात्। पक्षे षष्ठी। देवदत्ताय, देवदत्तस्य वाऽऽयुष्यं भूयात्। सर्वत्रार्थग्रहणम्, तेन पर्याययोगेऽपि। 'हितयोगे चतुर्थी वक्तव्ये' त्यस्यानाशिषि चरितार्थत्वादाशिष्यनेन विकल्प एव। आशिषिकिम्। देवदत्तस्यायुष्यमस्ति।

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥

---

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

❀

## द्विगुरेकवचनम् ॥ १ ॥

द्विगुरेकार्थप्रतिपादकः स्यात्। पञ्चानां गवां समाहारः-पञ्चगवम् (१)। गोरतद्धितइति टच् स नपुंसकमिति नपुंसकम्।

---

❀ वक्तीतिवचनम्। बाहुलकात्कर्तरि ल्युट्।

( १ ) उत्तरपदस्याकारान्तत्वाभावान्न ङीप्। पञ्चपूलीत्यादौ तु तथात्वाद्भवत्येव।

( समाहारग्रहणञ्च तद्धितार्थप्रतिषेधार्थम् ) तेनेह न, पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः ।

# द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । २ ।

प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानाञ्च द्वन्द्व एकवचनं स्यात् । पाणी च पादौ च, पाणिपादम् । मार्दङ्गिकपाणविकम् (१) । रथिकाश्वारोहम् । समाहारस्यैकत्वादेकत्वे सिद्धे नियमार्थम्प्रकरणम् । प्राण्यङ्गादीनां समाहार एव यथा स्यात् ।

# अनुवादे चरणानाम् । ३ ।

चरणवाचिनां द्वन्द्व एकवचनं स्यात् सिद्धस्योपन्यासे । चरणशब्दः कठकलापादिषु शाखाभेदेषु मुख्यः । तदध्यायिपुरुषेषु गौणः । उभयेषां 'गोत्रञ्च चरणैः सहे' ति जातिसंज्ञा । तत्र शाखाभेदवाचिनां जातिरप्राणिनामित्येकवद्भावे सिद्धे गौणेऽपि प्रवृत्तिरित्येतदर्थमिदम् । ( स्थेणोरिति वक्तव्यम् ) उदगात्कठकालापम् (२) प्रत्यष्ठात्कठकौथुमम् । ( अद्यतन्यां चेति वक्तव्यम् ) तेनेह न-नन्दन्तु कठकालापाः । तिष्ठन्तु कठकौथुमाः ।

# अध्वर्युक्रतुरनपुंसकम् । ४ ।

अध्वर्यौ विहितो यः क्रतुस्तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्व एकवचनं स्यात् । अर्काश्वमेधम् । अध्वर्युः किम् । इषुवज्रौ । सामवेदविहिताविमौ । अनपुंसकमिति किम् । राजसूयवाजपेये (३) ।

---

(१) मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । पाणिवादनं शिल्पमस्य पाणविकः शिल्पमित्यर्थेठक् तूर्यस्याङ्गं ( उपकारकं ) बोध्यम् ।

(२) इह कठेषु कालापेषु च प्रतिष्ठितेष्वावाभ्यां तत्रगन्तव्यमिति संकेतयित्वा ततः संकेतं विस्मृत्यासीनं प्रतीदमुच्यते ।

(३) इमौ हि शब्दावर्द्धर्चादिषु पठितौ यदा नपुंसकलिङ्गौ तदा प्रत्युदाहरणम् ।

## अध्ययनतोऽविप्रकृष्टाख्यानाम् । ५ ।

अध्ययनेन प्रत्यासन्ना आख्या येषान्तेषां द्वन्द्व एकवचनं स्यात् । पदकक्रमकम् । पदान्यधीते, पदकः । क्रममधीते, क्रमकः । क्रमादिभ्यो वुन् । पदान्यधीत्य क्रमोऽध्येतव्यइति स्पष्टा प्रत्यासत्तिः । अध्ययनइतिकिम् । पितापुत्रौ । अविप्रकृष्टानामितिकिम् । याज्ञिकवैयाकरणौ ।

## जातिरप्राणिनाम् । ६ ।

प्राणिवर्ज्जजातिवाचिनां द्वन्द्व एकवचनं स्यात् । आराशस्त्रि । धानाशष्कुलि । प्राणिनान्तु, ब्राह्मणक्षत्रियाः । नञिवयुक्तन्यायेन द्रव्यजातीयानामेव ग्रहणम् । तेनेह न, रूपरसौ । गमनाकुञ्चने । जातिप्राधान्यएवायं, तेन द्रव्यविवक्षायां बदरामलकानि ।

## विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ ७ ॥

विशिष्टलिङ्गानां ग्रामभिन्नानां नदीवाचिनां देशवाचिनां च द्वन्द्व एकवचनं स्यात् । उद्ध्यश्च इरावती च, उद्ध्येरावति । कुरवश्च कुरुक्षेत्रञ्च, कुरुकुरुक्षेत्रम् । भिन्नलिङ्गानां किम् । गङ्गायमुने । मद्रकेकयाः ( ग्रामप्रतिषेधे नगरप्रतिषेधः ) तेनेह न मथुरापाटलिपुत्रम् । ( उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्यः ) सौर्यञ्च केतवता च, सौर्यकेतवते । जाम्बवशाकम् ।

## क्षुद्रजन्तवः ॥ ८ ॥

क्षुद्रजन्तूनां द्वन्द्व एकवचनं स्यात् । यूकालिक्षम् । नकुलपर्यन्ताः क्षुद्रजन्तवः ।

## येषाञ्च विरोधः शाश्वतिकः ॥ ९ ।

येषां शाश्वतिको विरोधस्तेषां द्वन्द्व एकवचनं स्यात् । गोव्याघ्रम् । विरोधो वैरम् न तु सहानवस्थानादि । चकारोऽवधारणार्थस्तेन विरोधिपशुशकुनीनामयमेवैकवद्भावः । काकोलूकम् ।

## शूद्राणामनिरवसितानाम् । १० ।

अनिरवसितानां शूद्राणां द्वन्द्व एकवचनं स्यात् । यैर्भुक्ते पात्रं संस्कारेण शुद्ध्यति तेऽनिरवसिताः । तक्षायस्कारम् । रजकतन्तुवायम् । अनिरवसितानां किम् चाण्डालमृतपाः ।

## गवाश्वप्रभृतीनि च । ११ ।

गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तं द्रष्टव्यम् । गवाश्वम् (१) । गवाविकम् । गवैडिकम् । दासीदासम् (२) ।

## विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । १२ ।

वृक्षादीनां द्वन्द्वोऽश्ववडवेत्यादिद्वन्द्वत्रयञ्च विभाषैकवचनं स्यात् । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । ( फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिः ) बदरामलकम् । बदरामलकानि । हस्त्यश्वम् । हस्त्यश्वाः । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । रुरुपृषतम् । रुरुपृषताः । हंसचक्रवाकम् । हंसचक्रवाकाः । यूकालिक्षम् । यूकालिक्षाः । व्रीहियवम् । व्रीहियवाः । कुशकाशम् । कुशकाशाः । एषां किम् । दधिघृतम् । दधिघृते । अश्ववडवम् अश्ववडवे । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे ।

## विप्रतिषिद्धञ्चानधिकरणवाचि । १३ ।

विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात् । शीतोष्णम् । शीतोष्णे । समाहारस्य पाक्षिकत्वाद्यो विभाषैकवद्भावः प्राप्तः स चेद् विप्रतिषिद्धानान्तर्हि अद्रव्यवाचिनामेवेति नियमार्थम्, तेन द्रव्यवाचिनामितरेतरयोग एव । शीतोष्णे, उदके ।

---

(१) अत्र पशुद्वन्द्वे विभाषा प्राप्ता ।

(२) पुमान्स्त्रियेति प्राप्तस्य एकशेषस्य बाधः ।

विप्रतिषिद्धं किम् । नन्दकपाञ्चजन्यौ । अविप्रतिषिद्धत्वात्पाचिकः समाहारः ।

(१)

## न दधिपय आदीनि । १४ ।

एतानि नैकवत्स्युः (२) दधिपयसी । मधुसर्पिषी । सर्पिर्मधुनी । व्यञ्जनत्वाज्जातिरप्राणिनामिति वा प्राप्तः । विशेषस्तु गणपाठे द्रष्टव्यः ।

## अधिकरणैतावत्त्वे च । १५ ।

द्रव्यस्यैतावत्त्वे गम्यमाने यो द्वन्द्वः स नैकवत्स्यात् (३) । दश दन्तोष्ठाः ।

## विभाषा समीपे । १६ ।

अधिकरणैतावत्त्वस्य समीपे विभाषैकवचनं स्यात् । उपदशं (४) पाणिपादम् । उपदशाः पाणिपादाः । उपदशमित्यत्र त्वव्ययीभावः । उपदशा इति बहुव्रीहिः ।

## सनपुंसकम् । १७ ।

समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात् पञ्चगवम् । दन्तोष्ठम् । प्रकरणादेवानुवाग्ये लब्धे सग्रहणमेतत्प्रकरणानुपात्तस्यापि समाहारद्वन्द्वस्य संग्रहार्थम्, तेन संज्ञापरिभाषमित्यादि सिद्धम् ।

---

(१) नियमप्रक्रमेऽपि नानेन नियमस्यैव निषेधः । ब्रह्मप्रजापत्यादिषु नियमाप्राप्तेः । तत्साहचर्य्यान्न 'चार्थेद्वन्द्व' इतिसूत्रविहितसमाहारस्य नियममात्रस्य च निषेधः । अत्रार्थे गणे द्विवचनान्तानामेव पाठोपि प्रमाणमिति नागेशः ।

(२) यद्यदेकवचनविषयशास्त्रं विधायकं नियामकं वा प्राप्नोति तन्नेत्यर्थः ।

(३) अयमपि पूर्वसूत्रवदुभयोर्निषेधः । विशेषस्तुभाष्यादितो निर्णयः ।

(४) नवैकादश वा पाणिपादसमूह इत्यर्थः ।

## अव्ययीभावश्च । १८ ।

अयं नपुंसकं स्यात् । अधिहरि । अतिगङ्गम् । पूर्वपदार्थप्रधानस्य लिङ्गत्वेऽन्यपदार्थप्रधानस्य विशेष्यलिङ्गत्वे प्राप्ते वेद मुच्यते ।

## तत्पुरुषोऽनञ्कर्मधारयः । १९ ।

अधिकारोऽयम् ।

## संज्ञायां कन्थोशीनरेषु । २० ।

कन्थान्तस्तत्पुरुषो नपुंसकं स्यात् सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशामस्यापत्यानि, सौशमयस्तेषां कन्था सौशमिकन्थम् । संज्ञायांकिम् । वीरणकन्था । उशीनरेषुकिम् । दाक्षिकन्था ।

## उपज्ञोपक्रमं तदाद्याचिख्यासायाम् । २१ ।

उपज्ञान्तउपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात् तदाद्याचिख्यासायाम् । पाणिनेरुपज्ञा, (१) पाणिन्युपज्ञं ग्रन्थः । त्वदुपक्रमं सौजन्यम् । इहशास्त्रे विवक्षैव नियामिका न वस्तुस्थितिरिति । उपज्ञोपक्रममितिकिम् । वाल्मीकिश्लोकाः । तदाद्याचिख्यासायामितिकिम् । देवदत्तोपज्ञो रथः ।

## छाया बाहुल्ये । २२ ।

छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थस्य बाहुल्ये गम्यमाने । इक्षूणां छाया, इक्षुच्छायम् । इक्षुच्छायानिषादिन्य इत्यत्र त्वाकारप्रश्लेषो बोध्यः । बाहुल्येकिम् । कुड्यच्छाया ।

## सभा राजाऽमनुष्यपूर्वा । २३ ।

राजपूर्वाऽमनुष्यपूर्वा च या सभा तदन्तस्तत्पुरुषो नपुंसकं

---

(१) उपज्ञायते इति उपज्ञा कर्मण्यङ् । कर्तृषष्ठ्या समासे पाणिनिसम्बन्ध्याद्यज्ञानविषयइत्यर्थः ।

स्यात् । इनसभम् । ईश्वरसभम् ( पर्यायस्यै (१)वेष्यते) नेह राजसभा । चन्द्रगुप्तसभा । अमनुष्यशब्दो रूढया रक्षः पिशाचादीनाह । रक्षःसभम् । नेह, काष्ठसभा ।

## अशाला च ॥ २४ ॥

अशालावाची यः सभाशब्दस्तदन्तस्तत्पुरुषो नपुंसकं स्यात् । ब्राह्मणसभम् । अशालेति किम् ! अनाथसभा । तत्कुटीत्यर्थः ।

## विभाषा सेनासुराच्छायाशालानिशानाम् ॥ २५ ॥

सेनाद्यन्तस्तत्पुरुषो नपुंसकं वा स्यात् नञ्कर्मधारयं वर्जयित्वा क्षत्रियसेनम् । क्षत्रियसेना । यवसुरम् । यवसुरा । कुडयच्छायम् । कुडयच्छाया । गोशालम् । गोशाला । श्वनिशम् । श्वनिशा । तत्पुरुषः किम् । दृढसेनो राजा । अनञ् किम् । असेना । अकर्मधारयः किम् । परमसेना ।

(२)

## परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः । २६ ॥

द्वन्द्वतत्पुरुषयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धं पिप्पल्याः, अर्द्धपिप्पली । ( प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः ) प्राप्तो जीविकां । प्राप्तजीविकः । आपन्नो जीविका, मापन्नजीविकः । अलंजीविकायै, अलंजीविकः निष्कान्तः कौशाम्ब्याः, निष्कौशाम्बिः ।

---

(१) पर्य्यायवचनस्येतिवाच्ये पर्य्यायस्येत्युक्तिः सत्या सत्यभामेतिवत् ।
पर्य्यायेण लिङ्गं स्यात् । इष्यते तु
(२) द्वन्द्वस्योभयपदार्थप्रधानत्वात्पूर्वोत्तरपदयोः पर्य्यायेण लिङ्गं स्यात् । इष्यते तु उत्तरपरस्य यल्लिङ्गं तदेव समासस्य स्यादित्यारम्भः । तत्पुरुषस्तु पूर्वपदार्थप्रधानः उत्तरपदार्थप्रधानश्च । तत्राद्ये एकदेशिसमासस्तदर्थं तत्पुरुषग्रहणम् । अन्त्ये तु दैवकृतं परवल् लिङ्गमिति । भाष्यकृता एकदेशिसमासस्थले कर्मधारयमिष्टं कृत्वा नारम्भणीयमेकदेशिसमास इत्युक्तम् उत्तरमुनित्वाद्बहुलदयदर्शित्वाच्च तद्वचनस्य प्रामाण्यमिति षष्ठीसमासो न भविष्यतीति तत्पुरुषग्रहणं वार्तिकञ्च न कार्य्यमिति ।

## पूर्ववदश्ववडवौ । २७ ।

द्विवचनमतन्त्रम् । अश्ववडवयोः पूर्वस्येव लिङ्गं स्यात् । अश्ववडवौ अश्ववडवानित्यादि ।

## हेमन्तशिशिरावहोरात्रे च छन्दसि । २७ ।

छन्दसि विषये हेमन्तशिशिरावहोरात्रे च पूर्ववत्स्तः । हेमन्तश्च शिशिरश्च, हेमन्तशिशिरौ । । अहश्च रात्रिश्च, अहोरात्रे । लोके तु दुःखे हेमन्तशिशिरे । अहोरात्रौ पुण्यौ ।

## रात्राह्नाहाः पुंसि । २९ ।

रात्रान्तः, अह्नान्तः, अहान्तश्च द्वन्द्वस्तत्पुरुषः पुंसि । रात्रेः पूर्वः । पूर्वरात्र । एकदेशिसमासः । अहः सर्वैकदेशेत्यच् । पूर्वाह्णः । राजाहः सखिभ्य इतिटच् । अह्नोऽह्नइत्यह्नादेशः । अह्नोऽदन्तादिति णत्वम् । द्व्यहः । न संख्यादेरित्यह्नादेशाभावः । अह्नष्टखोरिति टिलोपः । अहश्च रात्रिश्च, अहोरात्रः ( अनुवाकादयः पुंसि ) अनुवाकः । शयुवाकः ।

## अपथं नपुंसकम् । ३० ।

तत्पुरुषेऽपथशब्दो नपुंसकं स्यात् । न पन्थाः । अपथम् । बहुव्रीहौ तु, अपथो देशः । कृतसमासान्तनिर्देशान्नेह, अपन्थाः ( पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् ) पुण्याहम् । सुदिनाहम् । सुदिन शब्दः प्रशंसार्थकः । ( पथः संख्याव्ययादेरिति वक्तव्यम् ) द्विपथम् । विपथम् । ( द्विगुश्च नपुंसकलिङ्गो भवतीति वक्तव्यम् ) पञ्चगवम् । दशगवम् । (१) अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते ) पञ्चपूली । वाऽऽबन्तः ) पञ्चखटट्वी । पञ्चखट्वम् । ( अनो नलोपश्च वा स्त्रियां

---

( १ . एतदादिनि वार्तिकानि वृत्तिकृता स्त्रीप्रत्यये द्विगोरित्यत्रोपन्यस्तानि भाष्ये त्वत्रैवेति बोध्यम् ।

भाष्यते) पञ्चतक्षी । पञ्चतक्षम् । (पात्रादिभ्यः प्रतिषेधो वक्तव्यः) पञ्च-पात्रम् । द्विपात्रम् ।

## अर्धर्चाः पुंसि च ॥३१॥

अर्धर्चादयः शब्दाः पुंसि चान्नपुंसके स्युः । अर्धर्चः । अर्धर्चम् । कार्षापणः । कार्षापणम् । गोमयः । गोमयम् । बहुवचननिर्देशश्चाद्यर्थः ।

## इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥३२॥

अन्वादेशे इदमः स्थानेऽनुदात्तोऽश् आदेशः स्यात्तृतीयादौ विभक्तौ । अन्वादेशश्च कथितानुकथितमात्रम् । आभ्यां छात्राभ्यां रात्रिरधीता, अथोआभ्यामहरप्यधीतम् । अशादेशवचनं साकच्कार्थम् । इमकाभ्यां रात्रिरधीता, आभ्यामहरप्यधीतम् ।

## एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ॥३३।

एतदः स्थानेऽनुदात्त अशादेशः स्यात् त्रतसोः परतस्तौ चानुदात्तौ भवतः । एतस्मिन् ग्रामे सुखं वसामः । अत्र युक्ता अधीमहे । अतो न गन्तास्मः । अत्रात इति पदे सर्वानुदात्ते ।

## द्वितीयाटौस्स्वेनः ॥ ३४॥

इदमेतदोऽन्वादेशेऽनुदात्त एनः स्याद् द्वितीयायां टौसोश्च परतः । अनेन भोजनं कृतम्, एनं जलं पायय । अनेन रात्रिरधीता ।, एनेन दिन-मप्यधीतम् । एतौ सह वसतः, एनयोः शोभनं शीलम् ( एनदिति नपुंस-कैकवचने ) इदं कुण्डमानय, प्रक्षालयैनत् ।

## आर्द्धधातुके ॥३५॥

अधिकारोऽयम्, ण्यक्षत्रियेति यावत् । आर्द्धधातुक इति विषयसप्तमी । तेनास्तेर्भव्यमिति, परसप्तम्यान्तु भाव्यमिति स्यादित्याद्यूह्यम् ।

(१)

## अदो जग्धिर्ल्यप्ति किति ॥३६॥

अदो जग्धिः स्याल्ल्यपि तादौ किति च । प्रजग्ध्य । जग्धम् । ननु ल्यबादेशस्य समासापेक्षत्वेन बहिरङ्गत्वात्पूर्वं तादौ किति जग्धादेशे पश्चाल्ल्यपा भवितव्यमिति किल्ल्यब्ग्रहणेनेति चेन्न । एतदेव ल्यब्ग्रहणं ज्ञापयति 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' इति तत्फलन्तु 'जहातेश्च क्त्वी' त्यत्रैव । हित्वा । नेह-विहाय । जग्ध सिद्धेऽन्तरङ्गत्वात्किति ल्यबुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम् ।

(२)

## लुङ्सनोर्घस्लृ ॥३७॥

अदो घस्लृ स्याल्लुङि सनि च परतः । अघसत् । जिघत्सति । (घस्लभावेऽच्युपसंख्यानम्) प्रात्तीति प्रघसः ।

## घञपोश्च ॥३८॥

घञि अपि चादेर्घस्लादेशः स्यात् । घासः । प्रघसः । उपसर्गेऽदइत्यप् ।

## बहुलं छन्दसि ॥३९॥

अदो घस्लादेशो बहुलं स्याच्छन्दसि । घस्तान्नूनम् । (३) सग्धिश्च (४) मे । न च भवति, आत्ताम् ।

---

(१, ल्यपीति लुप्तसप्तमीकं पदम् । जग्धीत्यत्रेकार उच्चारणार्थः । अन्यथा नुमप्रसङ्गः । एवं ब्रूवोवचिरित्यादावपि ।

(२) यद्यपि घसिः प्रकृत्यन्तरमस्ति तथापि अदेरात्सीत् अदिदित्सतीत्यनिष्टं रूपं वारयितुं सूत्रम् ।

(३) लुङि 'मन्त्रे घसे' त्यादिना च्लेर्लुक् । बहुलं छन्दस्यमाङ् योगेऽपीत्यडभावः ।

(४) क्तिनि घसिभसोर्हलिचेत्युपधालोपः समानस्य छन्दसीति सभावः ।

## लिट्यन्यतरस्याम् ॥४०॥[1]

अदो घस्लृ वा स्याल्लिटि। जघास। जक्षतुः। जक्षुः। आद। आदतुः। आदुः।

## वेञो वयिः ॥४१॥

वेञो वयिरादेशो वा स्याल्लिटि। उवाय। ऊयतुः। ऊयुः। 'लिटि वयो य, इति निषेधाद्यकारस्य न सम्प्रसारणम्। 'वश्चास्यान्यतरस्यां किति' त पक्षे वकारः। ऊवतुः। ऊवुः। आदेशाभावे ववौ। ववतुः। ववुः। वेञइति सम्प्रसारणनिषेधः।

## हनो वध लिङि ॥४२॥

हनो वधादेशः स्यादार्धधातुके लिङि। वध्यात्। आर्धधातुके किम्। हन्यात्।

## लुङि च ॥४३॥

हनो वधादेशः स्याल्लुङि। अवधीत्। वधादेशोऽदन्तः। तस्यातो लोप इत्यकारलोपः। तस्य स्थानिवद्भावादतोहलादेरिति वृद्धिर्न।

## आत्मनेपदेष्वन्यतरस्याम् ॥४४॥

हनो वधो वा स्यादात्मनेपदे लुङि परतः। आवधिष्ट। आहत। आङो यमहन इत्यात्मनेपदम्।

## इणो गा लुङि ॥४५॥

इणो गाऽऽदेशः स्याल्लुङि। अगात्। गातिस्थेति सिचो लुक्। अगायि भवता (इण्वदिक इति वक्तव्यम्) अध्यगात्।

---

(१) प्रकृत्यन्तरस्यासर्वविषयत्वज्ञापनार्थमिदम्। तेन यत्र लिङ्गं वचनञ्च नास्ति तत्र तस्य प्रयोगो न। तेनाशीर्लिङि कर्तरि नास्य प्रयोगः।

## णौ गमिरबोधने ॥४६॥

अबोधनार्थे वर्तमानस्येणो गमिरादेशः स्याण्णौ परे । अधिगमयति । बोधने तु प्रत्याययति । इकोऽप्यतिदेशात्, अधिगमयति ।

## सनि च ॥४७॥

अबोधनार्थस्येणो गमिरादेशः स्यात्सनि परतः । जिगमिषति । बोधने तु प्रतीषिषति । अतिदेशादधिजिगमिषति ।

## इङश्च ॥४८॥

इङो गमिरादेशः स्यात्सनि । अधिजिगांसते । अज्झनगमांसनीति दीर्घः ।

## गाङ् लिटि (१) ॥४९॥

इङो गाङादेशः स्याल्लिटि । अधिजगे । अधिजगाते । ङित्करणं 'गाङ्कुटादिभ्य' इत्यत्र विशेषणार्थम् ।

## विभाषा लुङ्लृङोः ॥५०॥

इङो गाङादेशो वा स्याल्लुङ्लृङोः परतः । अध्यगीष्ट । अध्यगीषाताम् । अध्यैषाताम् । अध्यैष्यत । अध्यगीष्यत । आदेशपक्षे गाङ्कुटेति ङित्त्वम् । घुमास्थेतीत्त्वम् ।

## णौ च संश्चङोः ॥५१॥

सन्परे चङ्परे च णौ इङो गाङ् वा स्यात् । अधिजिगापयिषति । अध्यापिपयिषति । क्रीङ्जीनां णावित्यात्त्वम् । अध्यजीगपत् । अध्यापिपत् ।

---

(१) लिटीति परसप्तमीपक्षे लिडीति द्विलकारनिर्देशेन लावस्थायामेव गाङः प्रवृत्तेः, आर्धधातुकीयाः सामान्येन भवन्तीत्यभ्युपगमाद्वा 'द्विर्वचनेऽची' ति स्थानिवद्भावो न ।

## अस्तेर्भूः । ५२ ।

आर्धधातुकविषये अस्तेर्भूरादेशः स्यात् । भविता । भवितुमित्यादि । भुवएव सिद्धेऽस्तेरसितेत्यादिनिवृत्यर्थं सूत्रम । 'आस' इतिप्रयोगस्तु, भ्वादेरसो बोध्यस्तस्य न भूभावोऽस्तेरिति लुका निर्देशात् ।

## ब्रुवोवचिः । ५३ ।

ब्रुवो वचिरादेशः स्यादार्धधातुके विषये । उवाच । ऊचे । वक्ता । वक्तुमित्यादि । 'वच परिभाषणे' इत्यनेन सिद्धेऽपि ब्रुवोऽनिष्टप्रयोग-वारणार्थं सूत्रम् । कर्तृगामिनि क्रियाफल आत्मनेपदार्थश्च ।

## चक्षिङः ख्याञ् । ५४ ।

आर्धधातुके विषये चक्षिङः ख्याञादेशः स्यात् । तृजादौ चक्षितेत्यादि निवृत्तये, कर्त्रभिप्राये क्रियाफले आत्मनेपदार्थश्चैतत् । मुनिर्वेदं व्याख्या-स्यते ( ख्शादिर्वा ) ( असिद्धे शस्य यवचनं विभाषा ) यत्र यत्वं तत्र, ख्याता । अन्यत्र चर्त्वे, क्शाता । असिद्धत्वे प्रयोजनानि-सौप्रख्यियः । आख्यातः । पुंख्यानम् । **सस्थानत्वं** (१) नमः ख्यात्रे ( वर्जने प्रतिषेधो वक्तव्यः ) अवसंचक्ष्यः । परिसंचक्ष्यः ( असनयोश्च ) नृचक्षा रक्षः । विचक्षणः ( बहुलं तणीति वक्तव्यम् ) तणीति संज्ञाछन्दसोर्ग्रहणम् । उक्तानां सर्वेषामयं शेषः । अन्नम् । वधकम् । गात्रं पश्य । विचक्षणः । अजिरे तिष्ठति । एषु यथाप्राप्तविषयो न ।

## वा लिटि । ५५ ।

चक्षिङःख्याञ् वा स्याल्लिटि । चख्यौ । चक्शौ । चचक्षे ।

## अजेर्व्यघञपोः । ५६ ।

अजेर्वी स्यादार्धधातुके न तु घञपोः । प्रवयणीयः । प्रवायकः ।

---

(१) सस्थानो जिह्वामूलीयः स नेत्यसिद्धत्वे प्रयोजनम ।

(घञपोः प्रतिषेधे क्यप उपसंख्यानम् ) तेन समाजः । समज्येत्यत्र न । भाष्ये पूर्वस्माद्वेत्यनुवर्त्य व्यवस्थितविभाषाऽऽश्रयणादिष्टं संसाध्य घञपोर्ग्रहणं वार्तिकञ्च प्रत्याख्यातम् । तेन प्राजिता । समजनमित्यापि । सिद्धम् ।

## वा यौ ॥५७॥

अजेर्व्यादेशो वा स्याद्यौ परतः । प्रवयणो दण्डः । प्राजनो दण्डः भाष्ये त्वेतद्व्यवस्थितविभाषयैव सिद्धं वादेशविधायकमिदमित्युक्तम् । वायुः । (१) ।

(२)

## ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ॥५८॥

ण्यान्तात् क्षत्रियगोत्राद्धार्षाद् ञितश्च परयोर्युवार्थयोरणिञोर्यूनि लुक् स्यात् । कौरव्यः पिता, पुत्रश्च । श्वाफल्कः पिता, पुत्रश्च । वाशिष्ठः पिता, पुत्रश्च । वैद -पिता, पुत्रश्च । तैकायनिः । पिता पुत्रश्च । एतेभ्यः किम् । कौहडः पिता । कौहडिः पुत्रः । यूनिकिम् । वामरथ्यस्य छात्राः वामरथाः । अणिञोः किम् । दाक्षिः पिता । दाक्षायणः पुत्रः । (तद्राजाद्युवप्रत्ययस्योपसंख्यानम्) औदुम्बरि पिता, पुत्रश्च ।(अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्) जाबालि पिता, पुत्रश्च । भाण्डजङ्घि पिता, पुत्रश्च ।

## पैलादिभ्यश्च ॥५९॥

पैलादिभ्यः परस्य युवप्रत्ययस्य लुक् स्यात् । पैलः (३) पिता, पुत्रश्च । ( तद्रा (४) जाचाणः) आङ्गः पिता, पुत्रश्च ।

---

(१) यजिमनीति बाहुलकाद्युच् ।

(२) ण्यादयः सर्वे गोत्रप्रत्ययान्ता एव गृह्यन्ते. गोत्राद्यूनीत्युक्तेः ।

(३) पीलायावेत्यण् । तस्मादणोद्व्यचइतिफिञ् । तस्य लुक् ।

(४) अन्तर्गणसूत्रम् । तद्राजसंज्ञकादणः परस्य युवप्रत्ययस्य लुक्स्यात् । आङ्गः 'द्व्यञ्मगधे' त्यण् तदन्तादणोद्व्यचइतिफिञ्, तस्य लुक् ।

## इञः प्राचाम् ॥६०॥

गोत्रे य इञ् तदन्ताद्युवप्रत्ययस्य लुक् स्यात् तच्चेद् गोत्रं प्राचाम् । पान्नागारिः (१) पिता पुत्रश्च । प्राचांकिम् । दाक्षिः पिता । दाक्षायणः पुत्रः ।

## (२) न तौल्वलिभ्यः ॥६१॥

तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य न लुक् स्यात् । तौल्वलिः पिता । तौल्वलायनः (३) पुत्रः ।

## तद्राजस्य बहुषु तेनैवाऽस्त्रियाम् ॥६२॥

तद्राजसंज्ञकस्य लुक् स्यात्, तत्कृते बहुत्वे न तु स्त्रियाम् । अङ्गाः । वङ्गाः । लोहध्वजाः । तद्राजस्यकिम् । औपगवाः । बहुष्वितिकिम् । आङ्गः । तेनैवेतिकिम् । प्रियो वाङ्गो येषां तइमे प्रियवाङ्गाः । अस्त्रियामितिकिम् । आङ्ग्यः स्त्रियः ।

## यस्कादिभ्यो गोत्रे ॥६३॥

यस्कादिभ्यः परस्य गोत्रप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे न तु स्त्रियाम् । यस्काः । लह्याः । बहुषु किम् । यास्कः । लाह्यः ।

## यञञोश्च ६४॥

बहुषु वर्तमानयोर्गोत्रप्रत्यययोर्यञञोर्लुक्स्यान्न तु स्त्रियाम् । गर्गाः । विदाः । स्त्रियान्तु, गार्ग्यः स्त्रियः । गोत्रे किम् द्वीपे भवाः ।

---

(१) पन्नं (प्राप्तं) आगारं येन सपन्नागारः । तत इञ् ततो "यञञोश्चे", तिफक् तस्य लुक् ।
(२) पूर्वेण प्राप्तो निषिध्यते ।
(३) तुल्वलशब्दादिञन्तात्फक् ।

द्वैप्याः (१) उत्सस्येमे, औत्साः (२)। कथं पौत्राः। दौहित्राः! अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धं लौकिकं गोत्रम् तच्चेह न। (यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्) गार्ग्यस्य गार्ग्ययोर्वा, कुलं, गर्गकुलं। गार्ग्यकुलम्। वैदस्य वैदयोर्वा कुलं, वैदकुलम्। विदकुलं वा। यञादीनामिति किम्। आङ्गस्य कुलं, आङ्गकुलम्। एकद्वयोः किम्? गर्गाणां कुलम् गर्गकुलम्। तत्पुरुषे किम्? गार्ग्यस्य समीपमुपगार्ग्यम्। षष्ठ्याः किम्। शोभनगार्ग्यः।

## अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च। ६५।

अत्र्यादिभ्यः परस्य गोत्रप्रत्ययस्य लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। अत्रिशब्दादितश्चानिञ इति ढक्। इतरेभ्यः ऋष्यण्। अत्रयः(१)। भृगवः। कुत्साः। वसिष्ठा इत्यादिः।

## बह्वच इञः प्राच्यभरतेषु। ६६।

बह्वचः परः प्राच्यगोत्रे भरतगोत्रे च य इञ् तस्य लुक्स्यात् तत्कृते बहुत्वे न तु स्त्रियाम्। पन्नागाराः। मन्थरेषणाः। युधिष्ठिराः। अर्जुनाः। प्राग्ग्रहणेनैव। भरतग्रहणे सिद्धे पुनर्भरतग्रहणादन्यत्र प्राग्ग्रहणेन भरतग्रहणन्न। तेन इञः प्राचामित्यत्र भरतयुवप्रत्ययस्य न लुक्। औद्दालकिः पिता। औद्दालकायनः पुत्रः।

## न गोपवनादिभ्यः। ६७।

गोपवनादिभ्यः परस्य युवप्रत्ययस्य लुङ् न स्यात्। ( गोपवनादिभ्यः प्रतिषेधः प्राग्हरितादिभ्यः ) गौपवनाः। नेह-हरिताः।

---

(१) द्वीपादनुसमुद्रं यञिति यञ्।
(२) उत्सादिभ्योऽञित्यञ्।
(३) बहुष्वित्येव - आत्रेयः। तत्कृतेत्येव-प्रियात्रेयः। स्त्रियान्तु आत्रेय्यः।
(४) विदाद्यन्तर्गणोऽयम्। यञञोश्चेति प्राप्तः प्रतिषिध्यते।

## तिककितवादिभ्यो द्वन्द्वे ॥६८॥

तिककितवादिभ्यः परस्य गोत्रप्रत्ययस्य द्वन्द्वे बहुषु लुक् स्यात् । तैकायनयश्च, कैतवायनयश्च, तिककितवाः ।

## उपकादिभ्योऽन्यतरस्यामद्वन्द्वे (१) ॥६९॥

उपकादिभ्यः परस्य गोत्रप्रत्ययस्य वा लुक् स्याद् द्वन्द्वेऽद्वन्द्वे च । औपकायनाश्च, लामकायनाश्च, उपकलमकाः । अद्वन्द्वे उपकाः (२) । औपकायनाः ।

## आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् (३) ॥७०॥

एतयोरवयवस्य बहुषु वर्तमानस्य गोत्रप्रत्ययस्याणो यञश्च लुक् स्यात् शेषस्य प्रकृतिभागस्यागस्तिकुण्डिनच् एतावादेशौ स्तः । अगस्तयः(४) । कुण्डिनाः (५) ।

## सुपो धातुप्रातिपदिकयोः ॥७१॥

धातुप्रातिपदिकयोरवयवस्य सुपो लुक् स्यात् । आत्मनः पुत्रमिच्छति, पुत्रीयति । कष्टश्रितः ।

## अदिप्रभृतिभ्यः शपः ॥७२॥

(१) अद्वन्द्व इति द्वन्द्वाधिकारनिवृत्त्यर्थम् ।

(२) नडादिभ्यः फक् तस्य लुक् ।

(३) यदि लुग्ग्रहणाननुवृत्तौ प्रत्ययान्तयोरेवादेशौ स्यातां 'गोत्रेऽलुगची' ति लुक्प्रतिषेधादगस्तीयाश्छात्रा इत्यत्र वृद्धलक्षणश्छो न स्यात्—किन्तर्हि अणेव प्रसज्येत ।

(४) अगस्त्यशब्दादृष्यण् ।

(५) कुण्डिनशब्दाद्गर्गादित्वाद्यञ् ।

एभ्यः शपो लुक् स्यात् । अत्ति । हन्ति । न विश्वसेदित्यादि तु पचाद्यजन्तादाचारक्विपा बोध्यम् । गणकार्यस्यानित्यत्वाद्वा ।

## बहुलं छन्दसि । ७३ ।

छन्दसि बहुलं शपो लुक् स्यात् । वृत्रं हनति । हन्तीति लोके । अहिः शयते । ( शेते ) । अन्येभ्योऽपि । त्राध्वं नो देवाः ( त्रायध्वम् ) ।

## यङोऽचि च । ७४ ।

यङोऽचि प्रत्यये परे बहुलं लुक् स्यात् । लोलुवः । पोपुवः । इदमेवाचि लुग्विधानं ज्ञापकं, सर्वधातुभ्यः पचाद्यजित्यस्य । बाहुलकादन्यत्रापि । बोभवीति । बोभोति ।

## जुहोत्यादिभ्यः श्लुः । ७५ ।

एभ्यः शपः श्लुः स्यात् । श्लाविति सूत्रारम्भात् शबनुवर्तते न यङ् । जुहोति ।

## बहुलं छन्दसि । ७६ ।

जुहोत्यादिभ्यः शपः श्लुर्बहुलं स्याच्छन्दसि विषये । दाति प्रियाणि । ( ददाति ) अन्येभ्योऽपि भवति । पूर्णां विवष्टि । ( वष्टीत्यर्थः ) ।

## गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । ७७ ।

एभ्यः सिचो लुक् स्यात्परस्मैपदेषु । अगात् । अस्थात् । अदात् । अधात् । अपात् । अभूत । ( गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम् ) तेनेह न, अगासीन्नटः । अपासीद्धनम् । परस्मैपदेष्विति किम् । अगासातां ग्रामौ देवदत्तेन ।

## विभाषा घ्राधेट्शाच्छासः । ७८ ।

घ्रादिभ्यः सिचो वा लुक् स्यात्परस्मैपदेषु । अघ्रात् । अघ्रासीत् ।

अधात्। अधासीत्। अशात्। असासीत्। अच्छात्। अच्छासीत्। असात्। अससीत्। परस्मैपदेष्विति किम्। अघ्रासातां सुमनसौ देवदत्तेन।

## तनादिभ्यस्तथासोः ॥ ७६ ॥

तनादिभ्यः परस्य सिचो वा लुक् स्यात्तथासोः परयोः। अतत। अतनिष्ट। अतथाः। अतनिष्ठाः। थासा साहचर्यादेकवचनस्यात्मनेपदस्य च तशब्दस्य ग्रहणम्, तेनेह न अतनिष्ट यूयम्।

## मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः। ८०।

घसादिभ्यः परस्य लेर्लुक् स्यात्। अक्षन्नमीमदन्त हि। (अघसन्) माह्वर्मित्रस्य धूर्तिः (अह्वार्षीत्। प्रणङ्मर्त्यस्य (अनशत्) वृङ्वृञोः सामान्यग्रहणम्। सुरुचो वेन आवः (अवारीत्) मा नआधक्। (अधाक्षीत्) आप्रा द्यावा पृथिवी अन्तरिक्षम् (आप्रासीः) परावर्ग्भारभृद्यथा (अवर्जीत्) अक्रन् कर्मकृतः। त्वेरयं जागृवांसोऽनुग्मन् (अगमन्) अज्ञत वा अस्य दन्ताः। (अजनिष्ट) विभाषेत्यनुवर्त्तना 'न्नता अगृभ्णाज्जनिष्ट हि ष, इत्यादि सिद्धम्।

## आमः। ८१।

आमः परस्य लुक् स्यात्। ईहाञ्चक्रे। ईक्षाञ्चक्रे लक्षणप्रतिपदोक्तपरिभाषया नेह-आम। आमतुः। आमुः। अन्तरङ्गत्वाल्लादस्थायामेव लुक्। तेनामन्तस्यातिङन्तत्वादनिघातः। ततः परस्य निघातश्च सिद्ध्यतीति।

## अव्ययादाप्सुपः। ८२।

अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात्। तत्र शालायाम्। कृत्वा। हित्वा। अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावादिति वार्तिकम्। विहितविशेषणान्नेह, अत्युच्चैसौ।

## नाव्ययीभावादतोऽम्त्वपञ्चम्याः ॥८३॥

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विनाऽमादेशः स्यात्। उपकुम्भं तिष्ठति। अतः किम्। अधिहरि। अपञ्चम्याः किम्। उन्मत्तगङ्गादागतः।

## तृतीयासप्तम्योर्बहुलम् ॥८४॥

अदन्तादव्ययीभावात्परयोस्तृतीयासप्तम्योर्बहुलमम्भावः—स्यात्। उपकुम्भ, मुपकुम्भेन वा कृतम्। उपकुम्भम्। उपकुम्भे वा स्थितः। (सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम्) सुमद्रम्। उन्मत्तगङ्गम्। एकविंशतिभारद्वाजम्।

## लुटः प्रथमस्य डारौरसः ॥८५॥

लुडादेशस्य प्रथमपुरुषस्य डारौरसः स्युः। अत्ता। अत्तारौ। अत्तारः। शयिता। शयितारौ। शयितारः। अर्थत आन्तर्यादेकार्थस्यैकार्थः, द्व्यर्थस्य द्व्यर्थः, बह्वर्थस्य बह्वर्थः। आन्तर्यतो व्यवस्था त्रय एवेमे भवन्तु सर्वेषाम्॥ टेरेत्वं च परत्वात्कृतेऽपि तस्मिन्निमे सन्तु॥ अकनेकाल्त्वात्सर्वादेशो डा। डित्वसामर्थ्यादभस्यापिटेर्लोपः।

इति द्वितीयोऽध्यायः॥

---

# अथ तृतीयाध्यायस्य प्रथमः पादः

## प्रत्ययः ॥१॥

अधिकारोऽयमापञ्चमपरिसमाप्तेः आगमादीनान्तु नेयं संज्ञा महासंज्ञाकरणेनान्वर्थ(१) संज्ञाविज्ञानात् ।

## परश्च ॥२॥ अयमपि तथा ॥

दिग्योगलक्षणपञ्चमीषु पूर्वः परो वेत्यध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम् । गापोष्टगित्यादौ तु षष्ठ्यर्थ आनन्तर्यन्तत्रापि पूर्वः परो वेत्यनियमोऽस्त्येव । ननु 'विभाषासुपोबहुच्पुरस्तात्तु' तिज्ञापकेन पूर्वव्यावृत्या परएव भविष्यति किमेतेनेतिचेत् ? प्रत्ययः परो भवत्येवेतिद्योतनार्थत्वात् तेन न केवला प्रकृतिरित्यादि सिद्धम् ।

## आद्युदात्तश्च ॥३॥

अधिकारोऽयम् । आपञ्चमपरिसमाप्तेः । प्रत्यय आद्युदात्तः स्यात् । कर्तव्यम् । हर्तव्यम् । अनियतस्वरेषु प्रत्ययेषु नियमः क्रियते, उदात्त एव एव स्यात्स चादेरेव ।

## अनुदात्तौ सुप्पितौ ॥४॥

पूर्वापवादः । सुप्पितावनुदात्तौ स्तः । दृषदौ । दृषदः । पचति ।

(१) प्रतीयते अर्थः स्वेन प्रकृत्या वा यस्य स प्रत्यय इति ।

## गुप्तिज्किद्भ्यः सन् ॥५॥

गुपादिभ्यः परः प्रत्ययसंज्ञक आद्युदात्तश्च सन् स्यात् । गुपादिष्वनु-बन्धस्य केवलेऽचरितार्थत्वा 'दवयवे कृतं लिङ्ग' मितिन्यायेन(१) सन्नन्ता-दात्मनेपदम् । निन्दाक्षमाव्याधिप्रतीकारादिषु(२) सन्निष्यतइतिवृत्तिः । जुगुप्सते । तितिक्षते । चिकित्सति । निन्दादिषुकिम् ? गोपायतीत्यादन्यत्र ।

## मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ॥६॥

मानादिभ्यः परः प्रत्ययसंज्ञकः सन् स्यादभ्यासस्य दीर्घश्च । अत्रापि सन्नर्थविशेष इष्यते । मानेर्जिज्ञासायाम् । बधेर्वैरूप्ये । दानेरार्जवे । शाने-र्निशाने । मीमांसते । बीभत्सते । दीदांसते । शीशांसते । नच सन्-संयोगशिष्टो दीर्घोऽभ्यासमपेक्षमाणोऽपीत्वन्नापेक्षेत, ततः पूर्वमेव दीर्घत्वे-ऽभ्यासे ईकारो न श्रूयेतेति वाच्यं । अभ्यासविकारेषु चापवादा (३) उत्सर्गान्न बाधन्तइति ज्ञाप्यमानत्वात् ।

## धातोः कर्मणः समानकर्तृकादिच्छायां वा ॥७॥

इषेः कर्मणा समानकर्तृको यो धातुस्तस्मादिच्छायामर्थे सन् वा स्यात् । कर्तुमिच्छति, चिकिर्षति । धातुग्रहणं सन आर्द्धधातुकसंज्ञाऽर्थम् तेन यथायथमिड्गुणौ स्तः । कर्मणः किम् । गमनेनेच्छति समानकर्तृका-त्किम् । देवदत्तस्य भोजनमिच्छति यज्ञदत्तः । इच्छायांकिम् । कर्तुं जानाति ( आशङ्कायामुपसंख्यानम् ) कूलं पिपतिषति, श्वा मुमूर्षति । शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न

---

(१) अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति यं समुदायं योऽवयवो न व्यभिचरति । जुगुप्सयतीत्यादौ तु नात्मनेपदम्, तस्य दृष्टापचारत्वात् ।

(२) अत्रादिशब्देन निग्रहापनयनासनसंशया ग्राह्याः ।

(३) एतच्च दीर्घोऽकित इत्यत्राकिद्ग्रहणेन ज्ञाप्यते तत् तत्रैवस्फुटीकरिष्यामः ।

सनिष्यते । इच्छासन्नन्तादिच्छायान्न सन्, अर्थद्वारकसरूपग्रहणात् चिकीर्षितुमिच्छतीत्यत्र न। जुगुप्सितुमिच्छति, जुगुप्सिषतीत्यत्र तु स्यादेव ।

## सुप आत्मनः क्यच् ॥८॥

एषितृसम्बन्धिनः सुबन्तादिषिकर्मण इच्छायामर्थे क्यज् वा स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति (१) । कर्मणो धात्वर्थान्तर्भूतत्वात्कर्तरि भावे च प्रत्ययः । पुत्रीयते देवदत्तेन । महान्तम्पुत्रमिच्छतीत्यादावगमकत्वान्न वृत्तिः । सति च गमकत्वे "मुण्डयति माणवकमि" त्यादौ भवत्येव ( क्यचि मान्ताव्ययप्रतिषेधः ) इदमिच्छति । उच्चैरिच्छति । ( गोसमानाक्षरनान्तादित्येके ) (२) गव्यति । दधीयति । मधूयति । कर्त्रीयति । रीङृत इतिरीङ् । राजीयति । ( छन्दसि परेच्छायाम् ) मा त्वा वृका अघायवो (३) विदन् ।

## काम्यच्च ॥९॥

इषिकर्मण एषितृसम्बन्धिनः सुबन्तादिच्छायामर्थे काम्यच्च स्यात् । आत्मनो धनमिच्छति । धनकाम्यति । इत्कार्याभावात्कस्येत्संज्ञा न । द्विककारनिर्देशाद् वा ।

## उपमानादाचारे ॥१०॥

उपमानात्सुबन्तात्कर्मण आचारेऽर्थे वा क्यच् स्यात् । पुत्रमिवाचरति । पुत्रीयति शिष्यम् । द्वे ह्यत्र कर्मणी उपमानमुपमेयश्च ।

---

(१) क्यचिचेतीकारः । पुत्रीयाञ्चकार । पुत्रीयिता । पुत्रीयिष्यति । पुत्रीयतु । अपुत्रीयत् । पुत्रीयेत् । पुत्रीय्यात् । अपुत्रीयीत् । अपुत्रीयिष्यत् ।

(२) 'नः क्ये' इतिनियमात्पदत्वाभावाद्वलोपे न, सन्निपातपरिभाषया 'गव्याञ्चकारे' त्यादौ "यस्यहलः" इति यलोपो न ।

(३) अघं, व्यसनं, दुःखं, वा इच्छन्तीत्यघायवः । तच्च नात्मसम्बन्धि कश्चिदिच्छतीति । अश्वाघस्यादित्यात् ।

उपमानकर्मान्तभूतमप्युपमेयेन कर्मणा सकर्मकः (अधिकरणाच्चेति वक्तव्यम्) प्रासाद इवाचरति, प्रासादीयति कुट्याम् ।

## कर्तुः क्यङ् सलोपश्च ॥११॥

उपमानात्कर्तुः सुबन्तादाचारेऽर्थे वा क्यङ् स्यात्सान्तस्य च लोपः । अन्वाचये चकारस्तेनान्यत्रापि क्यङ् । काकः श्येनायते । बको हंसायते । 'ओजसोऽप्सरसो नित्यमन्येषान्तु विभाषयेति' ओजायते (१) अप्सरायते । पयायते । पयस्यते । ओजायमानं योअहिञ्जघानेति तु छान्दसत्वाद्बोध्यम् (आचारेऽवगल्भ* क्लिबहोडेभ्यः क्विब्वा) अवगल्भते । अवगल्भायते । क्लीबते । क्लीबायते । विहोडते । विहोडायते (सर्वप्रातिपदिकेभ्य(२) आचारे क्विब्वा वक्तव्यः) अश्व इवाचरति अश्वति, अश्वायते वा ।

(३)

## भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ॥१२॥

अच्व्यन्तेभ्यो च्विविषयेभ्योभृशादिभ्यो भवत्यर्थे क्यङ् वा स्यात् हलन्तानाञ्च लोपः । अन्वाचये चकारस्तेन हलन्तेभ्योऽहलन्तेभ्यश्च क्यङ् सिद्धो भवति । अभृशो भृशो भवतीति भृशायते । अच्विविषयत्वादिह न दिवा भृशा भवन्ति । असुमना सुमना भवति, सुमनायते । अच्वेरिति किम् ? भृशीभवति ।

## लोहितादिडाज्भ्यः क्यष् ॥१३॥

च्विविषयेभ्यो लोहितादिभ्यो डाजन्ताच्च क्यष् स्याद्भव-

---

(१) ओजः शब्दो वृत्तौ तद्वति * अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनाच्प्रत्ययस्यानुदात्तत्वानुनासिकत्वे प्रतिज्ञायेते तेनात्मनेपदम् ।

(२) प्रातिपदिकादेवायं क्विब्विधीयते न सुबन्तात्तेन पदत्वाभावादतो गुण इतिपररूपमिति । एतत्प्रातिपदिकग्रहणाल्लभ्यते ।

(३) अच्वेरिति नञिवयुक्तमन्यसदृशइतिन्यायेन च्विसदृशप्रतिपत्त्यर्थम् ।

त्यर्थे। अलोहितो लोहितो भवतीति। लोहितायति, लोहितायते। पटपटायति। पटपटायते। लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि, तेन 'नीलायते' इत्यादौ क्यङेव। लिङ्गविशिष्टपरिभाषया लोहिनीशब्दादपि लोहिनीयति। लोहिनीयते।

## कष्टाय क्रमणे। १४।

चतुर्थ्यन्तात्कष्टशब्दात् क्रमणेऽर्थे क्यङ् स्यात्। (सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्) पापाय कर्मणे क्रामति सत्रायते। एवमन्येष्वुदाहर्तव्याः। सत्रादयः शब्दा वृत्तिविषये पापपर्यायाः। तेन पापाय गच्छतीत्यर्थः।

## कर्मणो रोमन्थतपोभ्यां वर्तिचरोः। १५।

रोमन्थतपोभ्यां कर्मभ्यां वर्तिचरोरर्थयोः क्यङ् वा स्यात्। उद्गीर्णस्यावगीर्णस्य वा मन्थो रोमन्थः। रोमन्थं वर्तयति रोमन्थायते। (हनुचलने (१) इति वक्तव्यम्) तेनेह न कीटो रोमन्थं (२) वर्तयति। (तपसः परस्मैपदञ्च) तपस्यति। तपस्यते लोकजिगीषुरग्नेरिति तु छान्दसत्वाद्बोध्यः।

## बाष्पोष्मभ्यामुद्वमने। १६।

बाष्पोष्मभ्यां कर्मभ्यामुद्वमनेऽर्थे क्यङ् वा स्यात्। बाष्पमुद्वमति। बाष्पायते। ऊष्माणमुद्वमति, ऊष्मायते (फेनाच्चेति वक्तव्यम्) फेनमुद्वमति, फेनायते।

## शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे। १७।

शब्दादिभ्यः कर्मभ्यः करोत्यर्थे क्यङ् वा स्यात्। शब्दं करोति,

---

(१) हनुचलनं- हनुचलनसहचरितं चर्वितस्य मुखप्रदेशे आकृष्य चर्वणम्।

(२) अपानप्रदेशान्निःसृतं द्रव्यमश्नातीत्यर्थः।

शब्दायते । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते । 'तत्करोती' ति णिचोऽपवादः (१) । ( अटाट्टाशीकाकोटापोटासोटा-प्रुष्टाप्लुष्टाग्रहणं कर्त्तव्यम् ) अटायतेइत्यादि ( सुदिनदुर्दिनाभ्याञ्च ) सुदिनायते । दुर्दिनायते ( नीहाराच्च ) नीहारायते ।

## सुखादिभ्यः कर्तृवेदनायाम् । १८ ।

(२) कर्तृ इतिलुप्तषष्ठीकं पदम् । सुखादिभ्यः कर्मभ्यो वेदनायां क्यङ् वा स्यात् सुखादीनि कर्तृ सम्बन्धीनि चेत्स्युः । सुखं वेदयते, सुखायते । दुःखायते । कर्त्रितिकिम् । सुखं वेदयते प्रसाधको देवदत्तस्य ।

## नमोवरिवश्चित्रङः क्यच् । १९ ।

नमस्, वरिवस्, चित्रङ्, एभ्यः करणे वा क्यच् स्यात् । नमसः(३) पूजायाम् । नमस्यति गुरून् । अर्थवत्परिभाषया ' उपपदविभक्ते' रिति वा गुरुशब्दान्न चतुर्थी । वरिवसः परिचर्यायाम् । वरिवस्यति पितरम् । शुश्रूषतइत्यर्थः । चित्रङ (४) आश्चर्ये । चित्रीयते । विस्मयते , विस्मापयते वेत्यर्थः ।

## पुच्छभाण्डचीवराण्णिङ् । २० ।

पुच्छादिभ्यः कर्मभ्यःकरणेऽर्थे णिङ्स्यात् (पुच्छादुदसने व्यसने पर्यसने च (५) उत्पुच्छयते । विपुच्छयते । परिपुच्छयते । ( भाण्डात्स-

---

( १ ) अत्र पक्षे णिजपीष्यते तदर्थं मण्डूकप्लुत्या 'भृशादिभ्यो भुवी' त्यतश्चकारोऽत्रानुवर्त्तते तेन शब्दयति इत्याद्यपि ।

( २ ) सुखदुःखगहनकृच्छ्राः तृपालीकप्रतीपकरुणाश्च । कृपणः सोढइतीमे, सुखादयो दश गणे पठिताः । सोढं सहनमिभवो वा ।

( ३ ) अत्र करणग्रहणमनुवृत्तं तच्च क्रियाविशेषपरमभिधानशक्तिस्वाभाव्यादतश्च नमइत्यादि ।

( ४ ) चित्रङो ङित्करण 'मवयवे कृतमि ' ति न्यायेनात्मनेपदार्थम् ।

( ५ ) उदसनमुत्क्षेपणं, व्यसनं विविधं विरुद्धं वोत्क्षेपणं, पर्यसनं परितः क्षेपणम् ।

मा चयने ) (१) सम्भाण्डयते ( चीवरादर्जने परिधाने च ) चीवराण्यर्जति, परिधत्ते वा संचीवरयते । णकारः सामान्यग्रहणार्थः । ङकार आत्मनेपदार्थः ।

## मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।२१

मुण्डादिभ्यः कर्मभ्यः करोत्यर्थे णिज् वा स्यात् । मुण्डं करोति, मुण्डयति । एवं मिश्रयति । श्लक्ष्णयति । लवणयति ( व्रताद्भोजने तन्निवृत्तौ च ) पयः शूद्रान्नं वा व्रतयति । (वस्त्रात्समाच्छादने) संवस्त्रयति । हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् । हलयति । कलयति । अजहलत् । अचकलत् । कृतं गृह्णाति, कृतयति तूस्तानि विहन्ति, वितूस्तयति (२) ।

(३)

## धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ॥२२॥

क्रियासमभिहारेऽर्थे वर्तमानादेकाचो हलादेर्धातोर्यङ् वा स्यात् । पौनः पुन्यं भृशार्थो वा क्रियासमभिहारः । पुनः पुनरतिशयेन वा पचति, पापच्यते । दीर्घोऽकित इति दीर्घः । देदीप्यते । बोभूयते । धातोः किम् । भृशं प्राटति । एकाच इति किम् ? भृशं जागर्ति । हलादेः किम् पुनः पुनः, ईक्षते । भृशं शोभत इत्यादौ त्वनभिधानान्न । ( सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां ग्रहणं यङ् विधावनेकाजहलाद्यर्थम् ) सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाट्यते । अरार्यते । अशाश्यते । प्रोर्णोनूयते । वाच्य-

---

(१) समाचयनं राशीकरणम् ।

(२) तूस्तं केश इति श्रीभद्रः । जटीभूताः केशा इति न्यासः । पापमिति वैजयन्ती तत्करोतीत्यादिना सिद्धे माणवकं मुण्डयतीत्यादौ सापेक्षेभ्योऽपि णिजर्थम् । हलिकल्योरदन्तत्वनिपातनार्थञ्च । तेद ब्रुवोवचिरित्यादिप्रवृत्तौ वावच्यते

(३) धातोः किम् । आर्द्धधातुकसंज्ञा यथा स्यात् इत्यादि ।

ऊर्णोणुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ।

## नित्यं कौटिल्ये गतौ । २३ ।

गतौ वर्तमानाद्धातोः कौटिल्ये नित्यं यङ् स्यात् । कुटिलं क्रामति चङ्क्रम्यते । ननु वाक्येन तदर्थानवगतेर्नित्यमेव यङा भाव्यं किन्नित्यग्रहणेनेति चेन्न, गत्यर्थात्कौटिल्यएवेति विषयनियमार्थमित्येके । अपरे तु तक्रकौण्डिन्यन्यायेन सिद्धे व्यर्थमेवेति ।

## लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् । २४ ।

लुपादिभ्यो धात्वर्थगर्हायां यङ् स्यात् । गर्हितं लुम्पति, लोलुप्यते (१) । सासद्यते । चञ्चूर्यते (२) जञ्जप्यते (३) । जञ्जभ्यते । दन्दश्यते । निजेगिल्यते (४) । भावगर्हायांकिम् ! साधु जपति ।

## सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् । २५ ।

सत्यापादिचूर्णान्तेभ्यो धात्वर्थे णिच् स्याच्चुरादिभ्यश्च स्वार्थे (५) (अर्थवेदसत्यानामापुग्वक्तव्यः ) स्वभावलभ्योऽर्थविशेषोवृत्तिकारादिभिर्निर्दिश्यते । अर्थमाचष्टे, अर्थापयति । वेदापयति । सत्यङ्करोति, सत्यापयति । पाशं विमुञ्चति, विपाशयति । रूपं पश्यति

---

(१) गुणो यङ्लुकोरितिगुणः ।

(२) चरफलोश्चेतिनुक् उत्परस्यातइत्युत्, हलिचेतिदीर्घः ।

(३) जपजभेतिनुक् ।

(४) ग्रोयङीति लः ।

(५) अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति वचनात् ।

रूपयति, । वीणयोपगायति, उपवीणयति । तूलेनानुकुष्णाति, अनुतूलयति तृणाग्रम्, अनुकुष्णाति-अनुघट्टयतीत्यर्थः । श्लोकैरुपस्तौति, उपश्लोकयति । सेनया अभियाति, अभिषेणयति । उपसर्गात्-सुनोतीति षत्वम् । अभ्यषेणयत् । प्राक्सितादड्व्यवायेपीति षत्वम् । लोमान्यनुमार्ष्टिअनुलोमयति । त्वचं गृह्णाति त्वचयति । वर्मणा सन्नह्यति, संवर्मयति । वर्णं गृह्णाति, संवर्णयति । चूर्णैरवध्वंसयति, अवचूर्णयति । चोरयति । चिन्तयति ।

(१)

# हेतुमति च । २६ ।

प्रयोजकव्यापारे वाच्ये धातोर्णिच् स्यात् । गच्छन्तं प्रेरयतीति, गमयति । पाचयति । कारयति । ( तत्करोतीत्युपसंख्यानं, सूत्रागमयति । पाचयति । ) सूत्रं करोति । सूत्रयति । असुसूत्रत् । व्याकरणस्य सूत्रं घर्थम् ) सूत्रं करोति । सूत्रयति । असुसूत्रत् । व्याकरणस्य सूत्रं करोतीत्यादौ योऽसौ सूत्रव्याकरणयोरभिसम्बन्धःस उत्पन्ने प्रत्यये निवर्तते, तेन षष्ठी न किन्तु करोतेर्व्याकरणेन सामर्थ्याद्द्वितीया । व्याकरणं सूत्रयति । ( आख्यानात्कृतस्तदा (२) चष्ट इतिणिच् कृल्लुक् प्रकृतिप्रत्ययापत्तिःप्रकृतिवच्च कारकम् ) कंसवधमाचष्टे, कंसं घातयति । कंसमजीघतत् ( दृश्यर्थायाश्च प्रवृत्तौ ) मृगरमणमाचष्टे, मृगान् रमयति ( आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् ) आरात्रिविवासमाचष्टे, रात्रिं विवासयति । ( चित्रीकरणे प्रापिः ) सूर्योद्गमनं संभा-

( १ ) स्वनिष्ठाधारतानिरुपिताधेयतासम्बन्धेन हेतुर्यत्रास्ति स हेतुमान् व्यापारः ।

( २ ) आख्यायते इत्याख्यानं, कंसवधादिकम् । कृद्ग्रहणपरिभाषया समुदायस्य कृदन्तत्वम् । कंसवधमाचष्टे कंसं घातयति । हनस्तोचिण्णलोरिति तत्वम् । " हनश्च वध " इति विहितस्यापो लुक् । आदेशपरित्यागेन स्वस्वरूपेणावस्थानम् प्रकृतिप्रत्ययापत्तिः । प्रकृतिवच्चेत्यत्र चकारो भिन्नक्रमः कारकञ्चेति, कार्यमित्यध्याहार्यम् । तथाच हेतुमण्णिचः प्रकृतिभूतस्य हन्यादेर्हेतुमण्णौ यादृशं कारकं द्वितीयान्तं, यादृशञ्च कार्यं कुत्वादि तदिहापीत्यर्थः । तेन कंसं हन् इ इतिविशिष्टस्याङ्गसंज्ञायां धातुत्वे चाड्द्विर्वचने स्यातामिति न शङ्क्यम् ।

वयते, सूर्यमुद्गमयति ( नक्षत्रयोगे ज्ञः ) पुष्ययोगं जानाति, पुष्येण योजयति ।

## कण्ड्वादिभ्यो यक् । २७ ।

कण्ड्वादिभ्यो यक् स्यात्स्वार्थे । कण्डूयति । कण्डूयते । धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ।

## गुपूधूपविच्छिपणिपनिभ्य आयः । २८ ।

गुपादिभ्य आयः स्यात् स्वार्थे । गोपायति । धूपायति । विच्छायति । विच्छेस्तुदादौ पाठाच्छस्तेन विच्छायन्ती । विच्छायतीति नुम्विकल्पः । परे तु तत्र पाठात्सार्वधातुके आयविकल्पं मन्यन्ते पणायति । (१) पनायति । पनसाहचर्यात् स्तुत्यर्थः पणिरायं लभते व्यवहारार्थस्य तु 'पणते' इत्येव ।

## ऋतेरीयङ् । २९ ।

ऋतिः सौत्रो बीभत्सार्थकस्तस्मादियङ् स्यात् । ऋतीयते । ऋतेश्छङिति सिद्धे ईयङ्वचनं "धातुप्रत्ययानामायन्नादयो ने" ति ज्ञापनार्थम् । तेन, शमेः खः, शङ्ख इत्यादौ न ।

## कमेर्णिङ् । ३० ।

कमेर्णिङ् स्यात्स्वार्थे । कामयते । क्ङितिचेति वृद्धिनिषेधस्तु न तस्येग्लक्षणगुणवृद्ध्योः प्रतिषेधकत्वात् ।

(२)

## आयादय आर्द्धधातुके वा । ३१ ।

---

( १ ) अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तान्नात्मनेपदम् । केचि त्तु व्यवहारार्थादप्यायं मन्यते । तथाच भट्टिः 'न चोपलेभे वणिजां पणाया' मिति ।

( २ ) पर सप्तम्यान्तु गुपूधातोः क्तिनि गोपातिरित्यनिष्टं स्यात् ।

आर्द्धधातुकविवक्षायामायादयो वा स्युः । गोपायाञ्चकार । जुगोप । ऋतीयाञ्चक्रे । आनर्त । कामयाञ्चक्रे । चकमे ।

## सनाद्यन्ता धातवः । ३२ ।

सनादयः कमेर्णिङ्पर्यन्ताः प्रत्यया अन्ता येषान्ते धातुसंज्ञाः स्युः । जुगुप्सते । चिकीर्षति । पापच्यते ।

## (१) स्यतासी लृलुटोः । ३३ ।

धातोः स्यतासी प्रत्ययौ स्तो लृलुटोः परतः । लृइति लृङ्लृटोः सामान्य (२) ग्रहणम् । करिष्यति । अकरिष्यत् । कर्ता ।

## सिब् बहुलं लेटि । ३४ ।

लेटि परे धातोः सिब्बहुलं स्यात् । जोषिषत् । बहुलग्रहणादिह न-पताति विद्युत् ( सिब्बहुलं छन्दसि णित् ) सविता धर्म साविषत् । तृण आयूंषि तारिषत् ।

## कास् प्रत्ययादाममन्त्रे लिटि ३५ ।

कास्धातोः प्रत्ययान्ताच्च लिट्याम् स्यान्न तु मन्त्रे । कासाञ्चक्रे । जुगुप्साञ्चक्रे । अमन्त्रे किम् । कृष्णो नो नाव । अमन्त्र-ग्रहणाद् ब्राह्मणे स्यादेव, पुत्रमामन्त्रयामास ( कास्यनेकाच इति वक्तव्यम् (३) चुलुम्पाञ्चकार । दरिद्राञ्चकार ।

## इजादेश्च गुरुमतोऽनृच्छः । ३६ ।

ऋच्छतिभिन्नादिजादेर्गुरुमतो धातोराम् स्याल्लिटि । ईहा-

( १ ) मन्तेत्यादौ नलोपं वारयितुमिदित्करणम् ।

( २ ) त्यक्तानुबन्धग्रहणे सामान्यग्रहणमिति । वाचकशब्दसाम्याद्यथासंख्यम् ।

( ३ ) प्रत्ययग्रहणमपनीयेत्यनुक्त्या अइवाचरति अति । लिटि आञ्चकारेत्येवेति नागेशः

ञ्चक्रे । इजादेः किम् । ततन्त । गुरुमतः किम् ! इयाज । अनृच्छः किम् । आनर्च्छ । इयाज, इयेष इत्यादौ द्वित्वे वृद्धौ च गुरुमत्त्वादाम् प्राप्नोति । सन्निपातपरिभाषया न भवति ।

## दयायासश्च । ३७ ।

दय, अय, आस, एभ्य आम् स्याल्लिटि । दयाञ्चक्रे । पलायाञ्चक्रे । आसाञ्चक्रे ।

## उषविदजागृभ्योऽन्यतरस्याम् । ३८ ।

एभ्य आम्वा स्याल्लिटि । ओषाञ्चकार । उवोष । विदाञ्चकार । विवेद । विदेराम्सन्नियोगेनादन्तत्वन्निपात्यते । तेन गुणो न । जागराञ्चकार । जजागार ।

(२)

## भीह्रीभृहुवां श्लुवच्च । ३९ ।

एभ्यो लिटयाम्वा स्यात्तस्मिन् श्लाविव कार्यञ्च । बिभयाञ्चकार । बिभाय । जिह्रयाञ्चकार । जिह्राय । बिभराञ्चकार । बभार । जुहवाञ्चकार । जुहाव ।

## कृञ्चानुप्रयुज्यते लिटि । ४० ।

[१] आमन्ताल्लिट्परः कृञनुप्रयुज्यते । कृञिति प्रत्याहारग्रहणं, कृभ्वस्तियोगइत्यत आरभ्याकृञो ञकारात् । तेन कृभ्वस्तीतिलाभः । सम्पदिस्तु तदन्तर्भूतोऽपि न प्रयुज्यते, अनन्वितार्थत्वात् । कृभ्वस्तीनां क्रियासामान्यवाचित्वादाम्प्रकृतीनां विशेषवाचित्वात्तदर्थयोः परस्परसम्बन्धः (२) । लोलूयाञ्चक्रे लोलूयाम्बभूव, लोलूयामास । अनुप्रयोगवचनं, आमन्तस्य पश्चादेव कृञ् प्रयुज्यते न पूर्वं नापि व्यवहितमित्यर्थम् ।

---

( १ ) अतिदेशस्य प्रयोजनं द्वित्वेत्वे । ( २ ) वटीवृत्तइतिवदभेदान्वयः ।

## विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ॥४१॥

विदेर्लोट्याम्गुणाभावो लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च निपात्यते। पुरुषवचने न विवक्ष्येते। तेन विदाङ्करोतु। विदाङ्कुरुताम्। विदाङ्कुर्वन्तु। विदाङ्कुरु इत्यादि। पक्षे वेत्तु। वित्तात्। वित्ताम्। विदन्तु। इत्यादि।

## अभ्युत्सादयांप्रजनयांचिकयांरमयामकःपावयां क्रियाद्विदामक्रन्निति छन्दसि ॥४२॥

एते छन्दसि वा निपात्यन्ते। सदिजनिरमीणां एयन्तानां चिनोतेश्च लुङ्याम्, अक इत्यनुप्रयोगश्च। चिनोतेर्द्विर्वचनं कुत्वञ्चाधिकं ततः पुनातेर्ण्यन्तस्य लिङ्याम्। क्रियादिति चानुप्रयुज्यते। विदेर्लुङ्याम् गुणाभावोऽक्रन्नित्यनुप्रयोगश्च। अभ्युत्सादयामकः। अभ्युदसीषददिति लोके। प्रजनयामकः। प्राजीजनदिति लोके। चिकयामकः। अचैषीदित्यन्यत्र। रमयामकः। अरीरमदितिभाषायाम् पावयांक्रियात्। पाव्यादितिलोके। विदामक्रन्। अवेदिषुरितिलोके।

## च्लि लुङि ॥४३॥

धातोश्च्लिः स्याल्लुङि परतः। च्ल्युत्सर्गः सामान्यग्रहणार्थः।

## च्लेः सिच् ॥४४॥

इकार उच्चारणार्थः। चकारः स्वरार्थः। च्लेः स्थाने सिच् (१) स्यात्। अस्पृक्षत्। अकार्षीत्। अहार्षीत्। ( स्पृशमृशकृषतृपदृपां सिज्वा ) अस्पृक्षत्। अस्प्राक्षीत्। अमृक्षत्। अम्राक्षीत्। अकृक्षत्। अक्राक्षीत्। अतृपत्। अत्राप्सीत्। अदृपत्। अद्राप्सीत्।

---

(१) चित्करणम्, आगमाअनुदात्ता इत्यस्य बाधनार्थम्। इकारस्तूच्चारणार्थमेव फलाभावात्।

## शल इगुपधादनिटः क्सः ॥४५॥

शलन्तादिगुपधाद्धातोः परस्यानिट (१) श्च्लेः क्सः स्यात् । अधुक्षत् । अलिक्षत् । शलः किम् ? अभैत्सीत । इगुपधात्किम् । अधाक्षीत् । अनिटः किम् । अकोषीत् ।

## श्लिष आलिङ्गने ॥४६॥

विभक्तोऽयं भाष्ये श्लिषश्च्लेः क्सः स्यात् । पुषादित्वात्प्राप्तेनाङा बाधो मा भूदित्येतदर्थमिदम् । एवञ्च गणपाठसामर्थ्यादङ्, विधानसामर्थ्याच्च क्सः । उभौ प्राप्तौ, तत 'आलिङ्गने' आलिङ्गने एव क्स (२) इतिनियमार्थम् । आश्लिक्षत्पिता पुत्रम् । नियमादिह न, समाश्लिषज्जतु काष्ठम् । प्रत्यासत्त्यर्थकोऽत्र श्लिषिः ।

## न दृशः ॥४७॥

दृशश्च्लेः क्सो न स्यात् । अदर्शत् । इरित्वादङ् । ऋदृशोऽङीति गुणः । पक्षे-अद्राक्षीत् । सृजिदृशोर्झल्यमकीत्यम् ।

## णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ॥४८॥

ण्यन्तेभ्यः श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि । अबीभवत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । कर्तरि किम् ? अकारयिषातां

---

(१) च्लिरुत्सर्गस्तस्य सिचा नित्यं भाव्यमितीड्भावोपलक्षितमस्य रूपं न क्वचिद्विद्यतेऽइति च्लेरनिटइतिविशेषणमयुक्तमितिचेन्न, लिह् लि त्, इतिस्थितौ सिचा न भाव्यं-(प्रकल्प्य चापवादविषयंमुत्सर्गः प्रवर्तते) इतिन्यायात्, क्सेनापि न तावद् भाव्यं यावदस्यानिट् त्वं न ज्ञातम् । तत्र लकारस्यैवेटः प्राप्तौ तन्निषेधादनिट्त्वमस्तीतिक्सः सिद्धः । अलिक्षत् । यत्रेटः प्रतिषेधो न, तत्र सिजेवाकोषीत् ।

(२) अनन्तरस्य विधिर्वाप्रतिषेधो वेतिन्यायेनाङमेव बाधते न तु चिणं तेनाऽऽश्लेषि पिता पुत्र इत्यत्र न ।

कर्तौ देवदत्तेन (कर्मेरुपसंख्यानम्) अचकमत । णिङ्पक्षे सन्वद्भावात्सन्य-तइतीत्वं दीर्घत्वञ्च । अचीकमत ।

## विभाषा धेट्श्व्योः ॥४९॥

धेट्श्विभ्यां च्लेश्चङ् वा स्यात् । कर्त्रर्थे लुङि परतः । अदधत् । पक्षे विभाषा घ्राधेडिति सिचो वा लुक् । अधात् । तदभावे 'यम रमे' ति सक्, सिच इडिति अधासीत् । अशिश्वियत् । पक्षे अङ् । श्वयतेर इत्य-कारः । अश्वत् । तदभावे–अश्वयीत । कर्तरि किम् । अधिषातां गावौ वत्सेन ।

## गुपेश्छन्दसि ॥५०॥

गुपेः परस्य च्लेश्चङ् वा स्याच्छन्दसि विषये । इमान्नौ मित्रावरुणौ गृहानजूगुपतम् (१) । पक्षे, अगौप्तम् । अगोपिष्टम् । अगोपा यिष्टम् । इति चत्वारि छन्दसि । भाषायान्तूत्तराणि त्रीण्येव ।

## नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥५१॥

ऊनयत्यादिभ्यश्च्लेश्चङ् न स्याच्छन्दसि । मा त्वायतो जरितुः काम-मूनयीः । मा ऊनिन इति भाषायाम् । मा त्वाग्निर्ध्वनयीत् । अदध्वनदिति भाषायाम् । कममैलयीः । ऐलिलदिति लोके । आर्दयीत् आर्दिददिति भाषायाम् ।

## अस्यतिवक्तिख्यातिभ्योऽङ् ॥५२॥

अस्यत्यादिभ्यश्च्लेरङ् स्यात्कर्त्रर्थे लुङि परतः । पर्यास्थत् । पर्यास्थेताम् । पर्यास्थन्त । पुषादिपाठादेवास्यतेरङि सिद्धे पुनर्ग्रहण-मात्मनेपदार्थम् । 'उपसर्गादस्यत्यूह्योर्वा वचन' मित्यामनेपदम् । कर्म-कर्तरितशब्दे तु परत्वाच्चिण् । अन्यत्राङेव, पर्यासि । पर्यास्येताम् ।

(१) तुजादीनां दीर्घोऽभ्यासस्येति दीर्घइति हरदत्तः । कल्पेषु तु न तथा ।

अवोचत् । अवोचताम् । आख्यत् । आख्यताम् । कर्तरि किम् । कर्मणि चिण्सिचावेव यथा स्याताम् । निरासि । निरासिषाताम् ।

## लिपिसिचिह्वश्च ॥५३॥

योगविभाग उत्तरार्थः । एभ्यश्च्लेरङ् स्यात् कर्त्रर्थे लुङि परतः । अलिपत् । असिचत् । अह्वत् ।

## आत्मनेपदेष्वन्यतरस्याम् ॥५४॥

प्राप्तविभाषेयम् । लिपिसिचिह्वाभ्यश्च्लेङ् वा स्यात् कर्त्रर्थे लुङ्यात्मनेपदे परतः । अलिपत । अलिप्त । असिचत । असिक्त । अङभावे सिच् 'झलोझलि' ति सलोपः । 'लिङ्सिचा' विति कित्वाद्गुणाभावः । अह्वत । अह्वास्त ।

## पुषादिद्युताद्य्लृदितः परस्मैपदेषु ॥५५॥

श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् स्यात्परस्मैपदेषु । अपुषत् । अशुषत् । अद्युतत् । अश्वितत् । अगमत् । परस्मैपदेषु किम् । व्यद्योतिष्ट ।

(१)

## सर्तिशास्त्यर्तिभ्यश्च ॥५६॥

एभ्यश्च्लेरङ् स्यात्परस्मैपदेषु । असरत् । ऋदृशोऽङीतिगुणः । अशिषत् । शासइदङ्हलोरितीत्वम् । शासिवसीति षत्वम् । आरत् । परस्मैपदेषु किम् । समन्यवो यत्समरन्त सेना । 'अर्तिं श्रु दृशीति' वार्तिकेन तङ् ।

## इरितो वा ॥५७॥

इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदेषु परतः । अभिदत् । अभैत्सीत् । परस्मैपदेषु किम् अभित्त । स्वरितेत्त्वात्तङ् ।

(१) सर्त्यर्तिभ्यां परस्मैपदिभ्यां साहचर्य्यात् शासु अनुशिष्टावित्यस्य ग्रहणम् । अर्त्तिसर्त्योर्ऋसृगताविति जौहोत्यादिकयोरेव ग्रहणं लुग्विकरणसाहचर्य्यात् ।

## जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च । ५८ ।

एभ्यश्च्लेरङ् वा स्यात् । अजरत् । अजारीत् । स्तम्भुः सौत्रो-धातुः । अस्तभत् । अस्तम्भीत् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् । अग्लोचीत् । अ-ग्लुचत् । अग्लुञ्चीत् । अश्वत् । अश्वयीत् । ग्लुचुग्लुञ्च्वोरन्यतरो-पादानेन रूपत्रयं संसाद्ध्य धातूनामनेकार्थत्वञ्चाङ्गीकृत्यान्यतरः प्रत्याख्यातो भाष्ये ।

## कृमृदृरुहिभ्यश्छन्दसि । ५९ ।

एभ्यश्च्लेरङ् स्याच्छन्दसि । अकरत् ( अकार्षीत् ) अमरत् । व्य-त्ययेन परस्मैपदम् ( अमृत ) अदरत् । ( अदारीत् ) । यत्सानोः सा-नुमारुहत् । अरुक्षत् ।

## चिण् ते पदः । ६० ।

पद्यतेश्च्लेश्चिण् स्याल्लुङि तशब्दे परे । उदपादि सस्यम् । सम-पादि भैक्षम् । ते, इत्येकवचनं गृह्यते तस्यैव सम्भवात् । तेकिम् । उदपत्साताम् । उदपत्सत ।

## दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् । ६१ ।

एभ्यश्च्लेश्चिण् वा स्यात्तशब्दे परे । अदीपि । अदीपिष्ट । अज-नि । अजनिष्ट । अबोधि । अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । दीपिपूरिभ्यां साहचर्याज्जनि-बुद्ध्योस्तादृशोरेव ग्रहणमिति भ्वादिपठितानाञ्जनबुधबुधिरां न ।

## अचः कर्मकर्तरि । ६२ ।

अजन्ताद्धातोश्च्लेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे परे । अका-रि, अकृत वा कटः स्वयमेव । अलावि, अलविष्ट वा केदारः स्वय-मेव । अचः किम् । अभेदि काष्ठं स्वयमेव । कर्मकर्तरीतिकिम् । अकारि कटो देवदत्तेन ।

## दुहश्च । ६३ ।

दुहश्च्लेश्चिण् वा स्यात्कर्मकर्तरि तशब्दे परे । अप्राप्तविभाषेयम् । 'न दुहे' तिचिणः प्रतिषेधात् । अदोहि, अदुग्ध वा गौः स्वयमेव । कर्मकर्तरि किम् । अदोहि गौर्गोपालेन ।

## न रुधः । ६४ ।

रुधश्च्लेश्चिण्न कर्मकर्तरि तशब्दे परे । अरुद्ध गौः स्वयमेव । शुद्धे कर्मणि तु चिणेव, अवारोधि गौर्गोपेन ।

## (१) तपोऽनुतापे च । ६५ ।

तपश्च्लेश्चिण्न स्यादनुतापे चात्कर्मकर्तरि । तपस्तापसमताप्सीत् । तापसः स्वयमेव तपोऽतप्त । आर्जिजदित्यर्थः । अत्र तपस्तपःकर्मकस्यैवेति कर्मवद्भावातिदेशप्राप्तस्य निषेधः । अन्वतप्त पापेन (२) कर्त्रा पापेन अभ्याहत इत्यर्थः ।

## चिण् भावकर्मणोः । ६६ ।

भावकर्मवाचिनि सार्वधातुके परतोधातोश्चिण् स्यात् । अशायि देवदत्तेन । अकारि कटो यज्ञदत्तेन ।

## सार्वधातुके यक् । ६७ ।

भावकर्मवाचिनि सार्वधातुके परतो धातोर्यक् स्यात् । आस्यते भवता । गम्यते ग्रामस्त्वया ।

## कर्तरि शप् । ६८ ।

---

(१) अनुतापः पश्चात्तापः । तस्य ग्रहणमकर्मकर्त्रर्थम् । तत्र हि भावकर्मणोरपि प्रतिषेधो भवति ।

(२) शुद्धे कर्मणि लकारः । पापेनेति कर्त्तरि तृतीया ।

कर्तृवाचिनि सार्वधातुके परे धातोः शप् स्यात् । पचति । पठति । कर्तृग्रहणं कर्मवत्कर्मणेत्यत्रोपयोक्ष्यते, इह तु सार्वधातुकसामान्ये विहितस्य शपो भावकर्मणोरितिविशेषविहितेन यका बाधात् ।

## दिवादिभ्यः श्यन् । ६९ ।

एभ्यः श्यन् स्यात् कर्त्रर्थे सार्वधातुके परे । दीव्यति । सीव्यति ।

## वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ७० ।

एभ्यः श्यन् स्यात्कर्त्रर्थे सार्वधातुके परे । भ्राशते । भ्राश्यते भ्लाशते । भ्लाश्यते । भ्रमति । भ्राम्यति (१) । क्रामति (२) क्राम्यति । क्लामति । क्लाम्यति । त्रसति । त्रस्यति । त्रुटति । त्रुट्यति । लषति । लष्यति ।

## यसोऽनुपसर्गात् । ७१ ।

अनुपसर्गाद्यसेः श्यन् वा स्यात् । यस्यति यसति । अनुपसर्गात्किम् । आयस्यति । उत्तरस्य नियमार्थत्वेन सिद्धेऽनुपसर्गग्रहणमदृष्टप्रयोजनम् ।

## संयसश्च । ७२ ।

सम्पूर्वाद्यसेः श्यन् वा स्यात् । संयस्यति । संयसति ।

## स्वादिभ्यः श्नुः । ७३ ।

स्वादिभ्यः श्नुः स्यात् कर्त्रर्थे सार्वधातुके परे सुनोति । सुनुते ।

## श्रुवः शृ च । ७४ ।

श्रुवः शृ स्यात् श्नुप्रत्ययश्च कर्त्रर्थे सार्वधातुके परे । शृणोति । शृणुताम् ।

---

( १ ) शमामष्टानामिति दीर्घः ।
( २ ) क्रमः परस्मैपदेष्विति दीर्घः ।

## अक्षोऽन्यतरस्याम् । ७५ ।

अक्षेः श्नुर्वा स्यात्कर्त्रर्थे सा० । अक्ष्णोति । अक्षति ।

## तनूकरणे तक्षः । ७६ ।

तनूकरणेऽर्थे वर्तमानात्तक्षेः श्नुर्वा स्यात् कर्त्रर्थे सा० । तक्ष्णोति । तक्षति । तनूकरणेकिम् । संतक्षति वाग्भिः ।

## तुदादिभ्यः शः । ७७ ।

तुदादिभ्यः शः स्यात्कर्त्रर्थे सा० । तुदति (१) । नुदति । (२)

## रुधादिभ्यः श्नम् । ७८ ।

एभ्यः श्नम् स्यात्कर्त्रर्थे सा० । मित्वादन्त्यादचः परः । रुणद्धि भिनत्ति । श्नान्नेत्यत्रविशेषणार्थः शकारः ।

## तनादिकृञ्भ्य उः । ७९ ।

तनादिभ्यः करोतेश्च उः स्यात्कर्त्रर्थे सा० । तनादित्वादेव सिद्धे कृञ्ग्रहणं (३) भाष्ये प्रत्याख्यातम् । तनोति । करोति ।

## धिन्विकृण्व्योर च । ८० ।

अनयोरकारोऽन्तादेशः स्यादुः प्रत्ययश्च कर्त्रर्थे सा० । अतो·

---

( १ ) परत्वात्प्राप्तं गुणं नित्यत्वाच्छो बाधते ।

( २ ) तक्र कौण्डिन्यन्यायेनायं शपं बाधते ।

( ३ ) तनादिभ्यः कृञः सिद्धं सिज्लोपे च न दुष्यति । ( कृञ्ग्रहणमन्यस्तनादिप्रयुक्तकार्यव्यावृत्यर्थम् ) तेनाकृतेत्यत्र 'तनादिभ्यस्तथासो' रितिवैकल्पिको लुङ् नेति, ननु लुग्लोपयोः कोविशेषइतिचेत्, लुकि सति 'स्यसिजति, न चिण्वद्भावः । लोपे तु तस्यासिद्धत्वाद्भवत्येवेतिचेन्न, लुक्यपि पाक्षिकचिण्वद्भावस्य सत्वादतआह:—चिण्वद्भावे न दोषः स्यात्सोऽपि प्रोक्तो विभाषया ।

लोपः तस्य स्थानिवद्भावाल्लघूपधगुणो न। धिनोति। कृणोति। नुमनुषक्तयोर्ग्रहणमुपदेशावस्थायामेव नुमिति ज्ञापनार्थम्, तेन नुम्विधावुपदेशिवद्वचनं न कर्तव्यमिति।

## क्र्यादिभ्यः श्ना ॥८१॥

एभ्यः श्ना स्यात्कर्त्रर्थे सा०। क्रीणाति। क्रीणीते। प्रीणाति।

## स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ॥८२॥

स्तम्भ्वादिभ्यः श्नुः स्याच्चात् श्ना कर्त्रर्थे सा०। स्तभ्नोति। स्तभ्नाति। स्तुभ्नोति। स्तुभ्नाति। स्कभ्नोति। स्कभ्नाति। स्कुभ्नोति। स्कुभ्नाति। स्कुनोति। स्कुनाति। आद्याश्चत्वारः सौत्राः। उदित्करणेन सर्वप्रत्ययविषयत्वं लक्ष्यते।

## हलः श्नः शानज्झौ ॥८३॥

हलन्ताद्धातोः परस्य श्नः प्रत्ययस्य शानच् स्यात् हौ परे। पुषाण। मुषाण। श्नाविकरणस्य शित्करणानर्थक्यं स्थानिवत्त्वादिति प्रत्याख्यातः शकारः (१)।

## छन्दसि शायजपि ॥८४॥

छन्दसि विषये श्नः स्थाने शायच् स्यादपिशब्दात् शानच्। गृभाय जिह्वया मधु। बधान देव सवितः। हृग्रहोर्भश्छन्दसीति भः।

## व्यत्ययो बहुलम् ॥८५॥

विकरणानां छन्दसि बहुलं व्यत्ययः स्यात्। व्यतिगमनं व्यत्ययः। आण्डा शुष्मस्य भेदति (भिनत्ति) न जरसा मरते पतिः (म्रियते) इन्द्रो वस्तेन नेषतु। नयतेर्लोटि तिपि शप्सिपौ द्वौ विकरणौ। भाष्ये

(१) अत्र भाष्ये सार्वधातुकमपिदिति विभक्तम् (सार्वधातुकम्) अत्र ङिदनुवर्तते सार्वधातुकं ङिद्वत्स्यात्। ततः (पिन्न) पिद्ङिन्न। अनेन पितो ङित्त्वं प्रतिषिध्यते तेन तिप्सिप्मिपामातिदेशिकं ङित्त्वन्न (ङिच्च पिन्न) अनेन तातङ आतिदेशिकं पित्वं नेतिभावः।

व्यत्ययइति विच्छिद्य तेनैतान्युदाहरणानि संसाद्ध्य बहुलमित्यनेन सर्वविधीनां व्यत्ययः साधितः। तेन सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च। व्यत्ययमिच्छति शास्त्रकृदेषांसोऽपि हि सिद्ध्यति बाहुलकेनेति सिद्धम्।

## लिङ्याशिष्यङ् ॥८६॥

छन्दसि धातोरङ् स्यादाशिषि लिङि। स्थागागमिवचिवदयः। उपस्थेयं वृषभं तुग्रियाणाम्। गा अञ्जसा सत्यमुपगेयम्। पञ्चेन प्रतिष्ठां गमेयम्। मन्त्रं वोचेमाग्नये। विदेयमेनां मनसि प्रतिष्ठाम्। (शकिरुहोश्च)। शकेम त्वा साधया धियः। अस्रवन्ती मा रुहेमा स्वस्तये (दृशेरग्वक्तव्यः) पितरञ्च दृशेयं मातरञ्च।

## कर्मवत्कर्मणा तुल्यक्रियः ॥८७॥

कर्मस्थया क्रियया तुल्यक्रियो लकारवाच्यः कर्त्ता कर्मवत् स्यात्। यगात्मनेपदचिण्चिण्वद्भावाः प्रयोजनम्। भिद्यते काष्ठं स्वयमेव। अभेदि काष्ठं स्वयमेव। अकारिष्यते कटः स्वयमेव। आत्मनेपदस्य सर्वाण्युदाहरणानि। इतरेषां क्रमेणेति विवेकः। निवृत्तिप्रेषणं कर्म स्वक्रियावयवे स्थितम्। निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते। अस्याश्चावस्थायामकर्मकत्वात्कर्तरि भावे च लकारः। तत्र शुद्धे कर्तरि रूपेषु प्राप्तेष्विदमारभ्यते। अत्र पूर्वावस्थायांभिदेः काष्ठे कर्मीभूते यादृशी द्विधाभवनरूपा क्रिया, करोतेश्च कर्मणि कटे उत्पत्तिरूपा, तया तुल्यक्रियोऽयं भिदिकृञोः कर्त्ता, लकारवाच्यश्चेत्यतिदेशाद्यगादिचतुष्टयप्रवृत्तिः। वत्करणंकिम्। स्वाश्रयमपि यथा स्यात। भिद्यते कुशूलेनेति। अकर्मकत्वाद्भावे लः सिद्धो भवति। कर्मणाकिम्। करणाधिकरणाभ्यां तुल्यक्रिये माभूत्। साध्वसिश्छिनत्ति। साधुः स्थाली पचति। कर्तृस्थक्रियाऽप्यस्यैव व्यावर्त्या। गच्छति ग्रामः स्वयमेव। अधिगच्छति शास्त्रार्थः स्वयमेवेत्यादि। लकारवच्यः किम्। भिद्यते कुशूलेनेत्यत्र भावे लकारे कुशूलशब्दात्

द्वितीया न। (सकर्मकाणां प्रतिषेधो वक्तव्यः) (१) अन्योऽन्यमाश्लिष्यतः। अन्योऽन्यं स्पृशतः (दुहिपच्योर्बहुलं सकर्मकयोः (२)। दुग्धे गौः पयः स्वयमेव। उदुम्बरः फलं पच्यते। (सृजियुज्योः श्यंस्तु) सृजेः श्रद्धोपपन्ने कर्तरि कर्मवद्भावो वाच्यो चिणात्मनेपदार्थः। सृज्यते मालाम्। असर्जि (३ मालामिति (४)। युजेस्तु न्याय्ये कर्मकर्तरि यको भावाय। युज्यते ब्रह्मचारी योगम् (५) (भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्) भूषयते देवी स्वयमेव। अबुभूषत देवी स्वयमेव। मण्डयते देवी स्वयमेव। अममण्डत देवी स्वयमेव। अवकिरते हस्तो स्वयमेव। अवाकीर्ष्ट हस्ता स्वयमेव। गिरते ग्रासः स्वयमेव। अगीर्ष्ट ग्रासः स्वयमेव। चिकीर्षते कटः स्वयमेव। अचिकीर्षिष्ट कटः स्वयमेव।

---

(१) भाष्ये तु तपस्तपःकर्मकस्यैवेतियोगो विभक्तः। (तपः) सकर्मकस्य चेत् तर्हि तपेरेवेति नियमः। ननु तप्यते तपस्तापस इत्यत्र कर्मस्थक्रियया तुल्यक्रियत्वं कर्तुर्नास्ति। उपवासादेस्तपसः कर्तृत्वे तपेर्दुःखार्थत्वा, त्तापसस्य कर्तृत्वेऽर्जनार्थत्वादितिचेन्न'। शरीरसंतापलक्षणायाः क्रियायास्तुल्यत्वात्, अवस्थाद्वयेपि शरीरसन्तापलक्षणमेवार्जनं तापसस्य यतो व्यापारः, एवञ्च नियमार्थत्वमविकलमेव, नियमेनअन्योन्यमाश्लिष्यत इत्यादौ न। तप 'स्तपः कर्मकस्यै' वेति च तपः कर्मकस्यैव नान्यकर्मकस्येति तेनोत्तपति सुवर्णं सुवर्णकारइत्यादौ नेत्यादि प्रपञ्चितम्।

(२) दहेर्द्विकर्मकत्वात्कर्मस्थक्रियातुल्यक्रियत्वेपि सकर्मकत्वादप्राप्तेर्वचनम्। पचिरत्र द्विकर्मको वृक्षस्य पाकमन्तरेण फलपाकासंभवाद् वृक्षोऽकथितं कर्म तस्यैव च यदा कर्तृत्वविवक्षा तदाऽयं कर्मवद्भावः। एवंविध एव विषये कर्मवद्भावो न पुनरोदनं पचतीत्यादौ।

(३) श्रद्धया मालां निष्पादयतीत्यर्थः।

(४) मालां निष्पादितवानित्यर्थः।

(५) योगो ब्रह्मचारिणं युनक्ति। सम्बध्नातीत्यर्थः ततो ब्रह्मचारिणः कर्तृत्वविवक्षायां युज्यते ब्रह्मचारी योगमितिभवति। कर्मशब्दः क्रियावाची भूषाफलञ्च शोभाख्यं कर्मणि दृश्यते। इतिकर्मस्थभूषा। अण्यन्तार्थञ्च भूषाग्रहणम्। ण्यन्तानाञ्च वक्ष्यमाणेन यक्चिणोः प्रतिषेधनस्य सिद्धत्वात् तेनालङ्कुरुते स्वयमेव कन्या। अलमकृत कन्येति भवति। हस्तिनं कश्चित्पांस्वादिनाऽवकिरति–तत्र सौकर्यात्कर्तृत्वेन हस्ती विवक्ष्यते करोतिक्रियापेक्षम कर्मस्थक्रियत्वमिच्छा तु कर्तृस्थैवार्थाच्च करोतेः प्राधान्यं तदर्थत्वादिच्छायाः।

(१)

## तपस्तपःकर्मकस्यैव ॥८८॥

तपतेःकर्ता कर्मवच्चेत्तर्हि तपःकर्मकस्यैव । तपांसि तापसं तपन्ति। दुःखयन्तीत्यर्थः । तापसः स्वयमेव तपस्तप्यते । अर्जयतीत्यर्थः ।

## न दुहस्नुनमां यक्चिणौ ॥८९॥

एषां यक्चिणौ न स्तः कर्मकर्तरि । दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव । प्रस्नुते गौः स्वयमेव । प्रास्नोष्ट गौः स्वयमेव । नमते दण्डः स्वयमेव । अनंस्त दण्डः स्वयमेव (यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञा-मुपसंख्यानम्) कारयते कटः स्वयमेव । अचीकरत कटः स्वयमेव । उच्छ्रयते दण्डः स्वयमेव । उदशिश्रियत । ब्रूते कथा स्वयमेव । अवोचत । भार-द्वाजीयास्तु यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणा-मितिपठन्ति । तन्मते-हन्ति माणवकम् । आहते माणवकः स्वयमेव। इत्याद्यपि ।

## कुषिरञ्जोः प्राचां श्यन् परस्मैपदञ्च ॥९०॥

कुषिरञ्जिभ्यां कर्मकर्तरि श्यन् स्यात्परस्मैपदञ्च प्राचां मते । कुष्यति पादः स्वयमेव । रज्यति वस्त्रः स्वयमेव । प्राचां किम् ? कुष्यते । रज्यते। पक्षे यगात्मनेपदे ।

## धातोः ॥९१॥

आ तृतीयाध्यायसमाप्तेरधिकारः । धातोः कर्मणइतिधातोरधिकारादेव सिद्धे पुनर्धात्वधिकारो मन्दप्रयोजनः ।

## तत्रोपपदं सप्तमीस्थम् ॥९२॥

सप्तम्यन्ते ( कर्मणीत्यादौ ) प्रतिपाद्यत्वेन स्थितं यत्कुम्भादि।

---

(१) वृत्तिकृता क्रियाभेदाद्विध्यर्थमित्युक्तम्, तत्पूर्वसूत्रभाष्यवैयर्थ्य विरोधादुपेक्षितं, साधितं तुल्यक्रियत्वमुक्तसूत्रे टिप्पण्याम् ।

तद्वाचकमुपपदसंज्ञं स्यात् तस्मिन् सत्येव वक्ष्यमाणाः प्रत्ययाः स्युः। महासंज्ञाकरणसामर्थ्यात्पदमत्र संज्ञि। तेन समर्थपरिभाषोपस्थानादिह न, आहर कुम्भम्, करोति कटम्।

## कृदतिङ्।९३।

धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् कृदन्तत्वेन प्रातिपदिकत्वादि। कर्तव्यम्। करणीयम्। अतिङ्किम्। चीयात् (१)

## वाऽसरूपोऽस्त्रियाम्।९४।

अस्मिन् धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना। तव्यदादय उत्सर्गास्तेषामजन्ताद्यदपवादः। चेयम्। पक्षे तव्यदादयः। चेतव्यम्। चयनीयम्। विक्षिपः। विक्षेप्ता। विक्षिपकः। असरूपः किम्। गोदइत्यादौ केनाण्णो नित्यमेव बाधः। ननु काणोरनुबन्धभेदात् कथं सारूप्यमितिचेन्न, नानुबन्धकृतमसारूप्यमिति स्वीकारात्। अस्त्रियांकिम्। चिकीर्षेत्यादौ क्तिन्माभूत्।

## कृत्याः।९५।

अधिकारोऽयम् 'ण्वुल्तृचा' वित्यतः (२) प्राक्। काकपेया। ब्राह्मणस्य कर्तव्यम्।

## तव्यत्तव्यानीयरः।९६।

धातोरेते प्रत्ययाः स्युः। तकाररेफौ स्वरार्थौ। कर्तव्यम्। करणीयम्। ( केलिमर उपसंख्यानम् ) पचेलि ( पक्तव्याः ) भिदेलिमाः सरलाः ( भेत्तव्याः ) ( वसेस्तव्यत्कर्तरि णिच ) वसतीति वास्तव्यः।

(१) अकृत्सार्वधातुकयोरिति दीर्घो न स्यात्। भाष्ये तु फलाभावात्प्रत्याख्यातम्।

(२) अर्हे कृत्यतृचश्चेत्यत्र तृज्ग्रहणं योगापेक्षं ज्ञापकं तेन 'ण्वुल्तृचा' वित्यतः प्रागेव कृत्यसंज्ञा।

## अचो यत् । ९७ ।

अजन्ताद्धातोर्यत् स्यात् । जेयम् । चेयम् । अज्ग्रहणमजन्तभूतमात्रादपि यथा स्यात् तेन दित्स्यम्, धित्स्यमित्यादावार्द्धधातुकसामान्ये अलोपे कृते हलन्तलक्षणो ण्यन्न ( तकिशसिचतियतिजनीनामुपसंख्यानम् ) तक्यम् । शस्यम् । चत्यम् । यत्यम् । जन्यम् । ( हनो वा वध च ) वध्यः । घात्यः ।

## पोरदुपधात् । ९८ ।

अकारोपधात्पवर्गान्ताद्धातोर्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् । अदुपधात्किम् । कोप्यम् । ण्यति यतोनात्रइति न । तपरः किम् । आप्यम् । पोः किम् । वाक्यम् ।

## शकिसहोश्च । ९९ ।

शकिसहिभ्यां यत् स्यात् । शक्यम् । सह्यम् ।

## गदमदचरयमश्चानुपसर्गे । १०० ।

अनुपसर्गेभ्यो गदादिभ्यो यत्स्यात् । गद्यम् । मद्यम् । चर्यम् । यम्यम् (१) । अनुपसर्गात्किम् । न नैषेधे कार्यमिदं निगाद्यम् । ( चरेराङि चागुरौ ) आचर्यो (२) देशः । अगुरौ किम्? आचार्य उपनयमानः ।

## अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥ १०१ ॥

गर्ह्यादिषु त्रिष्वर्थेषु अवद्यादयस्त्रयो यत्प्रत्ययान्ता निपात्यन्ते । अवद्यं पापम् । अवचनार्हत्वात् । अन्यत्रानूद्यम् । वदःसुपीति क्यप् ।

---

( १ ) त्वया नियम्याइत्याद्य् किन्तु केवलाद् यति निशब्देन समासे, नियमशब्दात्तत्रसाधुरिति यति वा निर्वाह्या ।

( २ ) गन्तव्यइत्यर्थः ।

पण्यः (१) कम्बलः । अन्यत्र पाण्यम् । स्तुत्यर्हमित्यर्थः शतेन वर्या* । न निरोद्धव्येत्यर्थः ।

## वह्यङ्करणम् । १०२ ।

वह्यमिति निपात्यते करणञ्चेद्भवति । वहन्त्यनेन, वह्यं शकटम् । करणेकिम् । वाह्यम् । वहनकर्मेत्यर्थः ।

## अर्यः स्वामिवैश्ययोः । १०३ ।

अर्यइतिनिपात्यते स्वामिवैश्ययोरर्थयोः । अर्यः स्वामी, वैश्यो वा । स्वामिन्यन्तोदात्तत्वञ्च । अन्यत्र तु यतो नावइति ।

## उपसर्या काल्याप्रजने ॥ १०४ ॥

उपसर्या इतिनिपात्यते प्रजने प्राप्तकाला चेत् । उपसर्या गौः । गर्भाधानार्थं वृषभेणोपगन्तुं प्राप्तकालेत्यर्थः । काल्याप्रजने किम् । उपसार्या । प्राप्तव्येत्यर्थः ।

## अजर्यं संगतम् ॥ १०५ ॥

अजर्यमिति (कर्तरि यत्) निपात्यते संगतं कर्तृ चेत् । न जीर्यतीत्यजर्यम्, सतां संगतम् संगतंकिम् । अजरिता कम्बलः ।

## वदः सुपिक्यप् च ॥ १०६ ॥

सुबन्तेऽनुपसर्गे उपपदे वदेः क्यप् स्याच्चाद्यत् । ब्रह्मोद्यम् । ब्रह्मवद्यं वा । वेदस्य कथनमित्यर्थः । अनुपसर्गे किम् । प्रवाद्यम् । अनुवाद्यम् ।

---

(१) पणितव्यशब्दस्य साधारणत्वेऽपि निपातनस्य रूढ्यर्थत्वादर्थनियमो लभ्यते तेन व्यवहर्तव्यं एव पण्यशब्दः ।

* अवद्यादीनि अविभक्तिकानि पृथक्पदानि तेन वर्या स्त्रियामेव अन्यत्र तु ण्यदेव वार्य्याः ऋत्विजः । भट्टिस्तु द्वन्द्वाजसं मन्वानः 'सुग्रीवो मम वर्योऽसौ' इतिपुंल्लिङ्गे पि यतं प्रायुङ्क्त ।

(१)

## भुवो भावे । १०७ ।

अनुपसर्गे सुबन्त उपपदे भुवो भावे क्यप् स्यात् ब्रह्मणो भावो ब्रह्मभूयम् । सुपिकिम् । भव्यम् । अनुपसर्गे किम् । प्रभव्यम् ।

## हनस्त च । १०८ ।

अनुपसर्गे सुबन्त उपपदे हन्तेर्भावे क्यप् स्यात्तकारश्चान्तादेशः । ब्रह्मणो हननं ब्रह्महत्या । स्त्रीत्वं लोकात् । ( हनस्तश्चित् स्त्रियां छन्दसि ) अस्यै त्वा भ्रूणहत्यायै । स्त्रियां किम् । अघ्नतं दस्युहत्याय । छन्दसि किम् ? श्वहत्या ।

## एतिस्तुशास्वृदृजुषः क्यप् । १०९ ।

एत्यादिभ्यः क्यप् स्यात् । इत्यः । स्तुत्यः । ह्रस्वस्य पितीति तुक् । शिष्यः । इत्वषत्वे । वृत्यः । दृत्यः । जुष्यः । क्यबित्यनुवर्तमाने पुनः क्यब्ग्रहणं बाधकबाधनार्थम् । तेन वश्यस्तुत्य इत्यत्र क्यबेव ( क्यब्विधौ वृञ्ग्रहणं ) तेनेह न वार्या ऋत्विजः । ( अञ्जेश्चोपसंख्यानं संज्ञायाम् ) ( २ ) आज्यं घृतम् ।

## ऋदुपधाच्चाक्लृपिचृतेः । ११० ।

क्लृपिचृतिभिन्नाद् ऋदुपधाद्धातोः क्यप् स्यात् । वृत्यम् । वृध्यम् । अक्लृपिचृतेः किम् । कल्प्यम् । चर्त्यम् ।

## ई च खनः । १११ ।

खनेः क्यप्स्यात् ईकारश्चान्तादेशः । खेयम् । दीर्घस्य फलाभावात्प्रत्याख्यातमाकरे । पदान्तपदाद्योरेकादेशाभावात्तुक् न ।

---

( १ ) भावग्रहणमुत्तरार्थमनुपसर्ग इत्यनुवर्तते ।

( २ ) आङ्पूर्वादञ्जेर्बोध्यम् ।

## भृञोऽसंज्ञायाम् ॥११२॥

भृञः क्यप् स्यादसंज्ञायाम् । भृत्याः कर्मकराः । भर्त्तुं योग्याइत्यर्थः ( समश्च बहुलम् ) संभृत्या एव संभाराः । संभार्या एव संभाराः । असंज्ञायां किम् ? भार्या नाम क्षत्रियः । स्त्रियां संज्ञायां भावाधिकारात् कर्मणि ण्यदेव तेन भार्याशब्दः प्रसिद्ध्यति ।

## मृजेर्विभाषा ॥११३॥

प्राप्तविभाषेयम् । मृजेः क्यप् वा स्यात् । परिमृज्यः। परिमार्ग्यः ।

## (१) राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।११४।

एते सप्त क्यबन्ता निपात्यन्ते । राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्य इत्यर्थः । कर्मणि क्यप् दीर्घत्वं च निपात्यते । यद्वा लतात्मकः सोमो राजा स सूयते कण्डयतेऽत्रेत्यधिकरणे क्यप् । सरत्याकाशे सूर्यः । कर्तरि क्यप् निपातनादुत्वम् । यद्वा सुवति कर्मणि लोकं प्रेरयतीति कर्तरि क्यप् । मृषोपपदाद्वदेः कर्मणि पक्षे यति प्राप्ते नित्यं क्यप् । मृषोद्यम् । विशेष्यनिघ्नोऽयम् । रोचतेऽसौ रुच्यः । गुपेरादेः कुत्वं च संज्ञायाम् । कुप्यम् । सुवर्णरजतभिन्नं द्रव्यमित्यर्थः । गोप्यमन्यत् । कृष्टे स्वयमेव पच्यन्ते इतिकृष्टपच्याः । कर्मकर्त्तरि निपातनम् । शुद्धे तु कर्मणि कृष्टपाक्याः इत्येव । न व्यथते अव्यथ्याः ।

## भिद्योद्ध्यौ नदे ।।११५ ॥

भिदेरुज्झेश्च कर्त्तरि क्यप् उज्झेर्धत्वं च । भिनत्ति कूलं भिद्यः । उज्झत्युदकं उद्ध्यः । नदे किम् । भेत्ता । उज्झिता ।

---

(१) अत्र भाष्ये वार्तिकानि । 'सूर्यरुच्याव्यथ्याः कर्तरि' । कुप्यं संज्ञायाम्' । ( कृष्टपच्यस्यान्तोदात्तत्वञ्च कर्मकर्तरि ) ।

## पुष्यसिद्ध्यौ नक्षत्रे ॥११६॥

पुषेः सिधेश्चाधिकरणे क्यप् निपात्यते नक्षत्रेऽभिधेये । पुष्यन्त्यस्मिन्नारब्धा अर्था इति पुष्यः । सिध्यन्त्यस्मिन्निति सिध्यः । नक्षत्रे किम् पोषणं । सेधनम् ।

## विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥११७॥

पूङ्नीञ् जिभ्यः क्यब्निपात्यते मुञ्जादिषु वाच्येषु । विपूयो मुञ्जः । रज्ज्वादिकरणात् शोधयितव्य इत्यर्थः । विनीयः कल्कः (१) । जित्यो हलिः । बलेन कृष्टव्यइत्यर्थः । महद्धलं हलिः । कृष्टसमीकरणार्थं बृहत्काष्ठमुच्यते । एषु किम् । विपव्यमित्यादि ।

## प्रत्यपिभ्यां ग्रहेः ॥११८॥

प्रत्यपिभ्यां ग्रहेः क्यप् स्यात् । मत्तस्य न प्रतिगृह्यम् । अनृतं हि मत्तो वदति तस्मान्नापिगृह्यम् । (छन्दसीति वक्तव्यम्) लोके तु प्रतिग्राह्यम् । अपिग्राह्यम् ।

## पदास्वैरिबाह्यापक्ष्येषु च ॥११९॥

पदादिष्वर्थेषु ग्रहेः क्यप् स्यात् । प्रगृह्यं पदम् । गृह्यका इमे गृहीतका इत्यर्थः । पञ्जरादिबन्धनेन परतन्त्रीकृताः शुकादयइति यावत् । ग्रामगृह्या सेना । ग्रामाद्बहिर्भूताइत्यर्थः आर्यगृह्याः । तत्पक्षाश्रिता इत्यर्थः ।

## विभाषा कृवृषोः ॥१२०॥

कृवृषिभ्यां विभाषा क्यप् स्यात् । पक्षे ण्यत् । कृत्यम् । कार्यम् । वृष्यम् । वर्ष्यम् ।

## युग्यञ्च पत्रे ॥१२१॥

(१) पिष्टऔषधिविशेषः । पापमिति वा ।

पत्रेऽभिधेये युजेः कर्मणि क्यप् कुत्वं च निपात्यते। युग्यो गौः। पत्रे किम्? योग्यमन्यत्।

(२)

## अमावस्यदन्यतरस्याम ॥१२२॥

अमाशब्दे उपपदे वसेरधिकरणे ण्यत्, पाक्षिको वृद्ध्यभावो निपात्यते। अमा (सह) वसतः सूर्याचन्द्रमसौ यस्यां सा अमावस्या। अमावास्या वा।

## छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्य-खन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्य भाव्यस्ताव्योपचाय्यपृडानि ॥१२३॥

एते सप्तदश छन्दसि निपात्यन्ते।

एयदेकस्माच्चतुर्भ्यः क्यप्। चतुर्भ्यश्च यतो विधिः।<br>
ण्यदेकस्माद्यशब्दश्च द्वौ क्यपौ ण्यद्विधिश्चतुः ॥१॥<br>
निष्टर्क्ये व्यत्ययं विद्यान्नसः षत्वं निपातनात्।<br>
ण्यदायादेश इत्येतावुपचाय्ये निपातितौ ॥२॥

निष्टर्क्यं चिन्वीत पशुकामः। देवउपपदे जुहोतेः क्यप् दीर्घत्वं तुगभावश्च। स्पर्द्धन्ते उदेवहूये। प्र उद्भ्यां नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप् उच्छिष्यः। मृङ्स्तृञ्ध्वृभ्यो यत्। मर्यः। स्तर्या। स्त्रियामेवे निपातनम्। ध्वर्यः। खनेर्यण्यतौ खन्यः। खान्यः। देवशब्द उपपदे यजेर्यत्। देवयज्या। स्त्रीलिङ्ग-निपातनम्। आङ्पूर्वात् पृच्छेः क्यप्। आपृच्छ्यम्। प्रतिपूर्वात्सी-व्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत्। ब्रह्मवाद्यम्।

(२) अमावसोरह ण्यतोर्निपातयाम्यद्धितां। तथैकवृत्तिता तयोः स्वरश्च मे प्रसिध्यति।

लोके तु 'वदः सुपी' ति क्यप्यतौ । भवतेः । स्तौतेश्च ण्यत् । भाव्यः । स्ताव्यः । उपपूर्वस्यचिन तिण्यदायादेशौ पृडे उत्तरपदे । उपचाय्यपृडम् । कर्मधारयः । (हिरण्ये इति वक्तव्यम्) उपचेयपृडमन्यत् । पृडधातोरिगुपधलक्षणः कः ।

## ऋहलोर्ण्यत् ॥१२४॥

ऋवर्णान्ताद्धलन्ताद्धातोर्ण्यत् स्यात् । कार्यम् । हार्यम् । वाच्यम् । पाच्यम् । ऋइतिवर्णग्रहणम्, हला साहचर्यात् । ( पाणौ सृजेर्ण्यद्विधिः ) पाणिसर्ग्या रज्जुः ( समवपूर्वाच्च ) समवसर्ग्या रज्जुः । ( लपिदभिभ्याञ्च ) अपलाप्यम् । अपदाभ्यम् ।

## ओरावश्यके ॥१२५॥

उवर्णान्ताद्धातोर्ण्यत् स्यादावश्यके द्योत्ये । पाव्यम् । लाव्यम् । द्योतितार्थस्यापि क्वचित्प्रयोगो लाघवं प्रत्यनादरात् । अवश्यलाव्यम् । मयूरव्यंसकादेराकृतिगणत्वात्समासः, विष्पष्टादिवत्स्वरश्च (१) ।

## आसुयुवपिरपित्रपिचमश्च ॥१२६॥

आङ्पूर्वात्सुनोतेर्यु प्रभृतिभ्यश्च ण्यत् स्यात् । यतोऽपवादः । आसाव्यम् । याव्यम् । वाप्यम् । राप्यम् । अपत्राप्यम् । आचाम्यम् ।

## आनाय्योऽनित्ये ॥१२७॥

नयतेराङ्पूर्वात् ण्यदायादेशौ निपात्येते । (आनाय्योऽनित्य- इतिचेत् । घटादावतिप्रसङ्गः ( दक्षिणाग्नौ कृतं भवेत् ) सम्भा

(१) यथा विस्पष्टकन्दुकमित्यत्रमयूरव्यंसकादित्वात्समासे कृते पूर्वपदप्रकृतिस्वरीभवत्येवमवश्यव्यमित्यादावपि मयूरव्यंसकादिषु निपातनादुत्तरपदप्रकृतिस्वरो भविष्यतीत्यर्थः ।

वने लिङ् निपातनादेव रूढिः सम्भाव्यतइत्यर्थः । ( एकयोनौ ) आहवनीयेन सह ( तु तं विद्यादानेयो ह्यन्यथा भवेत् ) ।

## प्रणाय्योऽसम्मतौ । १२८ ।

सम्माननं सम्मतिः । प्रीतिविषयत्वोपगमनं, भोगविषयेऽआदरो वा । असम्मतो प्रपूर्वान्नयतेर्ण्यदायादेशौ निपात्येते । प्रणाय्यश्चौरः । ज्येष्ठाय पुत्राय पिता ब्रह्म ब्रूयात् प्रणाय्यायाऽन्तेवासिने, नान्यस्मै कस्मैचन ।

## पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवास-सामिधेनीषु । १२९ ।

मानादिषु पाय्यादयो निपात्यन्ते । मीयतेऽनेनेतिकरणे ण्यदादेः पत्वञ्च निपात्यते । पाय्यं मानम् । सम्पूर्वान्नयतेःकर्मणि ण्यदायादेशौ उपसर्गदीर्घत्वञ्च । सान्नाय्यं हविः । निपूर्वाच्चिनोतेरधिकरणे ण्यदायादेशावादेः कुत्वञ्च । निकाय्यो निवासः । दधातेर्ण्यत्सामिधेन्याम् । धाय्या सामिधेनी ।

## क्रतौ कुण्डपाय्यसञ्चाय्यौ । १३० ।

क्रतौ वाच्ये एतौ निपात्येते । तृतीयान्ते कुण्डशब्द उपपदे पिबतेरधिकरणे यत् युक् च निपात्यते । कुण्डेन पीयतेऽस्मिन् कुण्डपाय्यः । सम्पूर्वाच्चिनोतेर्ण्यदायादेशश्च । संचीयते, संचाय्यः क्रतुः । क्रतौ किम् । कुण्डपानम् । संचेयः ।

## अग्नौ परिचाय्योपचाय्यसमूह्याः । १३१ ।

अग्न्याधारे परिचय्यादयो निपात्यन्ते । पर्युपपूर्वाच्चिनोतेर्ण्यदायादेशौ । परिचाय्याः । उपचाय्याः । सम्पूर्वाद्वहेः सम्प्रसारणं दीर्घत्वञ्च निपात्यते । समूह्यं चिन्वीत पशुकामः । अन्यत्र परिचेयमित्यादि ।

## चित्याऽग्निचित्ये च । १३२ ।

अग्नावर्थे एतौ निपात्येते। चिनोतेः कर्मणि क्यप्। चीयतेऽसौ चित्यः। अग्नेश्चयनमग्निचित्येत्यत्र यस्तुक् च निपात्यते।

## ण्वुल्तृचौ। १३३।

धातोरेतौ स्तः। कर्तरिकृदितिकर्तरि। पाचकः। पक्ता। तृचश्चकारः सामान्यग्रहणाविघातार्थस्तुश्छन्दसीत्यादौ। तृजादिषु वर्तमानकालोपादानमितिभाष्यादेषां वतमानकालता।

## नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः। १३४।

नन्द्यादेर्ग्रह्यादेः पचादेश्च क्रमात् ल्युणिन्यचः स्युः। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। विभीषणः लवणः। निपातनाण्णत्वमित्यादि। ग्राही। स्थायी। मन्त्री। विशयी। विषयी। वृद्ध्यभावः। षत्वञ्च निपातनात्। परिभावी। परिभवी पाक्षिको वृद्ध्यभावः। पचादिराकृतिगणः। "शिवशमे" त्यत्र 'कर्मणि घटे' त्यत्र च करोतेर्घटेश्चाच्प्रयोगात्। अच्प्रत्यये यङ्लुग्विधानाच्च पचाद्यनुक्रमणमनुबन्धासञ्जनार्थमपवादबाधनार्थञ्च। पचतीतिपचः। नदट् नदी। चोरट् चोरी। देवट् देवी। दीव्यतेरिगुपधेति कः प्राप्तः। जारभरा। श्वपचा। अनयोः कर्मण्यण् प्राप्तः। न्यङ्क्वादिषु पाठात् श्वपाकोऽपीति कैयटः। 'यङोऽचिचे'तिलुक्। 'न धातुलोप' इतिगुणवृद्धिनिषेधः। चेक्रियः। नेन्यः। लोलुवः। पोपुवः। मरीमृजः।

## इगुपधज्ञाप्रीकिरः कः। १३५।

इगुपधाज्जानातेः प्रीणातेः किरतेश्च कः स्यात्। विक्षिपः। विबुधः। कृशः। जानातीति ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। पचादिषु पाठात् मेषः। देवः। सेवः।

## आतश्चोपसर्गे। १३६।

उपसर्गे उपपदे आकारान्ताद्धातोः कः स्यात्। प्रस्थः। सुग्लः।

## पाघ्राध्माधेट्दृशः शः । १३७ ।

पादिभ्यः शः स्यात् । पिबतीति पिबः । जिघ्रः । धमः । धयः । पश्यः । ( जिघ्रः सञ्ज्ञायां प्रतिषेधः ) व्याघ्रः (१) ।

## अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसा-तिसाहिभ्यश्च ॥ १३८ ॥

अनुपसर्गेभ्यो लिम्पादिभ्यः शः स्यात् । लिम्पतीति लिम्पः । विन्दः । लिम्पविन्दोस्तुदाद्योरेव ग्रहणम्, सनुम्कनिर्देशात् । धारयः । पारयः । वेदयः । उद्वेजयः । चेतयः । सातयः । साहयः ( अनुपसर्गान्नौ लिम्पेरिति वक्तव्यम् ) निलिम्पा नाम देवाः । ( गवादिषु विन्देः सञ्ज्ञायाम् ) गोविन्दः । अरविन्दः ।

## ददातिदधात्योर्विभाषा । १३९ ।

अनुपसर्गाभ्यां ददातिधातिभ्यां वा शः स्यात् । पक्षे-श्याद्व्यधेति णः । ददः । दायः । दधः धायः । अनुपसर्गाभ्यां किम् प्रदः प्रधः ।

## ज्वलितिकसन्तेभ्यो णः (२) । १४० ।

अनुपसर्गेभ्यो ज्वलादिभ्यः कसन्तेभ्यो वा णः स्यात् । ज्वलः । ज्वालः । चलः । चालः । अनुपसर्गात्किम् । प्रज्वलः ( तनोतेर्ण उपसंख्यानम् ) अवतनोतीत्यवतानः ।

## श्याऽऽद्व्यधाऽऽस्रुसंस्रवतीणवसावहृलिहश्लिषश्वसश्च । १४१ ।

अनुपसर्गादिति, तत्संबद्धं विभाषेति च निवृत्तम् । उत्तरसूत्रे

( १ ) सुपीति योगविभागेन को बोध्यः ।

( २ ) इतिशब्द आद्यर्थः ।

पुनर्ग्रहणात् । श्यैङ्प्रभृतिभ्यो णः स्यात् । उपसर्गे कं बाधितुं श्यैङ्ग्रहणम् । अवश्यायः । आतोयुगितियुक् । एवमवश्यतेरपि बोध्यम् । दायः । धायः । व्याधः । आस्रावः । संस्रावः । अत्यायः । अवसायः । अवहारः । लेहः । श्लेषः । श्वासः ।

## दुन्योरनुपसर्गे । १४२ ।

अनुपसर्गाभ्यां दुनीभ्यां णः स्यात् । दुनोतीतिदावः । नायः । नयतिसाहचर्यात्सानुबन्धकस्य दुनोतेर्ग्रहणान्निरनुबन्धकात्पचाद्यचि दवः । अनुपसर्गेकिम् । प्रदवः । प्रणयः ।

## विभाषा ग्रहः । १४३ ।

ग्रहेर्णो वा स्यात् । पक्षेऽच् । व्यवस्थितविभाषाश्रयणाज्जलचरे ग्राहः । ज्योतिषि ग्रहः ।

## गेहे कः । १४४ ।

गेहे कर्तरि ग्रहेः कः स्यात् गृह्णाति धान्यादिकमिति गृहम् । तात्स्थ्याद्गृहाः दाराः ।

## शिल्पिनि ष्वुन् । १४५ ।

धातोः ष्वुन् स्यात् शिल्पिनि कर्तरि । ( नृतिखनिरञ्जिभ्य इतिवक्तव्यम् ) नर्त्तकः । स्त्री चेन्नर्तकी । खनकः । रजकः । स्त्रियान्तु षित्वात्ङीषि " रजकी " (१) ।

## गस्थकन् । १४६ ।

गायते स्थकन् स्यात् शिल्पिनि कर्तरि । गाथकः । गायत्यर्थविषयमेव शिल्पिनमभिधातुं समर्थस्थकन् ।

---

( १ ) अनिदितामितिसूत्रस्थभाष्यरीत्या तु पुंयोगे रजकी, अन्यत्र तु रजका ।

## ण्युट् च । १४७ ।

गायतेर्ण्युट् स्यात्शिल्पिनि कर्तरि । गायनः । स्त्री चेत्, गायनी । योगविभाग उत्तरार्थः ।

(१)

## हश्च व्रीहिकालयोः । १४८ ।

जहातेर्जिहीतेश्च ण्युट् स्याद् व्रीहौ काले च कर्तरि । जहात्युदकमिति हायनो (२) व्रीहिः । जिहीते, इति वा विग्रहः । जहाति, जिहीते वा भावानिति हायनो वत्सरः ।

## प्रुसृल्वः समभिहारे वुन् । १४९ ।

समभिहारे प्रुसृलूभ्यो वुन् स्यात् । ( साधुकारिणि वुन्विधानम् ) । सकृदपि यः सुष्ठु करोति तत्र यथास्यात् । बहुशोऽपि यो दुष्ठु करोति तत्र मा भूत् । प्रवकः । सरकः । लवकः ।

## आशिषि च । १५० ।

आशिषि (३) विषये धातोर्वुन् स्यात् । नन्दतात्, नन्दकः । जीवतात्, जीवकः । आशीश्चेह प्रयोक्तृधर्मः । पित्रादिगतेच्छाविषयीभूतयोर्जीवननन्दनयोः कर्तरि पुत्रादौ पित्रादेरियमुक्तिः ।

॥ इति तृतीयाध्यायस्य प्रथमः पादः ॥

---

(१) व्रीहिकालयोरितिनोपपदं "त्रिचतुर्भ्यां हायनस्ये" ति लिङ्गात् ।
(२) जाङ्गलदेशोद्भवा व्रीहिविशेषा हायनाः ।
(३) अप्राप्तप्रार्थना आशीः ।

# अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

## कर्मण्यण् ॥१॥

कर्मण्युपपदे धातोरण् स्यात् । कुम्भकारः । काण्डलावः । वेदाध्यायः । ग्रामं गच्छति, आदित्यं पश्यति, हिमवन्तं शृणोतीत्यादावन (१) भिधानेतिभाष्यम् । (शीलिकामिभक्ष्याचरिभ्यो णः (२) पूर्वपदप्रकृतिस्वरत्वञ्च) ओदनं शीलयतीति, ओदनशीला । ओदनकामा । ओदनभक्षा । कल्याणाचारा । (ईक्षिक्षमिभ्याञ्च) सुख-प्रतीक्षा । कल्याणक्षमा । भूधरादिषु युगपदविवक्षायां पूर्वमचि कृते तत [ः प]ष्ठीसमासो बोध्यः ।

## ह्वावामश्च ॥२॥

कर्मण्युपपदे एभ्योऽण् स्यात् । कापवादः । स्वर्गह्वायः । तन्तुवायः । धान्यमायः ।

## आतोऽनुपसर्गे कः ॥३॥

कर्मण्युपपदेऽनुपसर्गादाकारान्ताद्धातोः कः स्यात् । अणोपवादः । गोदः । पार्ष्णित्रम् । अनुपसर्गे किम् । गोसंदायः (कविधौ सर्वत्र प्रसारणिभ्यो डः) ब्रह्मज्यः । सर्वत्रग्रहणा 'दातश्चोपसर्गे' इत्यस्यापि विषये आह्वः । प्रह्वः ।

(१) अनभिधानत्वञ्च शिष्टाप्रयुक्तत्वम् । नच ग्रामं गच्छतीत्यादिप्रतिपादनाय शिष्टाः ग्रामगम इत्यादीन् शब्दान् प्रयुञ्जते ।

(२) पूर्वपदप्रकृतिस्वरार्थमीकारप्रतिषेधार्थञ्च वार्तिकम् ।

## सुपि स्थः ।४।

सुप्युपपदे तिष्ठतेः कः स्यात् । समस्थः । विषमस्थः । भाष्येऽस्य योगविभागः प्रदर्शितः । सुप्युपपदे आकारान्ताद्धातोः कः स्यात् । कच्छेन पिबतीति कच्छपः । कटाहपः । ततः सुबन्ते उपपदे तिष्ठतेः कः स्यात् । योगविभागान्नायं कर्त्तरि किन्तु भावे; तेन, आखूनामुत्थानम् आखूत्थः । श्येनोत्थः । शलभोत्थ इत्यादि सिद्धम् ।

## तुन्दशोकयोः परिमृजापनुदोः ।५।

तुन्दशोकयोः कर्मणोरुपपदयोः परिमृजेरपनुदेश्च कः स्यात् । (आलस्यसुखाहरणयोरिति वक्तव्यम्) तुन्दपरिमृजोऽलसः । शोकापनुदः पुत्रः । अनयोः किम् । तुन्दं परिमार्ष्टीति तुन्दपरिमार्जः । शोकमपनुदतीति शोकापनोदः । (कप्रकरणे मूलविभुजादिभ्यउपसंख्यानम्) मूलविभुजो रथः । नखमुचानि धनूंषि । आकृतिगणोऽयम् । तेन महीध्रः । कुध्र इत्यादि सिद्धम् ।

## प्रे दाज्ञः ।६।

कर्मण्युपपदे प्रपूर्वाद् ददातेःजानातेश्च कः स्यात् । सर्वप्रदः । पथिप्रज्ञः । प्रे किम् । गोसंदायः ।

## समि ख्यः ।७।

कर्मण्युपपदे सम्पूर्वात् ख्यातेः कः स्यात् । गाः संचष्टे, गोसंख्यः ।

## गापोष्टक् ।८।

कर्मण्युपपदेऽनुपसर्गाभ्यां गापाभ्यां टक् स्यात् । सामगः । सामगी । (सुराशीध्वोः पिबतेः) सुरापः । सुरापी । शीधुपः । शीधुपी । अनयोः किम् । क्षीरपा ब्राह्मणी । पिबतेः किम् । सुरां पातीति सुरापा । (बहुलं तणि) या ब्राह्मणी सुरापा सुरापी वा भवति नैनां देवाः पतिलोकं नयन्ति ।

## हरतेरनुद्यमनेऽच् ।९।

अनुद्यमनेऽर्थे वर्तमानात्कर्मण्युपपदे हरतेरच् स्यात् । अंशहरः । रिक्थहरः । अनुद्यमने किम् । भारहारः । [ अच् प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटी [१] धनुष्षु ग्रहेरुपसंख्यानम् ] शक्तिग्रहः । लाङ्गलग्रहः । अङ्कुशग्रहः । यष्टिग्रहः । तोमरग्रहः घटग्रहः । घटीग्रहः । धनुर्ग्रहः । [ सूत्रे च धार्यर्थे ] सूत्रग्रहः । धार्यार्थे किम् । सूत्रग्रहः ।

## वयसि च ।१०।

कर्मण्युपपदे हरतेरच् स्याद्वयसि गम्यमाने । उद्यमनार्थआरम्भः । कवचहरः क्षत्रियकुमारः । अत्र कवचोद्यमनेन वयो गम्यते ।

## आङि ताच्छील्ये ।११।

कर्मण्युपपदे आङ्पूर्वाद्धरतेरच् स्यात्ताच्छील्ये गम्यमाने । पुष्पाण्याहरति तच्छीलः पुष्पाहरः । ताच्छील्ये किम् ? भारहारः ।

कर्मण्युपपदे अर्हतेरच् स्यात् । पूजार्हा ब्राह्मणी ।

## स्तम्बकर्णयो रमिजपोः ।१३।

स्तम्बकर्णयोरुपपदयोः रमिजपिभ्यामच् स्यात् स्तम्बे । रमते, स्तम्बेरमो हस्ती । तत्पुरुषे कृतीति सप्तम्यलुक । कर्णेजपः सूचकः । [ स्तम्बकर्णयोर्हस्तिसूचकयोः ] तेनेह न, स्तम्बे रन्ता । कर्णे जपिता ।

## शमि धातोः सञ्ज्ञायाम् ।१४।

शम्युपपदे धातोरच् स्यात्संज्ञायां विषये । शङ्करः । शंभवः ।

---

(१) लिङ्गविशिष्टपरिभाषाया घटग्रहणेनैव सिद्धे घटीग्रहणं परिभाषाया अनित्यत्वज्ञापनार्थम् । तेन मद्रराज्ञीत्यत्र टजन् ।

धात्वधिकारे पुनर्धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्, तेन शङ्करा ब्राह्मणीत्यत्र टो न। उडवगाडवस्तु शब्दकर्मकस्य गृणातेरचि पृषोदरादित्वात्संज्ञायां गकारस्य ककार इत्याह; तन्मते धातोः प्रयोजनं चिन्त्यम्।

## अधिकरणे शेतेः ।१५।

अधिकरणे सुबन्त उपपदे शेतेरच् स्यात्। खे शेते, खशयः। (पार्श्वादिषूपसंख्यानम्) पार्श्वाभ्यां शेते, पार्श्वशयः। पृष्ठशयः। उदरशयः (दिग्धसहपूर्वाच)। दिग्धसहशयः (उत्तानादिषु कर्तृषु) उत्तानः शेते, उत्तानशयः। अवमूर्द्धशयः। (गिरौ डश्छन्दसि) गिरौ शेते गिरिशः (१)।

## चरेष्टः ।१६।

अधिकरणे उपपदे चरेष्टः स्यात्। कुरुषु चरतीति कुरुचरः। स्त्री चेत्कुरुचरी। कुरूँश्चरतीत्यत्र न टः। उत्तरत्र भिक्षाग्रहणाज्ज्ञापकात्।

## भिक्षासेनादायेषु च ।१७।

एषूपपदेषु चरेष्टः स्यात्। भिक्षाचरः। सेनाचरः। आदायचरः। आदायेतिल्यबन्तम्। गृहीत्वा गच्छति भक्षयतीति वाऽर्थः।

## पुरोऽग्रतोऽग्रेषु सर्त्तेः ।१८।

एषूपपदेषु सर्त्तेष्टः स्यात्। पुरः सरतीति, पुरः सरः। अग्रतः सरः। अग्रेसरः। एदन्तत्वन्निपात्यते। यूथं तदग्रसरगर्वितकृष्णसारमित्यत्र तु बाहुलकान्न।

---

(१) गिरिरस्यास्तीतिविग्रहे लोमादित्वात् शे, गिरिश इति तद्धितान्तो वा बोध्यइति भाष्यम्। अत्रवाशब्द एवार्थे यथालोके गिरिशशब्दो लोमादित्वात् शे कृते निष्पन्नः स एव वेदेऽतोवार्तिकन्नारम्भणीयमिति।

## पूर्वे कर्त्तरि ।१९।

कर्तृवाचिनि पूर्वशब्द उपपदे सर्त्तेष्टः स्यात् । पूर्वः सरतीति पूर्वसरः । कर्त्तरीति किम् । पूर्वं देशं सरतीति पूर्वसारः ।

## कृञो हेतुताच्छील्यानुलोम्येषु ।२०।

हेत्वादिषु द्योत्येषु कर्मण्युपपदे करोतेष्टः स्यात् । हेतुः कारणम् । ताच्छील्यं तत्स्वभावता । आनुलोम्यमाराध्यचित्तानुवर्त्तनम् । यशस्करी विद्या । श्राद्धकरः । वचनकरः । एषु किम्—कुम्भकारः ।

## दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु ।२१।

अहेत्वाद्यर्थोऽयमारम्भः । दिवादिषु सुबन्तेषु कर्मसु चोपपदेषु करोतेष्टः स्यात् । दिवाकरः । विभाकरः । निशाकरः । प्रभाकरः । भास्करः । कारकरः । अन्तकरः । अनन्तकरः (१) । आदिकरः । बहुकरः (२) । नान्दीकरः । किङ्करः । लिपिकरः । लिबिकरः । बलिकरः । भक्तिकरः । कर्तृकरः । चित्रकरः । क्षेत्रकरः । एककरः । द्विकरः । जङ्घाकरः । बाहुकरः । अहस्करः (३) । यत्करः । तत्करः । धनुष्करः (४) अरुष्करः । (किंयत्तद्बहुषु कृञोऽज्विधानम्) किङ्करा । यत्करा । तत्करा । बहुकरा ।

## कर्मणि भृतौ ।२२।

(१) अन्तशब्देन नञ् समासेऽप्येतद्रूपं सिध्यति स्वरे तु विशेषः । नञ् समासेऽव्ययपूर्वपदप्रकृतिस्वरः । उपपदसमासे तु कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वमिति ।

(२) बहुशब्दोऽत्र वैपुल्यवचनः संख्यावचनस्य तु संख्याग्रहणेनैव सिद्धेः ।

(३) रोऽसुपीतिरेफः कस्कादित्वात्सः । (४) उभयत्रनित्यं "समासे" इति षः ।

कर्मशब्दे कर्मण्युपपदे करोतेष्टः स्यात् भृतौ गम्यमानायम्। भृतिर्वेतनम्। कर्मकरो भृतकः। भृतौ किम्। कर्मकारः।

## न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥२३॥

शब्दादिषु कर्मसूपपदेषु करोतेष्टो न स्यात्। हेत्वादिषु प्राप्तः प्रतिषिध्यते। शब्दकारः। श्लोककारः। कलहकारः इत्यादि।

## स्तम्बशकृतोरिन् ॥२४॥

स्तम्बशकृतोः कर्मणोरुपपदयोः करोतेरिन् स्यात। (व्रीहिवत्सयोरिति वक्तव्यम्) स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः। अनयोः किम्? स्तम्बकारः। शकृत्कारः

## हरतेर्दृतिनाथयोः पशौ ॥२५॥

दृतिनाथयोः कर्मणोरुपपदयोर्हरतेरिन् स्यात् पशौ कर्तरि। दृतिं हरतीति दृतिहरिः। नाथं हरतीति नाथहरिः पशुः। पशौ किम्? दृतिहारः नाथहारः।

## फलेग्रहिरात्मम्भरिश्च ॥२६॥

एतौ निपात्येते। फलेग्रहिर्वृक्षः। उपपदस्यैदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते। (भृञः कुक्ष्यात्मनो मुम् च)। कुक्षिम्भरिः। आत्मम्भरिश्चरति यूथमसेवमानः।

## छन्दसि वनसनरक्षिमथाम् ॥२७॥

कर्मण्युपपदे वनसनरक्षिमथिभ्य इन् स्याच्छन्दसि। ब्रह्मवनिं त्वा क्षत्रवनिम्। ब्रह्म वनति, क्षत्रं वनतीति विवक्षायाम्। उत नो गोषणिं धियम्। 'सनोतेरन्' इति षत्वम्। ये पथां पथि रक्षयः। हविर्मथीनामभ्याविवासताम्।

## एजेः खश् ॥२८॥

कर्मण्युपपदे ण्यन्तादेजेः खश् स्यात् । खशः शित्वादिह ण्यन्तस्य ग्रहणम् । जनमेजयतीति जनमेजयः । (खश्प्रकरणे वातशुनीतिलशर्धेषु अजधेट्तुदजहातिभ्य इति वक्तव्यम्) वातमजामृगाः । शुनिन्धयः (१) । तिलन्तुदः । शर्द्धंजहाः (२) माषाः ।

## नासिकास्तनयोर्ध्माधेटोः ॥२९॥

नासिकास्तनयोः कर्मणोरुपपदयोर्ध्माधेड्भ्यां खश् स्यात् । ( स्तने धेटः ) । स्तनंधयः । ( मुष्टौ ध्मश्च ) । मुष्टिन्धमः । मुष्टिन्धयः । (नासिकायां ध्मश्च धेटश्च ) । नासिकन्धमः । नासिकन्धयः । अत्यल्पमिदमुच्यते । (नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम् ) नाडिन्धयः । नाडिन्धमः । मुष्टिन्धयः । मुम । घटिन्धयः । घटिन्धमः । खारिन्धमः । खारिन्धयः ।

## नाडीमुष्ट्योश्च ॥३०॥

अनयोः कर्मणोरुपपदयोर्ध्माधेड्भ्यां खश् स्यात । नाडिंधमः । नाडिन्धयः । मुष्टिन्धमः । मुष्टिन्धयः ।

## उदि कूले रुजिवहोः ॥३१॥ (३)

कूले कर्मण्युपपदे उत्पूर्वाभ्यां रुजिवहिभ्यां खश् स्यात् । कूलमुद्रुजः । कूलमुद्वहः । धातूपसर्गयोः कार्यमन्तरङ्गमिति पूर्वं गतिसमासः पश्चादुपपदसमासः ।

## वहाभ्रे लिहः ॥३२॥

(१) खित्यनव्ययस्येति ह्रस्वः ।

(२) जुहोत्यादित्वाच्छ्लुपः श्लौ द्विर्वचने श्नाऽभ्यस्तयोरित्यालोपः । अत्र जहातिरन्तर्भावितण्यर्थः । शर्द्धोऽपानशब्दः ।

(३) पञ्चम्यर्थे सप्तमी ।

वहाभ्रयोः कर्मणोरुपपदयोर्लिहेः खश् स्यात् । वहंलिहो गौः । अभ्रंलिहो वायुः ।

## परिमाणे पचः । ३३ ।

परिमाणवाचिनि कर्मण्युपपदे पचेः खश् स्यात् । प्रस्थम्पचा (१) स्थाली । खारिम्पच कटाहः ।

## मितनखे च । ३४ ।

मितनखयोः कर्मणोरुपपदयोः पचेः खश् स्यात् । मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । पचिरत्र तापवचनः ।

## विध्वरुषोस्तुदः । ३५ ।

विध्वरुषोः कर्मणोरुपपदयोस्तुदेः खश् स्यात् । विन्धुन्तुदतीति विधुन्तुदः । अरुन्तुदः । 'अरुर्द्विषदजन्तस्ये'ति मुम् । संयोगान्तस्येति सलोपः ।

## असूर्यललाटयोर्दृशितपोः ॥ ३६ ॥

असूर्यललाटयोः कर्मणोरुपपदयोर्दृशितपिभ्यां खश् स्यात् । सूर्यन्न पश्यन्तीतिअसूर्यम्पश्याः । गुप्तपरश्चायम् । एवञ्च नाम गुप्ताः यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति, तेन सत्यपिदर्शने प्रयोगो न विरुध्यते । ललाटन्तपः सूर्यः ।

## उग्रम्पश्येरम्मदपाणिन्धमाश्च । ३७ ।

एते निपात्यन्ते उग्रमितिक्रियाविशेषणम्, तस्मिन्नुपपदे दृशेः खश् । उग्रम्पश्यतीत्युग्रम्पश्यः । इरा उदकन्तेन माद्यति दीप्यते अबिन्धनत्वादिति इरम्मदो मेघज्योतिः । मदीहर्षे अस्मादेव निपातनाद्दिवादिभ्यः श्यन्न भवति । पाणयो ध्मायन्तेऽस्मिन्निति पाणि-

(१) अत्र तत्परिमिते व्रीह्यादौ प्रस्थादिशब्दः

न्धमोऽध्वा । स पुनरस्मिन् गच्छद्भिः सर्पाद्यपनोदनाय पाणयः शब्द्यन्ते तादृशोऽन्धकाराद्यावृतोमार्गः ।

## प्रियवशे वदः खच् ॥ ३८ ॥

प्रियवशयोः कर्मणोरुपदयोर्वदेः खच् स्यात् । प्रियंवदः । वशंवदः । खकारोमुमर्थः । चकारः 'खचिह्रस्व' इतिविशेषणार्थः । (खच्प्रकरणे गमे सुप्युपसङ्ख्यानम् ) मितङ्गमो हस्ती । मितङ्गमा हस्तिनी ( विहायसो विह च ) विहङ्गमः । ( खच्च डिद्वा ) विहङ्गः । ( डे च ) विहगः ।

## द्विषत्परयोस्तापेः । ३९ ।

द्विषत्परयोः कर्मणोरुपपदयोस्तापेः खच् स्यात् । द्विषन्तन्तापयति, द्विषन्तपः । परन्तपः । लिङ्गविशिष्टपरिभाषाया अनित्यत्वाद् द्विषतीताप इत्यत्र खच्मुमौ न ।

## वाचि यमो व्रते । ४० ।

वाचि कर्मण्युपपदे यमेः खच् स्याद् व्रते गम्यमाने । शास्त्रबोधितः सङ्कल्पविशेषो व्रतम् । वाचं यच्छति वाचंयमः । 'वाचंयमपुरन्दरौचे'तिपूर्वपदस्यामन्तत्वन्निपात्यते । व्रतेकिम् । यो ह्यशक्तया वाचं यच्छति वाग्यामः सः ।

## पूः सर्वयोर्दारिसहोः । ४१ ।

पूः सर्वयोः कर्मणोरुपपदयोर्दारिसहिभ्यां खच् स्यात् । पुरंदारयति, पुरन्दरः । सर्वं सहते सर्वंसहो राजा । सहिग्रहणमसञ्ज्ञार्थम् । बाहुलकात् भगंदरः ।

## सर्वकूलाभ्रकरीषेषु कषः ॥ ४२ ॥

सर्वादिषु कर्मसूपपदेषु कषेः खच् स्यात् । सर्वङ्कषः खलः । कूलङ्कषा नदी । अभ्रङ्कषो वायुः । करीषङ्कषा वात्या ॥

## मेघर्तिभयेषु कृञः ॥ ४३ ॥

मेघादिषु कर्मसूपपदेषु करोतेः खच् स्यात्। मेघङ्करः । ऋतिङ्करः । भयंकरः । उपपदविधौ भयादिग्रहणं तदन्तविधिम्प्रयोजयतीति, अभयङ्करइत्यपि ।

## क्षेमप्रियमद्रेऽण् च। ४४ ।

क्षेमादिषु कर्मसूपपदेषु करोतेरण् स्याच्चात्खच् । क्षेमकारः । क्षेमङ्करः । प्रियकारः । प्रियङ्करः । मद्रकारः । मद्रङ्करः । वेतिवक्तव्येऽण्ग्रहणं हेत्वादिषु टबाधनार्थम् । अल्पारम्भाःक्षेमकराइति तु पचाद्यचि बोध्यम् ।

## आशिते भुवः करणभावयोः । ४५ ।

आशिते सुबन्ते उपपदे भवतेः करणभावयोः खच् स्यात् । आशितो भवत्यनेनाशितम्भव ओदनः । आशितस्य भवनम् । आशितम्भवः ।

## सञ्ज्ञायां भृतॄवृजिधारिसहितपिदमः । ४६ ।

कर्मणि सुबन्ते चोपपदे भृप्रभृतिभ्यः खच् स्यात् सञ्ज्ञायां गम्यमानायाम् । विश्वम्भरा रसा । रथन्तरं साम । पतिंवरा कन्या । शत्रुञ्जयो हस्ती । युगन्धरः पर्वतः । शत्रुंसहः । शत्रुंतपः । अरिन्दमः । अन्तर्भावितण्यर्थोऽत्रदमिः । सञ्ज्ञायांकिम् । कुटुम्बं बिभर्ति, कुटुम्बभारः ।

## गमश्च ॥ ४७ ॥

कर्मण्युपपदे गमेः खच् स्यात्, संज्ञायाम् । मितंगमो हस्ती योगविभाग उत्तरार्थः ।

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः । ४८ ।

अन्तादिषु कर्मसूपपदेषु गमेर्डः स्यात् । अन्तं गच्छति अन्तगः ।

अत्यन्तगः । अध्वगः । दूरगः । पारगः । सर्वगः । अनन्तगः । ( डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानम् ) सर्वत्रगः । पन्नगः । ( उरसो लोपश्च ) उरगः ( सुदुरोरधिकरणे ) सुगः । दुर्गः । ( निसोदेशे ) । निर्गोदेशः । अपरआह 'डप्रकरणेऽन्येभ्योऽपि दृश्यते' । तत्र स्त्र्यगारगः । अश्नुते यावदन्नाय ग्रामगः । ध्वंसते गुरुतल्पगः ॥

## आशिषि हनः ॥ ४९ ॥

कर्मण्युपपदे हन्तेर्डः स्यादाशिषि । शत्रुं वध्यादितिशत्रुहः । आशिषिकिम्-शत्रुघातः । ( दारावाहनोऽणन्तस्य च टः सञ्ज्ञायाम् ) दार्वाघाटस्ते वनस्पतीनाम् ( चारौ वा ) । चार्वाघाटः । चार्वाघातः ( कर्मणि समि च ) । वर्णसंघाटः । वर्णसंघातः । पदसंघाटः । पदसंघातः

## अपे क्लेशतमसोः । ५० ।

क्लेशतमसोः कर्मणोरुपपदयोरपपूर्वाद्धन्तेर्डः स्यात् । अनाशीरर्थोऽयमारम्भः । क्लेशापहः पुत्रः । तमोऽपहः सूर्यः ।

## कुमारशीर्षयोः णिनिः ॥ ५१ ॥

कुमारशीर्षयोः कर्मणोरुपपदयोर्हन्तेर्णिनिः स्यात् । कुमारघाती । शिरसः शीर्षभावो निपात्यते ।

## लक्षणे जायापत्योष्टक् । ५२ ।

जायापत्योः कर्मणोरुपपदयोर्हन्तेष्टक् स्याल्लक्षणवति कर्तरि । जायाघ्नो ब्राह्मणः । पतिघ्नी वृषली ।

## अमनुष्यकर्तृके च । ५३ ।

कर्मण्युपपदेऽमनुष्यकर्तृकेऽर्थे वर्तमानाद्धन्तेष्टक् स्यात् । पित्तघ्नं घृतम् । वातघ्नं चूर्णम् । अमनुष्यकर्तृके (२) किम् । आखुघातः शूद्रः ।

## शक्तौ हस्तिकपाटयोः । ५४ ।

हस्तिकपाटयोः कर्मणोरुपपदयोर्हन्तेष्टक् स्यात्शक्तौ गम्यमानायाम् । हस्तिघ्नो मनुष्यः । कपाटघ्नश्चौरः । शक्तौकिम् । विषेण हस्तिनं हन्तीति, हस्तिघातः (१) ।

## पाणिघताडघौ शिल्पिनि ॥ ५५ ॥

एतौ निपात्येते शिल्पिनि कर्तरि । पाणिताडयोरुपपदयोर्हन्तेष्टग् घादेशश्च निपात्यते । पाणिघः । ताडघः ( राजघ उपसंख्यानम् ) राजघः ।

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् । ५६ ।

अच्व्यन्तेषु च्व्यर्थेषु आढ्यादिषु कर्मसूपपदेषु करोतेः करणे ख्युन् स्यात् । अनाढ्यमाढ्यं करोत्यनेन, आढ्यङ्करणम् । सुभगङ्करणम् । स्थूलङ्करणम् । पलितङ्करणम् । नग्नङ्करणम् । अन्धङ्करणम् । प्रियङ्करणम् । च्व्यर्थेष्वितिकिम् । आढ्यं तैलेन कुर्वन्ति, अभ्यञ्जयन्तीत्यर्थः । अच्वौकिम् । आढ्यीकरोत्यनेन । प्रतिषेधसामर्थ्याल्ल्युडपीह नेति जयादित्यः । भाष्ये तु ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषादिति, आढ्यीभवितेत्युत्तरार्थं व्याख्यातम् ।

## कर्तरि भुवः खिष्णुच्खुकञौ । ५७ ।

अच्व्यन्तेषु च्व्यर्थेष्वाढ्यादिषु सुबन्तेषूपपदेषु कर्त्तरि भुवः खिष्णुच्खुकञौ स्तः । अनाढ्य आढ्यो भवतीति, आढ्यंभविष्णुः आढ्यंभावुकः । सुभगंभविष्णुः । सुभगंभावुकः स्थूलंभविष्णुः । स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुक इत्यादि । उदात्तत्वा-

( १ ) कथं नगरघातोहस्तीति, बाहुलकादत्राण् बोध्यः ।

द्रुवः सिद्धमिकारादित्वमिष्णुचः । नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्यते ।

## स्पृशोऽनुदके क्विन् ॥ ५८ ॥

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतं स्पृशतीति, घृतस्पृक् । मन्त्रेण स्पृशतीति, मन्त्रस्पृक् । अनुदके किम् । उदकस्पर्शः ।

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाञ्च ।५९।

आद्याः पञ्च क्विन्नन्ताः निपात्यन्ते । ततस्त्रिभ्यः क्विन्विधिः । निपातनैः साहचर्यात् किञ्चिदलाक्षणिकमपि । ऋतौ यजेः क्विन् । ऋतौ यजतीति, ऋत्विक् । धृषेः क्विन्, द्विर्वचनमन्तोदात्तत्वञ्च । धृष्णोतीति, दधृक् । सृजेः कर्मणि क्विन् अमागमश्च । सृज्यते इति स्रक् । दिशेः कर्मणि क्विन् । दिश्यते इति दिक् । उत्पूर्वात् स्निहः क्विनि उपसर्गान्तलोपः षत्वञ्च । उष्णिक् । अञ्चेः सुप्युपपदे क्विन् । प्राङ् । प्रत्यङ् । युजिक्रुञ्चिभ्यां केवलाभ्यां क्विन् । युङ् । युञ्जौ । क्रुङ् । क्रुञ्चौ । क्रुञ्चेर्नलोपाभावोपि-निपातनात् ।

## त्यदादिषु दृशोऽनालोचने कञ्च । ६० ।

अनालोचने वर्त्तमानाद् दृशेस्त्यदादिषु कञ् चात क्विन् स्यात् । त्यादृक् । त्यादृशः । तादृक् । तादृशः । अनालोचने किम् । तत्पश्यतीति, तद्दर्शः । तादृशादयो रूढिशब्दास्तेऽत्रासताप्यवयवार्थेन व्युत्पाद्यन्ते । भाष्येकर्मकर्त्तरि व्युत्पत्तिर्दर्शिता । तमिवेमं पश्यन्ति जनाः । स इवायं पश्यति ज्ञानविषयो भवतीत्यर्थात् । ( दृशेः समानान्ययोश्च ) । सदृक् । सदृशः । अन्यादृक् । अन्यादृशः ।

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ ६१ ॥

सुप्युपसर्गेऽनुपसर्गे चोपपदे सदादिभ्यः क्विप् स्यात् । शुचिषत् । पूर्वपदादितिषत्वम् । उपनिषत् । अण्डसूः । प्रसूः । मित्रद्विट् । प्रद्विट् । मित्रध्रुक् मित्रध्रुट् । प्रध्रुक् । प्रध्रुट् । गोधुक् । प्रधुक् । अश्व-

युक् । प्रयुक् । वेदवित् । निवित् । काष्ठभित् । प्रभित् । रज्जुच्छित् । प्रच्छित् । शत्रुजित् । प्रजित् । सेनानीः । ग्रामणीः । विराट् । उपसर्गग्रहणमन्यत्र सुब्ग्रहणेनोपसर्गग्रहणं नेति ज्ञापनार्थं; तेन, 'वदः सुपि क्यप् च' स्थल न ग्रहणम् ।

## भजो ण्विः । ६२ ।

सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात् । अर्द्धभाक् । प्रभाक् ।

## छन्दसि सहः । ६३ ।

सुप्युपसर्गे चोपपदे सहेर्ण्विः स्याच्छन्दसि विषये । पृतनाषाट् । निष्षाट् ।

## वहश्च । ६४ ।

सुप्युपसर्गे चोपपदे छन्दसि वहेर्ण्विः स्यात् । दित्यवाट् च मे । दित्यौही च मे । योगविभाग उत्तरार्थः ।

## कव्यपुरीषपुरीष्येषु ञ्युट् । ६५ ।

एषु वहेर्ञ्युट् स्यात् कव्यवाहनः । पुरीषवाहनः । पुरीष्यवाहनः ।

## हव्येऽनन्तः पादम् । ६६ ।

हव्ये वहेर्ञ्युट् स्यात्, पादमध्ये वहिर्न चेत् । अग्निश्च हव्यवाहनः । पादमध्ये तु ण्विरेव । हव्यवाडग्निरजरः पिता नः ।

## जनसनखनक्रमगमो विट् । ६७ ।

सुप्युपसर्गे च जनादिभ्यो विट् स्याच्छन्दसि । अब्जाः । गोजाः । गोषा इन्द्रो नृषा असि । इयं शुष्मेभिर्बिसखा । आदधिक्राः । अग्रेगाः । विड्वनोरित्यात्वम् । गोषा, नृषा इत्यत्र 'सनोतेरन' इति षत्वम् ।

## अदोऽनन्ने । ६८ ।

अन्नभिन्ने सुबन्ते अदेर्विट् स्यात् । आमात् ! सस्यात् । अनन्ने किम् । अन्नादः ।

## क्रव्ये च । ६९ ।

क्रव्ये अदेर्विट् स्यात् । क्रव्यमत्ति, क्रव्यात् । पूर्वेण सिद्धे असरूपबाधनार्थमिदम्, तेनाण्न ।

## दुहः कब् घश्च । ७० ।

सुप्युपपदे दुहेः कप् स्याद् घश्चान्तादेशः । कामदुघा धेनुः ।

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् । ७१ ।

मन्त्रविषये एभ्यो ण्विन् स्यात् । श्वेते कर्तरि वहेः कर्मणि ण्विन् । ( श्वेतवहादीनां डस्पदस्येति वक्तव्यम् ) श्वेता एनं वहन्तीति श्वेतवाः । श्वेतवाहौ । श्वेतवाहः । उक्थे कर्मणि करणे वा शंसतेर्ण्विर्नलोपश्च । उक्थशाः । उक्थशासौ । पुरस्पूर्वस्य दाशेः कर्मणि णिनः, आदेर्डत्वञ्च । पुरो दाश्यते, पुरोडाः । पुरोडाशौ ।

## अवे यजः । ७२ ।

अवे यजेर्ण्विन् स्यान्मन्त्रविषये । पदान्तविषये डस् । अवयाः । अवयाजौ । योगविभाग उत्तरार्थः ।

## विजुपे छन्दसि ॥ ७३ ॥

उपे यजेर्विच् स्याच्छन्दसि । उपयड्भिरूर्ध्वं यजन्ति । छन्दोग्रहणं ब्राह्मणसंग्रहार्थम् ।

## आतो मनिन्क्वनिब्वनिपश्च । ७४ ।

सुप्युपसर्गे चोपपदे आकारान्ताद्धातोर्मनिनादयः स्युश्च। द्विच् ।

सुदामा। अश्व इव तिष्ठतीत्यश्वत्थामा (१) सुधीवा। घुमास्थेतीत्वम्। भूरिदावा। शुभंयाः।

(२)

## अन्येभ्योऽपि दृश्यन्ते ॥७५॥

अनाकारान्तेभ्योऽपि मनिन् क्वनिब्वनिप् विजेते प्रत्ययाः दृश्यन्ते। अपिः सर्वोपाधिव्यभिचारार्थः। सुशर्मा। प्रातरित्वा। विजावा। (३)। रेट्।

## क्विप् च ॥७६॥

धातोः क्विप् स्यात्। वाहाद्भ्रश्यतीति, वाहाभ्रट् (४)।

(५)

## स्थः क च ॥७७॥

सुप्युपपदे तिष्ठतेः कः स्यात् क्विप् च शंस्थः। शंस्थाः।

## सुप्यजातौ णिनिस्ताच्छील्ये ॥७८॥

अजातिवाचिसुबन्तउपपदे धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये। उष्णभोजी। अजातौकिम्। ब्राह्मणानामन्त्रयिता। "नलोके"-तिषष्ठीप्रतिषेधः। ताच्छील्येकिम्। उष्णं भुङ्क्ते कदाचित्। पुनः सुब्ग्रहणमुपसर्गनिवृत्त्यर्थम् (णिनिविधौ साधुकारिण्युपसंख्यानम्) साधुकारी। साधुदायी (ब्रह्मणि-वदः) ब्रह्मवादिनो वदन्ति।

---

(१) पृषोदरादित्वात्सस्य तः।
(२) छन्दसीतिनिवृत्तम्।
(३) विड्वनोरित्यात्वम्।
(४) अन्येषामपिदृश्यत इतिदीर्घ इति हरदत्तः। शब्दकौस्तुभे वाहभ्रडित्यपि।
(५) हेत्वादिषु टं शमिधातोरित्यत्रञ्च बाधितुमिदम्।

## कर्त्तर्युपमाने ॥७९॥

कर्तृवाचिनि उपमान उपपदे धातोर्णिनिः स्यात् । उष्ट्र इव क्रोशतीति, उष्ट्रक्रोशी (१) कर्तरि किम् । अपूपानिव भक्षयति माषान् । उपमाने-किम् । उष्ट्रः क्रोशति ।

## व्रते ॥८०॥

सुप्युपपदे धातोर्णिनिः स्याद् व्रते गम्यमाने । स्थण्डिलशायी ।

## बहुलमाभीक्ष्ण्ये ॥८१॥

सुप्युपपदे धातोर्बहुलं णिनिःस्यादाभीक्ष्ण्ये गम्ये क्षीरपायिणउशीनराः पुनः पुनः क्षीरं पिबन्तीत्यर्थः ।

## मनः ॥८२॥

सुप्युपपदे मन्यतेर्णिनिः स्यात् । दर्शनीयमानी । बहुलग्रहणाद् दैवादिकस्य ग्रहणम्, तेनोत्तरत्र खशि श्यनेव ।

(२)

## आत्ममाने खश्च ॥८३॥

सुप्युपपदे आत्मकर्मके मनने वर्तमानान्मन्यतेः खश् स्याच्चाणिनिः। दर्शनीयमात्मानं मन्यते-दर्शनीयंमन्यः । दर्शनीयमानी । पण्डितम्मन्यः। पण्डितमानी । आत्मनेकिम् । दर्शनीयमानी देवदत्तो यज्ञदत्तस्य ।

---

(१) उपपदं कर्ता प्रत्ययार्थस्य कर्तुरुपमानम् । अताच्छील्यार्थम्, जात्यर्थञ्च वचनम् ।
(२) खकारो मुमर्थः । दर्शनीयम्मन्या कुमारीत्यत्र ह्रस्वार्थश्च ।

(१)

## भूते ।८४।

अधिकारोऽयं, 'वर्तमानेलडि' नियावत् ।

## करणे यजः ।८५।

करणे उपपदे भूतार्थवृत्तेर्यजेर्णिनिः स्यात् । अग्निष्टोमयाजी । अग्निष्टोमेनेष्टवानित्यर्थः ।

(२)

## कर्मणि हनः ।८६।

कर्मण्युपपदे भूतार्थवृत्तेर्हन्तेर्णिनिः स्यात् । पितृव्यघाती ।

## ब्रह्मभ्रूणवृत्रेषु क्विप् ।८७

ब्रह्मादिषु कर्मसूपपदेषु भूतार्थवृत्तेर्हन्तेः क्विप् स्यात् । ब्रह्महा । भ्रूणहा । वृत्रहा । उभयतो नियमोऽयम् (३) । ब्रह्मादिष्वेव हन्तेर्भूते क्विब् भवति । क्विबेव हन्तेर्भूते ब्रह्मादिष्विति । तेन 'वासरूपविधिना' णिनिर्न ।

(४)

## बहुलं छन्दसि ।८८।

छन्दसि विषये हन्तेर्बहुलं क्विप् स्यात् । यो मातृहा पितृहा । क्वचिन्न, पितृघातः ।

## सुकर्मपापमन्त्रपुण्येषु कृञः ।८९।

सुकर्मादिषु कर्मसूपपदेषु करोतेः क्विप् स्यात् । सुकृत । कर्मकृत ।

---

(१) वर्तमानध्वंसप्रतियोगिक्रियोपलक्षितत्वं भूतत्वम् ।
(२) शक्तिस्वाभाव्यात् कुत्सितविषये इदम्, तेनेह न चौरं हतवान् ।
(३) अत्र वृत्तिमतं भाष्यविरोधादुपेक्षितम् ।
(४) नियमादप्राप्तः क्विप् प्रतिप्रसूयते ।

पापकृत् । मन्त्रकृत । पुण्यकृत् । भूते क्विबेवेति कालनियमात्कर्म कृतवानित्यत्राण्न । सुकर्मादिषु कृञ एवेति उपपदनियमान्मन्त्रमधीतवान्, मन्त्राध्याय इत्यत्र न क्विप् । भूतएव क्विबिति प्रत्ययनियमान्मन्त्रं करोति करिष्यति वेतिविवक्षायां न क्विप् । स्वादिष्वेवेति धातुनियमाभावादन्यस्मिन्नप्युपपदे क्विप् । शास्त्रकृत् ।

(१)

## सोमे सुञः ।९०।

सोमे कर्मण्युपपदे सुनोतेः क्विप् स्यात् । सोमसुत् ।

## अग्नौ चेः ।९१।

अग्नौ कर्मण्युपपदे चिनोतेः क्विप् स्यात् । अग्निचित (२) ।

## कर्मण्यग्न्याख्याय ।९२।

कर्मण्युपपदे चिनोतेः कर्मणि क्विप् स्यादग्न्याख्यायाम् । श्येनइव चीयते, श्येनचित् ।

## कर्मणीनिर्विक्रियः ।९३।

कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात । सोमविक्रयी । रसविक्रयी । ( कर्मणि कुत्सितइति (३) वक्तव्यम् ) तेनेह न, धान्यविक्रायः ।

## दृशेः क्वनिप् ।९४।

कर्मण्युपपदे भूतार्थवृत्तेर्दृशेः क्वनिप् स्यात् । परलोकं दृष्टवान्, परलोकदृश्वा, प्रत्ययान्तरनिवृत्यर्थमिदम् ।

---

(१) अत्रोत्तरत्र च चतुर्विधो नियम इतिवृत्तिः ।

(२) स्थलविशेषस्य संज्ञेयम् ।

(३) यत्कर्म, क्रियायां सम्बद्ध्यमानं कर्तुः कुत्सामावहति तत्रेत्यर्थः । सोमादयश्च विक्रीयमाणाः शास्त्रनिषिद्धत्वात्तदावहाः ।

## राजनि युधिकृञः । ९५ ।

राजनि कर्मण्युपपदे युधिकृञभ्यां क्वनिप् स्यात् । राजानं योधितवान्, कृतवान्वा, राजयुध्वा । राजकृत्वा ।

## सहे च ॥ ९६ ॥

कर्मणीतिनिवृत्तम् । सहे उपपदे युधिकृञ्भ्यां क्वनिप् स्यात् । सहयुध्वा । सहकृत्वा ।

## सप्तम्यां जनेर्डः ॥ ९७ ।

सप्तम्यन्त उपपदे भूतार्थवृत्तेर्जनेर्डः स्यात् । सरसिजातं, सरसिजम् । मन्दुरजः (१) । 'ङ्यापो' रिति ह्रस्वः ।

## पञ्चम्यामजातौ । ९८ ।

जातिभिन्ने पञ्चम्यन्त उपपदे भू० जनेर्डः स्यात् । बुद्धिजः । संस्कारजः । अदृष्टजम् । अजातौ किम् । अश्वाज्जातः ।

## उपसर्गे च सञ्ज्ञायाम् ॥ ९९ ॥

उपसर्गे चोपपदे भू० जनेर्डः संज्ञायाम् । प्रजा स्यात्सन्ततौ जने ।

## अनौ कर्मणि । १०० ।

कर्मण्युपपदे भू० अनुपूर्वाज्जनेर्डः स्यात् । पुमासमनुरुद्ध्य जातः, पुमनुजः । स्त्र्यनुजः ।

## अन्येष्वपि दृश्यते । १०१ ।

उपपदान्तरेष्वपि भू० जनेर्डः स्यात् । न जात इत्यजः । द्विर्जाता द्विजाः । ब्राह्मणजः ( अन्येभ्योऽपि दृश्यते ) उखा । परिखा ।

(१) वाजिशाला तु मन्दुरा ।

## निष्ठा ॥ १०२ ॥

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तयोरेवेति भावकर्मणोः क्तः । कृदतिङिति कर्तरि क्तवतुः । स्नातं मया । भुक्तस्त्वया ओदनः । ओदनं भुक्तवान् भवान् । इतरेतराश्रयपरिहारस्तु भाविनीसंज्ञया । ( आदिकर्मणि (१) निष्ठा वक्तव्या ) 'आदिकर्मणी'ति कर्तरि भावकर्मणोश्च । प्रकृतः, प्रकृतवान् वा, कटं देवदत्तः । प्रकृतः कटो देवदत्तेन । प्रकृतं देवदत्तेन ।

## सुयजोर्ङ्वनिप् । १०३ ।

भूतार्थवृत्तिभ्यां सुयजिभ्यां ङ्वनिप् स्यात् । सुतवानिति, सुत्वा । इष्टवानिति, यज्वा ।

## जीर्यतेरतृन् । १०४ ।

भू० जीर्यतेरतृन् स्यात् । जरन् । जरन्तौ । 'वासरूपविधिना' निष्ठा-जीर्णः ।

(२)

## छन्दसि लिट् । १०५ ।

छन्दसि विषये भू० धातोर्लिट् स्यात् । अहं द्यावापृथिवी आततान ।

## लिटः कानज्वा । १०६ ।

लिटः स्थाने कानज्वा स्यात् छन्दसि । योऽग्निं चिक्यानः । न च भवति । अहं सूर्यमुभयतो ददर्श ।

## क्वसुश्च । १०७ ।

---

( १ ) आद्यक्षणेषु सर्वस्याः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम् ।
( २ ) छन्दसि लुङ् लङ् लिट्' इति विधिस्तु धातुसम्बन्धे, अयन्त्वविशेषेणेतिभेदः ।

लिटः क्वसुर्वा स्याच्छन्दसि (१) यो नो अग्ने अररिवानघायुः। योगविभाग उत्तरार्थः।

## भाषायां सदवसश्रुवः। १०८।

भूतार्थवृत्तिभ्यः सदवसश्रुभ्यो लिड् वा स्यात्, तस्य क्वसुः। भाषायाम्। सेदिवान्। पक्षे असदत्। असीदत्। ससाद। ऊषिवान्। अवात्सीत्। अवसत्। उवास। शुश्रुवान्। अश्रौषीत्। अशृणोत्। शुश्राव।

## उपेयिवाननाश्वाननूचानश्च। १०९।

एते निपात्यन्ते। उपपूर्वादिणो भाषायामपि भूतमात्रे लिड् वा, तस्य नित्यं क्वसुः। इट्। उपेयिवान्। स्त्रियाम्-उपेयुषी। उपेत्यविवक्षितम्। ईयिवान्। समीयिवान्। नञ्पूर्वादश्नातेः क्वसुरिडभावश्च अनाश्वान्। शसि अनाशुषः। अनुपूर्वाद्ब्रुवः कर्तरि कानच्। अनूचानः। वाग्रहणानुवृत्तेलुंङादयोऽपि।

## लुङ्। ११०।

भूतार्थवृत्तेर्धातोर्लुङ् स्यात्। अभूत्। अकार्षीत् (वसेर्लुङ्रात्रिविशेषे (२) जागरणसन्ततावितिवक्तव्यम्) क्व भवानुषितः। अमुत्रावात्सम्। जागरणसन्ततौ किम्। यो हि मुहूर्तमात्रमपि स्वपिति तत्रामुत्रावसमित्येव।

## अनद्यतने लङ्। १११। (३)

---

(१) कवयस्तु लोकेऽपि बहुलं प्रयुञ्जते तं तस्थिवांसं नगरोपकण्ठे इति।

(२) रात्रेश्चतुर्थयामे यदा वाक्यं प्रयुङ्क्ते तदा अतिक्रान्तरात्रिप्रहरत्रयवसनमनद्यतनमितिलङ् प्रसङ्गः यदा प्रयोक्ता सकलमतिक्रान्तरात्रिप्रहरत्रयं जागरितवांस्तदा लुङ्। सुप्त्वा प्रबुध्य प्रयोगे तु लङेव।

(३) अनद्यतनाविवक्षायां सामान्यविहिता एव। तेन अगमाम घोषानित्यादयः साधुप्रयोगाः।

अनद्यतन (१) भूतार्थवृत्तेर्धातोर्लङ् स्यात् । अभवत् । अगच्छत् । अविद्यमानमद्यतनं यस्मिन्नितिबहुव्रीह्याश्रयणान्नेह, अद्यह्यश्चाभुञ्ज्महि (परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ्वक्तव्यः) अरुणद् यवनः साकेतम् । परोक्षेकिम् । उदगादादित्यः । लोकविज्ञातेकिम् । चकार कटं देवदत्तः । प्रयोक्तुर्दर्शनविषये किम् ? जघान कंसं किल वासुदेवः ।

## अभिज्ञावचने लृट् । ११२ ।

स्मृतिबोधकउपपदे भूतानद्यतनवृत्तेर्धातोर्लृट् स्यात् । अभिजानासि, स्मरसि, बुध्यसे, चेतयसे वा, काश्यां वत्स्यामः ।

## न यदि । ११३ ।

यच्छब्दयोगे लृट् न स्यात् । अभिजानासि, यत्काश्यामवसाम ।

## विभाषा साकाङ्क्षे ॥ ११४ ॥

स्मृतिबोधकउपपदे अनद्यतनभूतार्थवृत्तेर्लृड्वा स्यात्, लक्ष्य लक्षणभावेन साकाङ्क्षश्चेद्धात्वर्थः । अभिजानासि देवदत्त? कश्मीरान् गमिष्यामः, अगच्छाम वा । तत्र पयः पास्यामः । अपिबाम वा । गमनं लक्षणं, पानं लक्ष्यम् । उभयत्र विभाषेयम् । यदीति नानुवर्तते तेन, यच्छब्दयोगेऽपि विभाषा ।

(२)

## परोक्षे लिट् । ११५ ।

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । बभूव रामः । अभू-

---

( १ ) अद्यतनाष्टप्रहरीव्यतिरिक्तत्वे सति भूतत्वं, भूतानद्यतनत्वम् ।

( २ ) साक्षात्कृतमित्येतादृशविषयताशालिज्ञानाविषयत्वं परोक्षत्वम् । एकस्या रात्रेश्चतुर्थो यामो दिवसश्च सर्वो द्वितियायाश्च प्रथमोऽद्यतनइतिप्राञ्चः । परे तु अतीताया रात्रेः पश्चाद् यामद्वयमागामिन्यः पूर्वयामद्वयं दिवसश्च सकलोऽद्यतन इति मन्यन्ते ।

नृपो विबुधसखइत्यादि तु भूतसामान्यविवक्षायां बोध्यम् । परोक्षे लिङ्-त्यन्तापह्नवे च ) नो खण्डिकां (१) जगाम ।

## हशश्वतोर्लङ् च ।११६।

हशश्वतोरुपपदयोर्लिङ्विषये लङ् चाल्लिट् । इति हाकरोत्, चकार वा । शश्वदकरोत् चकार वा ।

(२)

## प्रश्ने चासन्नकाले ।११७।

आसन्नकाले पृच्छ्यमाने लिङ्विषये लङ्लिटौ स्तः । कश्चित्कश्चित्पृच्छति-अगच्छद् वः ? जगाम वा । अनासन्नकिम् । जघान भीमो हिडिम्बं किम् ।

## लट् स्मे ।११८।

स्मे उपपदे लिङ्विषये लट् स्यात् । हन्ति स्म वालिनं रामः । जघान किलेत्यर्थः ।

## अपरोक्षे च ।११९।

स्म उपपदे भूतानद्यतनवृत्तेर्धातोर्लङ् स्यात् । इति स्म पिता ब्रवीति ।

## ननौ पृष्टप्रतिवचने ।१२०।

अनद्यतने परोक्षे चेति निवृत्तम् । ननूपपदे पृष्टप्रतिवचने भूते लट् स्यात । अकार्षीः किं, न ननु करोमि भोः ।

## नन्वोर्विभाषा ।१२१।

नन्वोरुपपदयोः पृष्टप्रतिवचने भूते वा लट् स्यात् । अकार्षीः किम् ? न करोमि, नाकार्षम् । नु करोमि । न्वकार्षम् ।

---

(१) खण्डिका जनपदः ।

(२) पञ्चवर्षाभ्यन्तरमासन्नकालः ।

## पुरि लुङ् चास्मे ॥१२२॥

स्मभिन्ने पुराशब्दे भूतानद्यतने लुङ् चाल्लट् वा स्यात् । तयोरभावे यथाप्राप्तम् । वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । अस्मे किम् ? युध्यते स्म युधिष्ठिरः ।

(१)

## वर्तमाने लट् ॥१२३॥

वर्तमानार्थवृत्तेर्धातोर्लट् स्यात् । भवति । पचति ।

## लटः शतृशानचावप्रथमासमानाधिकरणे ॥१२४॥

अप्रथमान्तेन समानाधिकरणे सति लटः स्थाने शतृशानचौ स्तः । पचन्तं, पचमानं पश्य । पचता कृतम् । पचमानेन कृतमित्यादि । अप्रथमेत्यादिकिम् । । देवदत्तः पचति । लटः शतृशानचाविति योगो विभज्यते 'नन्वोर्विभाषे' त्यतो विभाषाऽनुवर्तते । अप्रथमासमानाधिकरणे, इति द्वितीये योगे तु निवृत्ता । तेनाप्रथमासमानाधिकरणे नित्यौ शतृशानचावन्यत्र तु विभाषा (२) ।

## सम्बोधने च ॥१२५॥

सम्बोधने लटः शतृशानचौ स्तः । हे पचन् । हे पचमान ।

## लक्षणहेत्वोःक्रियायाः ॥१२६॥

लक्षणं चिह्नम् । हेतुः फलं साधनञ्च । क्रियाया लक्षणे हेतौ च

---

(१) प्रारब्धापरिसमाप्तक्रियोपलक्षितत्वं वर्तमानत्वम् ।

(२) सा च व्यवस्थिता तेनाप्रथमासमानाधिकरणेऽपत्यप्रत्यये उत्तरपदे संबोधने क्रियाया लक्षणहेत्वोश्च नित्यमन्यत्र विभाषा । कुर्वन्तं पश्य । कुर्वतोऽपत्यं कौर्वतः । कुर्वद्भक्तिः । हे पचन् । तिष्ठन्नधीते । अधीयानो वसति । सर्वमेतदेतत्सूत्रभाष्यकैयटयोः, लृटः सद्वेति कैय्यटेच विस्पष्टम् ।

यो धातुस्तस्मात्‌ लटः शतृशानचौ स्तः । तिष्ठन्तोऽनुशासति गणकाः । स्थितिरनुशासनस्य लक्षणम्‌ । अधीयानो वसति । अध्ययनं वासस्य फलम्‌ । विद्वान्मुच्यते । ज्ञानं मोक्षसाधनम्‌ । ( सदादयश्च बहुलम्‌ ) सन्‌ ब्राह्मणः । अस्ति ब्राह्मणः ( इङ्जुहोत्योर्वावचनम्‌ ) अधीते । अधीयानः जुहोति । जुह्वत्‌ । ( माङ्याक्रोशे ) मा जीवन्‌ । मा-पचमानः ।

## तौ सत्‌ । १२७ ।

शतृशानचौ सत्संज्ञौ स्तः । ब्राह्मणस्य कुर्वन्‌ कुर्वाणो वा ब्राह्मणस्य करिष्यन्‌ । करिष्यमाणो वा । अनुवृत्त्यैव सिद्धे तौग्रहणं वर्तमानकालविहितत्वरूपोपाध्यनवच्छिन्नस्य शतृशानज्मात्रस्य परिग्रहार्थन्तेन ब्राह्मणस्य द्विषन्‌ , द्वेक्ष्यमाणो वेत्यत्रापि, 'पूरणगुणेति' निषेधः ।

## पूङ्यजोः शानन्‌ । १२८ ।

वर्तमानवृत्तिभ्यां पूङ्यजिभ्यां शानन्‌ स्यात्‌ । पवमानः । यजमानः ।

## ताच्छील्यवयोवचनशक्तिषु चानश्‌ । १२९ ।

ताच्छील्यादिषु द्योत्येषु वर्तमानाद्धातो श्चानश्‌ स्यात्‌ । भोगं भुञ्जानः । कवचं बिभ्राणः । हस्तिनं निघ्नानः ।

## इङ्धार्योः शत्रकृच्छ्रिणि ॥ १३० ॥

वर्तमानवृत्तिभ्यामिङ्धारिभ्यां शता स्यादकृच्छ्रिणि कर्त्तरि अधीयन्‌ काव्यम्‌ । धारयन्नुपनिषदम्‌ । अकृच्छ्रिणि किम्‌ । कृच्छ्रेणाधीते ।

## द्विषोऽमित्रे । १३१ ।

अमित्रे कर्त्तरि द्विषेः शता स्यात्‌ । द्विषन्‌ शत्रुम्‌ । अमित्रे किम्‌ । द्वेष्टि गुरुं शिष्यः ।

## सुञो यज्ञसंयोगे ।१३२।

सुनोतेः शता स्यात् यज्ञसंयोगे गम्यमाने । सर्वे सुन्वन्तः । सत्रे यजमाना इत्थमुच्यन्ते । यज्ञसंयोगे किम् । अयजमानेषु ऋत्विक्षु मा भूत्।

## अर्हः प्रशंसायाम् ।१३३।

प्रशंसायामर्थे वर्तमानादर्हेः शता स्यात् । पूजार्हन् । प्रशंसायां किम् । वधमर्हति चौरः ।

## आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।१३४।

क्विपमभिव्याप्य तच्छीलादिषु कर्तृषु वक्ष्यमाणाः प्रत्ययाबोध्याः ।

## तृन् ।१३५।

धातोस्तृन् स्यात्तच्छीलादिषु कर्तृषु । उष्णं भोक्ता । योद्धा क्षत्रियः। कटं कर्ता । ( तृन्विधावृत्विक्षु (१) चानुपसर्गस्य होता ) । पोता । अनुपसर्गस्य किम् । प्रशास्ता (२) प्रहर्ता । ( त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वञ्च ) त्वष्टा । अनिट्त्वमिति सर्वस्यशेषः । ( क्षदेश्च युक्ते ) क्षत्ता । ( छन्दसि तृच ) क्षत्तृभ्यः संग्रहीतृभ्यः । क्षत्तृभ्यः संग्रहीतृभ्यः ।

## अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचरइष्णुच् ।१३६।

अलंकृञादिभ्यस्तच्छीलादिषु कर्तृषु इष्णुच् स्यात् । अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्द्धिष्णुः । सहिष्णुः । चरिष्णुः ।

---

(१) अताच्छील्यार्थमिदम् ।

(२) तृजत्र बोध्यः । तृनि तु 'तादौ च निति कृत्यता' विति गतेः प्रकृतिस्वरः स्यात् ।

## णेश्छन्दसि । १३७ ।

ण्यन्तादिष्णुच् स्यात्तच्छीलादिषु छन्दसि । वीरुधः पारयिष्णवः । 'अयामन्ते'त्ययः ।

## भुवश्च । १३८ ।

भवतेरिष्णुच् स्यात्तच्छीलादिषु छन्दसि । भविष्णुः । योगविभागउत्तरार्थः ।

## ग्लाजिस्थश्च क्स्नुः ॥ १३९ ॥

एभ्यश्चाद्भुवः क्स्नुः स्यात्तच्छीलादिषु कर्तृषु । ग्लास्नुः । जिष्णुः । 'क्ङिति चे' त्यत्र गप्रश्लेषाद्गुणो न । स्थास्नुः । गित्त्वाद्घुमास्थेतीत्वन्न । भूष्णुः । श्रयुकः क्कितीत्यत्र गकारप्रश्लेषादिडभावः । (दंशेश्छन्दस्युपसंख्यानम् ) दङ्क्ष्णवः, पशवः ।

## त्रसिगृधिधृषिक्षिपेः क्नुः । १४० ।

त्रस्यादिभ्यः क्नुः स्यात्त० क० । त्रस्नुः गृध्नुः धृष्णुः । क्षिप्नुः ।

## शमित्यष्टाभ्यो घिनुण् ॥ १४१ ॥

शमादिभ्योऽष्टभ्यो घिनुण् स्यात्त० क० । शमी । शमिनौ । उगित्वान्नुम् तु न । तद्विधौ झलीत्यपकर्षात् । उगित्फलन्तु शमिनितरा, शमिनीतरेत्यादावुगितश्चेति ह्रस्वविकल्पः ।

## संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च । १४२

संपृचादिभ्यो घिनुण्स्यात्त० क० । संपर्की । अनुरोधी । आयामी । आयासी । परिसारी । संसर्गी । परिदेवी । संज्वारी । परिक्षेपी । परिराटी । परिवादी । परिदाही । परिमोही । दोषी । द्वेषी ।

द्रोही । दोही । योगी । आक्रीडी । विवेकी त्यागी । रागी । भागी । अतिचारी । अपचारी । आमोषी । अभ्याघाती ।

## वौ कषलसकत्थस्रम्भः । १४३ ।

विपूर्वेभ्यः कषादिभ्यो घिनुण् स्यात्त० क० । विकाषी । विलासी । विकत्थी । विस्रम्भी ।

## अपे च लषः । १४४ ।

अपपूर्वाद्विपूर्वाच्च लषेर्घिनुण् स्यात्तः । अपलाषी । विलाषी ।

## प्रेलपसृद्रुमथवदवसः । १४५ ।

प्रपूर्वेभ्यो लपादिभ्यो घिनुण् स्यात्त० क० प्रलापी । प्रसारी । प्रदावी । प्रमाथी । प्रवादी । प्रवासी ।

## निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् । १४६ ।

निन्दादिभ्यो वुञ् स्यात्त० क० । निन्दकः । हिंसकः । क्लेशकः । खादकः । विनाशकः । परिक्षेपकः । परिराटकः । परिवादकः । व्याभाषकः असूयकः । ण्वुलैव सिद्धे वुञ्विधानं ज्ञापयति वासरूपविधिना ण्वुलादयो न भवन्तीति ।

## देविक्रुशोश्चोपसर्गे । १४७ ।

उपसर्गपूर्वाभ्यां देविक्रुशिभ्यां वुञ् स्यात्त० क० । आदेवकः परिक्रोशकः । उपसर्गेकिम् । देवयिता । क्रोष्टा । दीव्यतेर्हेतुमण्ण्यन्तस्य, दिवकूजने चुरादिण्यन्तस्य च ग्रहणम् ।

## चलनशब्दार्थादकर्मकाद्युच् ॥ १४८ ॥

अकर्मकेभ्यश्चलनार्थेभ्यः शब्दार्थेभ्यश्च युच् स्यात्त० क० । चलनः चोपनः । शब्दनः । रवणः । अकर्मकात्किम् ! पठिता विद्याम् ।

## अनुदात्तेतश्च हलादेः । १४९ ।

अकर्मकाद्धलादेरनुदात्तेतो युच् स्यात्त० क० । वर्तनः । वर्द्धनः । अनुदात्तेतः किम् । भविता । हलादेः किम् । एधिता । अकर्मकात्किम् । वसिता वस्त्रम् ।

## जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः । १५० ।

ज्वादिभ्यो युच् स्यात्त० क० । जु, इतिसौत्रो धातुः । जवनः । चङ्क्रमणः । दन्द्रमणः । सरणः । गर्द्धनः । ज्वलनः । शोचनः । लषणः पतनः । पदनः । पद्यतेः पूर्वेणैव युचि सिद्धे तद्ग्रहणं 'ताच्छीलिकेषु ताच्छीलिका वासरूपविधिना न भवन्ती' ति ज्ञापनार्थम् । तेन इष्णुजादिविषये तृन्न ।

## क्रुधमण्डार्थेभ्यश्च । १५१ ।

क्रुध्यर्थेभ्यो मण्डार्थेभ्यश्च युच् स्यात्त० क० । क्रोधनः । रोषणः । मण्डनः । भूषणः ।

## न यः । १५२ ।

यकारान्ताद्युच् न त० क० । क्नूयिता । क्ष्मायिता । अनुदात्तेत इति प्राप्तः ।

## सूददीपदीक्षश्च । १५३ ।

सूदादिभ्यो युज् न स्यात्त० क० । सूदिता । दीपिता । दीक्षिता । ननु नमिकम्पीति रेणैव युचो बाधे सिद्धे दीपिग्रहणं व्यर्थं 'वासरूपविधिस्तु नास्त्येवे' ति पदग्रहणेन ज्ञापितत्वादिति चेन्न । तस्या अनित्यत्वज्ञापनार्थमिदम् । तेन, कम्रा, कमनेत्यत्र युज्रयोः समावेशः सिद्धो भवति ।

## लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् । १५४ ।

लषादिभ्य उकञ् स्यात् त० क० । अभिलाषुकः । पातुकः ।

पादुकः । स्थायुकः । भावुकः । वर्षुकः । घातुकः । कामुकः । गामुकः । शारुकः ।

## जल्पभिक्षकुट्टलुण्ठवृङः षाकन् । १५५ ।

जल्पादिभ्यः षाकन् स्यात्त० क० । जल्पाकः । जल्पाकी । भिक्षाकः । भिक्षाकी । कुट्टाकः । कुट्टाकी । लुण्ठाकः । लुण्ठाकी । वराकः । वराकी ।

## प्रजोरिनिः । १५६ ।

प्रपूर्वाज्जवतेरिनिः स्यात्त० क० । प्रजवी । प्रजविनौ ।

## जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ॥ १५७ ॥

ज्यादिभ्य इनिः स्यात्त० क० जयी । दरी । क्षयी । विश्रयी । अत्ययी । वमी । अव्ययी । अभ्यमी । परिभवी । प्रसवी ।

## स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् । १५८ ।

स्पृह्यादिभ्य आलुच् स्यात्त० क० । स्पृहयालुः । गृहयालुः । पतयालुः । दयालुः । निद्रालुः । तन्द्रालुः । श्रद्धालुः । ( आलुचि शीङ्ग्रहणम् ) शयालुः । कृपां, स्पर्द्धाञ्च लातीति विग्रहे मृगय्वादित्वात्कौ, कृपालुः । स्पर्द्धालुः ।

## दाधेट्सिशदसदो रुः ॥ १५९ ।

दादिभ्यो रु० स्यात्त० क० । दारुः । धारुः । सेरुः । शद्रुः । सद्रुः ।

## सृघस्यदः क्मरच् । १६० ।

सृआदिभ्यः क्मरच् स्यात्त० क० । घसिः प्रकृत्यन्तरम् सृमरः । घस्मरः । अद्मरः ।

## भञ्जभासमिदो घुरच् । १६१ ।

भञ्जादिभ्यो घुरच् स्यात्त० क० । भङ्गुरम् । भासुरम् । मेदुरम् ।

(१)

## विदिभिदिच्छिदेः कुरच् ।१६२।

विदादिभ्यः कुरच् स्यात्त० क० । विदुरः । भिदुरः । छिदुरः ।

## इण्नशजिसर्तिभ्यः क्वरप् ।१६३।

एभ्यः क्वरप् स्यात्त० क० । इत्वरः । स्त्री चेत् इत्वरी । नश्वरः । जित्वरः । सृत्वरः ।

## गत्वरश्च ।१६४।

गमेरनुनासिकलोपो क्वरप् च निपात्यते, त० क० । गत्वरः ।

## जागरूकः ।१६५।

जागतेरूकः स्यात्त० क० । जागरूकः ।

(२)

## यजजपदशां यङः ।१६६।

यङन्तेभ्यो यजादिभ्य ऊकः स्यात्त० क० । यायजूकः । जञ्जपूकः । दन्दशूकः ।

## नमिकम्पिस्म्यजसकमहिंसदीपो रः ।१६७।

नम्यादिभ्यो रः स्यात्त० क० । नम्रः । कम्प्रः । स्मेरः । जसु मोक्षणे-नञ्पूर्वः क्रियासातत्ये, ततो निपातनात् समासे कृते रः । अजस्रम् । कम्रः । हिंस्रः । दीप्रः ।

(३)

## सनाशंसभिक्ष उः ।१६८।

(१) विदेरेव ग्रहणं व्याख्यानात् ।

(२) दंशेर्भाविना नलोपेन निर्देशो लाघवार्थः ।

(३) सन्प्रत्ययो गृह्यते गर्गादिषु विजिगीषुशब्दस्य पाठात् ।

सन्नन्तादाशंसभिक्षिभ्याश्च उः स्यात्त० क० । चिकीर्षुः । आशंसुः । भिक्षुः ।

## विन्दुरिच्छुः ।१६९।

विद ज्ञाने । इष, इच्छायाम् । विदेर्नुम् इषेश्छत्वमुप्रत्ययश्च निपात्यते त० क० । वेत्ति तच्छीलः, विन्दुः । इच्छति तच्छीलः, इच्छुः ।

## क्याच्छन्दसि ।१७०।

क्यजन्तादुः स्याच्छन्दसि विषये त० क० मित्रमिवाचरति तच्छीलः, मित्रयुः । 'क्यचिचे' तीत्वन्तु न; 'नछन्दस्येति' निषेधात् ।

## आदृगमहनजनः किकिनौ लिट् च ।१७१।

आकारान्तादृवर्णान्ताद् गमादिभ्यश्च किकिनौ स्तस्तौ च लिड्वच्छन्दसि विषये त० क० । पपिः सोमम् । बभ्रिर्वज्रम् । ततुरिः(१) । जग्मिः । ( उत्सर्गश्छन्दसि किकिनौ सदादिभ्यो दर्शनात् ) सेदिः । रेमिः । नेमिश्चक्रमिवाभवत । विविचिं रत्नधातमम् ( भाषायां धाञ् कृञ् सृजनिनमिभ्यः ) दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमिः । ( सासहिवावहिचाचलिपापतीनां निपातनम् ) वृषासहमानं सासहिः । चाचलिः । पापतिः । अपरआह ( सहादिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ ) तान्येवोदाहरणानि ।

## स्वपितृषोर्नजिङ् ।१७२।

स्वपितृषिभ्यां नजिङ् त० क० । स्वप्नक् । तृष्णक् । [२]

## शॄवन्द्योरारुः ।१७३।

शॄवन्दिभ्यामारुः स्यात्त० क० । शरारुः । वन्दारुः ।

---

(१) किकिनोः कित्वं गुणप्रतिषेधविषये प्राप्तस्य गुणस्य प्रतिषेधार्थम् । तेनात्र 'ऋच्छत्यॄतामि' ति गुणो न । (२) धृषेश्चेति काशिका । धृष्णक् ।

## भियः क्रुक्लुकनौ ।१७४।

बिभेतेः क्रुक्लुकनौ त० क० । भीरुः । भीलुकः । (क्रुकन्नपि वक्तव्यः) भीरुकः ।

## स्थेशभासपिसकसो वरच् ।१७५।

स्थादिभ्यो वरच् स्यात्त० क० । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । विकस्वरः ।

## यश्च यङः ।१७६।

यङन्ताद्यातेर्वरच् स्यात्त० क० । यायावरः ।

## भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।१७७।

भ्राजादिभ्यः प् स्यात्त० क० । विभ्राट् । भ्रश्चेतिषत्वम् । भाः । धूः । विद्युत् । ऊर्क् । : । जूः । ग्रावस्तुत् ।

## अन्येभ्योऽपि दृश्यते ।१७८।

अन्येभ्योऽपि धातुभ्यः क्विब् दृश्यते । दृशिग्रहणं विध्यन्तरोपलक्षणार्थम् । तचाह वार्तिककारः (वचिप्रच्छयायतस्तुकटप्रुजुश्रीणां दीर्घश्च [१]) [द्युतिगमिजुहोतीनां द्वे च] [दृणातेर्ह्रस्वश्च] (ध्यायतेः सम्प्रसारणश्च) वक्तीति वाक् । शब्दप्राट् । आयतस्तूः । कटप्रूः । जूः । श्रीः । दिद्युत् । जगत् । जुहूः । ददृत् । ध्यायतीति धीः ।

## भुवः सञ्ज्ञान्तरयोः१७९

भवतेः क्विप् स्यात् सञ्ज्ञान्तरयोर्गम्यमानयोः । मित्रभूर्नामकश्चित्, धनिकाधमर्णयोरन्तरे विश्वासार्थं यस्तिष्ठति, स प्रतिभूः । निवृत्तस्तच्छीलाद्यधिकारः ।

---

(१) दीर्घविधानसामर्थ्यात्संप्रसारणं नेति ।

## विप्रसंभ्यो ड्वसंज्ञायाम् ।१८०।

विप्रसम्पूर्वाद्भवतेर्डुः स्यान्न तु संज्ञायाम् । विभुः सर्वगतः । प्रभुः स्वामी । सम्भुर्जनिता । असंज्ञायांकिम् । विभूर्नाम कश्चित् । (डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्) मितं द्रवतीति मितद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भूः । सुखं भावयतीत्यर्थात् ।

## धः कर्मणि ष्ट्रन् ।१८१।

धयतेर्दधातेश्च कर्मणि ष्ट्रन् स्यात् । धीयते 'पीयते, धार्यते वा' धात्री स्तनदायिनी, आमलकी वा ।

## दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।१८२।

दाबादिभ्यः करणे ष्ट्रन् स्यात् । दात्यनेन, दात्रम् । नेत्रम् । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । अजादित्वात् टाप् । दंशेर्नलोपेन निर्देशो ज्ञापकः क्वचिदक्ङित्यपि नलोपः । तेन ल्युटि दशना ।

## हलसूकरयोःपुवः ।१८३।

पूङ्पूञ्भ्यां करणे ष्ट्रन् स्यात् हलसूकरयोरवयवश्चेत् सः । पोत्रम् । हलस्य सूकरस्य च मुखम् ।

## अर्तिलूधूसूखनसहचर इत्रः ।१८४।

अर्त्यादिभ्यः करणे इत्रः स्यात् । अरित्रम् । लवित्रम् । धवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ।

## पुवः सञ्ज्ञायाम् ।१८५।

पूङ्पूञ्भ्यां करणे इत्रः स्यात् सञ्ज्ञायाम् दर्भः पवित्रम् । येनाज्यमुत्पूयते, तत्पवित्रम् ।

## कर्त्तरि चर्षिदेवतयोः ॥१८६॥

कर्त्तरि करणे च पुव इत्रः स्यात्, ऋषिदेवतयोः । ऋषिर्मन्त्रः । पूयतेऽनेन तत्पवित्रम् । अग्निः पवित्रं स मा पुनातु ।

## ञीतः क्तः ॥१८७॥

वर्तमानार्थवृत्तेर्ञीतो धातोः क्तः स्यात् । विशेषविधानेन ञीतः क्तस्य भूतविषयता बाध्यते । धृष्टः ।

## मतिबुद्धिपूजार्थेभ्यश्च ॥१८८॥

मत्यर्थादिभ्यो वर्तमानार्थवृत्तिभ्यः क्तः स्यात् । मतः । इष्टः । बुद्धः । विदितः । पूजितोऽर्चितः । चकारोऽनुक्तसमुच्चयार्थकः । तथाच भाष्यम् । शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि । रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि । हृष्टतुष्टौ तथा कान्तस्तथोभौ संयतोद्यतौ । कष्टम्भविष्यतीत्याहुरमृता इति पूर्ववत् । रुष, रोषे । रुष्यमत्वरेतीड् विकल्पः । कष्टशब्दो भविष्यत्काले । अमृतास्तु पूर्ववत्, वर्तमान इत्यर्थः । न म्रियन्ते, अमृताः ।

॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥

---

# अथ तृतीयाध्यायस्य तृतीयः पादः ॥

## उणादयो बहुलम् ॥१॥

वर्तमाने संज्ञायामुणादयः प्रत्ययाः बहुलं स्युः । संज्ञासु धातु-

रूपाणि प्रत्याश्च ततः परे। कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु। इति वचनात्केचिदविहिताअप्यूह्याः। ऋफिडः। ऋफिड्डः। ऋधातोः फिड-फिड्डावौणादिकौ प्रत्ययौ। भट्टौ 'देवयजीन्निहन्म' इ त्यत्र यजेरिः।

## भूतेऽपि दृश्यन्ते ॥२॥

उणादयः प्रत्यया भूतेऽपि दृश्यन्ते। वृत्तमिदम् वर्त्म। चरितमिदं चर्म। वृतिचरिभ्यां मनिन्।

## भविष्यति गम्यादयः ॥३॥

गम्यादयो भविष्यति स्युः। गमिष्यतीति, गमी [ भविष्यत्यनद्यतन उपसंख्यानम् ] श्वो ग्रामं गमी।

## यावत्पुरानिपातयोर्लट् ॥४॥

निपातयोर्यावत्पुरोपपदयोर्भविष्यति (१] लट् स्यात्। यावद् भुङ्क्ते। पुरा भुङ्क्ते। निश्चयद्योतकौ निपातावेतौ। निपातयोःकिम्। यावद्दास्यते, तावद्भोक्ष्यते। करणभूतया पुरा यास्यति।

## विभाषा कदाकर्ह्योः ॥५॥

कदाकर्ह्योरुपपदयोर्भविष्यतिं लड् वा स्यात्। कदा, कर्हि, वा भुङ्क्ते भोक्ष्यते, भोक्ता वा।

## किंवृत्ते लिप्सायाम् ॥६॥

किंवृत्ते उपपदे भविष्यति लड् वा स्याल्लिप्सायां गम्यमानायाम्। कं, कनरं भोजयसि। भोजयिष्यति। भोजयितासि वा। लिप्स्यायांकिम्। कः पाटलि पुत्रं गमिष्यति।

---

(१) भाष्यमधिकाराद् भविष्यत्येव यावत्पुराशब्द योगे लटः साधुत्वं, तदभावे तु भूतेपि लटः साधुत्वं स्यात्।

## लिप्स्यमानसिद्धौ च ॥७॥

लिप्स्यमानेन सिद्धौ गम्यमानायां भविष्यति लड् वा स्यात्। योऽन्नं ददाति। दास्यति। दाता वा; सः स्वर्गं गच्छति, गमिष्यति, गन्ता वा।

## लोडर्थलक्षणे च ।८।

लोडर्थो लक्ष्यते येन तस्मिन्नर्थे वर्तमानाद्धातोर्भविष्यति लड् वा स्यात्। दत्तश्चेद् गुरुः, त्वं पुस्तकमानय। पक्षे, लुट्लृटौ।

## लिङ् चोर्ध्वमौहूर्तिके ।९।

ऊर्ध्वमौहूर्तिके लोडर्थलक्षणे वर्तमानाद् धातोर्भविष्यति लिङ् स्याच्चाल्लड् वा मुहूर्तादुपरि उपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति, आगन्ता वा। अथ त्वं छन्दोऽधीष्व।

## तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।१०।

क्रियार्थायां क्रियायामुपपदे भविष्यति धातोस्तुमुन्ण्वुलौ स्तः। गुरुं द्रष्टुं(१) याति। गुरुं दर्शको याति। क्रियार्थायां क्रियायामुपपदे वासरूपविधिना तृजादयो न, ण्वुल्ग्रहणाज्ज्ञापकात्। तेन कर्ता व्रजतीत्यादि न।

## भाववचनाश्च ।११।

क्रियार्थायां क्रियायामुपपदे भविष्यति भाववचनाः (२) प्रत्ययाः स्युः। यागाय याति।

---

(१) मान्तत्वादव्ययत्वम् 'अव्ययकृतोभाव' इति वचनाद् भावेतुमन कर्त्तरि कृदिति कर्त्तरि-ण्वुल्।

(२) भावइत्यधिकृत्य वक्ष्यमाणाः प्रत्ययाः।

## अण् कर्मणि ॥१२॥

क्रियार्थायां क्रियायां भविष्यति कर्मण्युपपदे धातोरण् स्यात् । काण्डलावो व्रजति । परत्वात्कादीन् बाधते । कम्बलदायो व्रजति ।

## लृट् शेषे च ।१३।

क्रियार्थायां क्रियायां सत्यामसत्याञ्च भविष्यदर्थाद् धातोर्लृट् स्यात् । भोक्ष्यते, इति व्रजति । पठिष्यति ।

## लृटः सद्वा ।१४।

लृटः स्थाने सत्संज्ञकौ वा स्तः । ( सद्विधि त्वप्रथमासमानाधिकरणे (१) ) पक्ष्यन्तं, पक्ष्यमाणं पश्य । क्व तर्हि विभाषा । प्रथमासमानाधिकरणे । पक्ष्यन् । पक्ष्यति । पक्ष्यमाणः । पक्ष्यते ।

(२)

## अनद्यतने लुट् ।१५।

अनद्यतनभविष्यदर्थे धातोर्लुट् स्यात् । श्वः कर्ता । श्वोऽध्येता अत्र योगो विभज्यते । अनद्यतने (३) लृटः सत्संज्ञौ स्तः । श्वोऽग्नीनाधास्यमानेन । ( परिदेवने श्वस्तनोभविष्यन्त्यर्थे (४) ) इयन्तु कदा गन्ता, यैवं पाद निदधाति । अयन्तु कदाऽध्येता य एवमनभियुक्तः ।

## पदरुजविशस्पृशो घञ् ।१६।

---

(१) उपलक्षणमेतत् सूत्रोपात्तानामर्थानामिति सम्बोधनं, लक्षणं, हेतुश्च क्रियायाः गृहीते इति कैय्यटः ।

(२) अनद्यतनइतिबहुव्रीहिनिर्देशस्तेन व्यामिश्रे न; अद्य श्वो वा गमिष्यति ।

(३) अतएववचनादनद्यतने भविष्यति लृट् ।

(४) भविष्यन्ती इति लृटः संज्ञा, पूर्वाचार्याणाम् ।

पदादिभ्यो घञ् स्यात् । पद्यतेऽसौ पादः । रुजतीति रोगः । वेशः । 'स्पृश उपतापे' । स्पर्शो नाम व्याधिविशेषः । उपतापे किम् । कम्बलस्पर्शः ।

(१)
## सृ स्थिरे । १७ ।

सर्तेर्घञ् स्यात् स्थिरे कर्तरि । चन्दनसारः ( व्याधिमत्स्यबलेष्विति वक्तव्यम् ) । अस्थिरार्थमिदम् । अतीसारो व्याधिः । विसारो मत्स्यः । सारो बलम् ।

## भावे । १८ ।

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । पाकः । रागः ।

(२)
## अकर्तरि च कारके संज्ञायाम् । १९ ।

कर्तृभिन्ने कारके संज्ञायां घञ् स्यात् । रागः । रज्यत्यस्मिन्निति रङ्गः । प्रास्यते इति प्रासः । ग्रस्यते, इतिग्रासः । संज्ञायामिति प्रायिकम् । तेन, को भवता लाभो लब्ध इति । इत उत्तरं 'भावेऽकर्तरि च कारके' इति 'कृत्यल्युटो बहुल' मितियावदनुवर्तते ।

## परिमाणाख्यायां सर्वेभ्यः । २० ।

परिमाणाख्यायां गम्यमानायां सर्वेभ्यो धातुभ्यो घञ् स्यात्, भावेऽकर्तरि च कारके । एकस्तण्डुलनिचायः । द्वौ शूर्पनिष्पावौ । द्वौ कारौ । ( दारजारौ कर्तरि णिलुक् च ) दारयन्तीति दाराः । जारयन्तीति जाराः । करणे वा ' दीर्यन्ते तैर्दाराः ।

---

( १ ) कालान्तरस्य प्रापकोऽर्थ उच्यते स चिरन्तिष्ठन्कालान्तरं सरतीति धात्वर्थस्य कर्त्ता युज्यते ।

( २ ) अकर्तरीति पर्युदासेनैव कारके लब्धे पुनः कारकग्रहणं प्रसज्यप्रतिषेधे समासस्य ज्ञापकम् । तेन ' आदेच उपदेशेऽशिती, त्यत्रानुत्पन्ने प्रत्ययएवात्वमिति ।

## इङश्च । २१ ।

इङो घञ् स्यादभावे अ० । उपेत्य, अस्मादधीयते, उपाध्यायः । ( अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् ) उपाध्यायी । उपाध्याया । ( शवायुवर्णनिवृतेषु ( १ ) । शारो वायुः । शारो वर्णः । गौरिवाकृतनीशारः ( २ ) प्रायेण शिशिरे कृशः । अकृतावरण इत्यर्थः ।

## उपसर्गे रुवः । २२ ।

उपसर्गे रुवो घञ् स्याद् भावे अ० । संरावः । उपसर्गे किम् । रवः ।

## समि युद्रुदुवः । २३ ।

संपूर्वेभ्य एभ्यो घञ् स्यात, भा० अ० । संयूयते ' मिश्रीक्रियते, गुडादिभिः संयावः । संद्रावः । संदावः ।

## श्रिणीभुवोऽनुपसर्गे । २४ ।

अनुपसर्गेभ्यः श्रिणीभूभ्यो घञ स्याद् भा० अ० । श्रायः । नायः । भावः । अनुपसर्गे किम् । प्रश्रयः । प्रभवः (३) ।

## वौ क्षुश्रुवः । २५ ।

वौ क्षुश्रुभ्यां घञ् भा० अ० । विक्षावः । विश्रावः । वौ किम् । क्षवः । श्रवः ।

## अवोदोर्नियः । २६ ।

अवोदोर्नयतेर्घञ् भावे अ० । अवनायः, अधोनयनम् । उन्नायः, ऊर्ध्वनयनम् । उन्नय उत्प्रेक्षेति तु बाहुलकात् ।

---

( १ ) निव्रियते, आव्रियतेऽनेनेति निवृतमावरणम् । बाहुलकात्करणे क्तः ।
( २ ) 'उपसर्गस्ये' ति दीर्घः ।
( ३ ) केवलाद्भवतेर्घञि प्रादिसमासे 'प्रभावः' इत्यपि । राज्ञो नय इति तु बाहुलकात् ।

## प्रेद्रुस्तुस्रुवः ।२७।

प्रपूर्वेभ्यो द्र्वादिभ्यो घञ् भा० अ० । प्रद्रावः । प्रस्तावः । प्रस्रावः । प्रेकिम् । द्रवः । स्तवः । स्रवः ।

## निरभ्योः पूल्वोः ॥ २८ ॥

निरभ्योः पूलूभ्यां घञ् भा० अ० । निष्पूयते, निष्पावः । अभिलावः । निरभ्योःकिम् । पवः । लवः ।

## उन्न्योर्ग्रः । २९ ।

उन्नयोर्गिरतेर्घञ् भा० अ० । उद्गारः । निगारः । उन्नयोः किम् ? गरः ।

## (१) कं धान्ये ॥ ३० ॥

धान्यविषयादुन्योः किरतेर्घञ् भा० अ० । उत्कारो, निकारो-वा धन्यस्य । विक्षेपइत्यर्थः । धान्येकिम् । पुष्पनिकरः ।

## यज्ञे समि स्तुवः । ३१ ।

यज्ञविषयात्सम्पूर्वात्स्तौतेर्घञ् भा० अ० । समेत्य स्तुवन्ति यस्मिन्देशे छन्दोगाः स देशः संस्तावः । यज्ञेकिम् । संस्तवः । परिचयइत्यर्थः ।

## प्रेस्त्रोऽयज्ञे ॥ ३२ ॥

अयज्ञविषयात्प्रपूर्वात्स्तृणातेर्घञ् भा० अ० प्रस्तारः । अयज्ञेकिम् ? बर्हिषः प्रस्तरः । मुष्टिविशेषः ।

## प्रथने वावशब्दे ॥ ३३ ॥

(१) लुप्तपञ्चमीकं पदम् । विक्षेपार्थस्य ग्रहणं न तु हिंसार्थस्यानभिधानात् ।

अशब्दे प्रथने वर्तमानाद्विपूर्वात्स्तृणातेर्घञ् भा० अ० । पटस्य विस्तारः । प्रथनेकिम् । तृणविस्तरः । अशब्देकिम् ? ग्रन्थविस्तरः ।

## छन्दोनाम्नि च । ३४ ।

छन्दोनाम्न्यभिधेये विपूर्वात्स्तृणातेर्घञ् भा० अ० । विष्टारपङ्क्तिश्छन्दः (१) । विस्तीर्यन्तेऽस्मिन्नित्यधिकरणे घञ् । ततः कर्मधारयः ।

## उदि ग्रहः । ३५ ।

उदि ग्रहेर्घञ् भा० अ० उद्ग्राहः ।

## समि मुष्टौ । ३६ ।

मुष्टिविषयकार्थवृत्तेर्ग्रहेः सम्युपपदे घञ् भा० अ० । मल्लस्य संग्राहः । मुष्टौकिम् । संग्रहो धान्यस्य । ( उद्ग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोरर्थयोः) उद्ग्राभञ्च निग्राभञ्च ब्रह्मदेवा अवीवृधन् ।

(२)

## परिन्योर्नीणोर्द्यूताभ्रेषयोः । ३७ ।

द्यूताभ्रेषविषयकार्थाभ्यां परिनिपूर्वाभ्यामाभ्यां घञ् भा० अ० । परिणायेन शारान् हन्ति । समन्तान्नयनेनेत्यर्थः । एषोऽत्र न्यायः । उचितमित्यर्थ । अनयोः किम् । परिणयो विवाहः । न्ययो नाशः ।

## परावनुपात्यय इणः ॥ ३९ ॥

अनुपात्यये परौ इणो घञ् भा० अ० । क्रमप्राप्तस्यानतिपातो

---

( १ ) 'छन्दोनाम्निचे' तिषत्वम् ।

( २ ) अक्षादिभिः क्रीडनं द्यूतम् । पदार्थानामनपचारो यथाप्राप्तस्य करणमभ्रेषः ।

ऽनुपात्ययः । तव पर्यायः । अनुपात्यये किम् ? । कालस्य पर्ययः । अतिपात-इत्यर्थः ।

## व्युपयोः शेतेः पर्याये ।३९।

पर्याये व्युपयोः शेतेर्घञ् भा० अ० । तव विशायः । तव राजोपशायः (१) । राजसमीपशयनस्य पर्यायइत्यर्थः । पर्यायेकिम् । विशयः । संशयः । उपशायः, समीपशयनम् ।

## हस्तादाने चेरस्तेये ।४०।

स्तेयभिन्ने हस्तादाने चिनोतेर्घञ् भा० अ० । पुष्पप्रचायः । हस्तादानेकिम् । वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयङ्करोति । अस्तेये किम् ? पुष्पप्रचयश्चौर्येण ।

## निवासचितिशरीरोपसमाधानेष्वादेश्च ।४१।

निवासादिषु चिनोतेर्घञ् आदेश्च कः भा० अ० । काशीनिकायः । आकायमग्निं चिन्वीत । चीयतेऽस्मिन्नस्थ्यादिकमिति कायः । गोमयनिकायः । एषुकिम् । चयः । 'चः कः' इत्येव सिद्धे, आदेरित्युक्तिर्यङ्लुक्यादेरेव यथा स्यात् । गोमयानां निकेचायः ।

## संघे चानौत्तराधर्ये (२) ।४२।

अनौत्तराधर्ये संघे चिनोतेर्घञ् आदेश्च कः भा० अ० । वैय्याकरणनिकायः । अनौत्तराधर्ये किम् । सूकरनिचयः (३) संघस्य प्राणिविषयत्वादिह न-कृताकृतसमुच्चयः ।

---

(१) यामिकभटानां परिचयेन शयने । उपशायशब्दः ।

(२) प्राणिनां समुदायः संघः । स च पृथक् पृथगवस्थित्या, औत्तराधर्येण वा भवति ।

(३) स्नानपानार्थमुत्तराधरभावेन सूकराः शेरते ।

(१)

## कर्मव्यतिहारे णच् स्त्रियाम् ॥४३॥

कर्मव्यतिहारे धातोः स्त्रीलिङ्गे णच् भा० अ० । व्याक्रोशी । व्यावहासी । स्त्रियांकिम् । व्यतिपाको वर्तते ।

(२)

## अभिविधौ भाव इनुण् ॥४४॥

अभिविधो गम्ये धातोर्भाव इनुण् स्यात् । सांराविणं (३) वर्तते । भावग्रहणं क्तादिनिवृत्त्यर्थं, वासरूपविधिनिरासार्थञ्च । ल्युटोबाधनं नेष्यते। संकूटनं वर्तते । अभिविधौ किम् । संरावः ।

## आक्रोशेऽवन्योर्ग्रहः ॥४५॥

आक्रोशे गम्येऽवन्योर्ग्रहेर्घञ् भावे अ० । अवग्राहो (४) निग्राहो (५) वा ते भूयात् । आक्रोशे किम् । अवग्रहः पदस्य । छेदविशेषइत्यर्थः । निग्रहश्चौरस्य । निरोध इत्यर्थः ।

## प्रे लिप्सायाम् ॥४६॥

प्रे ग्रहेर्घञ् लिप्सायां गम्यमानायाम् । स्रुवप्रग्राहेण चरति द्विजो दक्षिणार्थी । लिप्सायां किम् । प्रग्रहो देवदत्तस्य । प्रकृष्टोऽभिनिवेश इत्यर्थः ।

## परौ यज्ञे ॥४७॥

---

(१) क्रियायाः परस्परकरणम् ।
(२) गुणक्रियाभ्यां कार्त्स्न्येन सम्बन्धोऽभिविधिः ।
(३) समन्तात्छब्द इत्यर्थः ।
(४) अभिभवः । (५) बाधः ।

यज्ञविषये परौ ग्रहेर्घञ् । उत्तरः परिग्राहः । स्फ्येन वेदेः स्वीकरणम् । यज्ञे किम् । परिग्रहो देवदत्तस्य ।

## नौ वृ धान्ये ।४८।

नौ वृणोतेर्घञ् धान्ये । नीवाराः । व्रीहयः । धान्ये किम् । निवरा कन्या । स्त्रियां विषयेऽपि बाहुलकादप् ।

## उदि श्रयतियौतिपूद्रुवः ।४९।

उत्पूर्वेभ्यः श्रयत्यादिभ्यो घञ् भा० अ० । उच्छ्रायः । उद्यावः । उत्पावः । उद्द्रावः । पतनान्ताः समुच्छ्रया इति तु बाहुलकात् ।

## विभाषाऽऽङि रुप्लुवोः ।५०।

आङि रुप्लुभ्यां वा घञ् भा० । आरावः । आरवः । आप्लावः । आप्लवः ।

## अवे ग्रहो वर्षप्रतिबन्धे ।५१।

अवे ग्रहेर्वा घञ् वर्षप्रतिबन्धे गम्ये । अवग्राहो, अवग्रहो, वा देवस्य । वर्षप्रतिबन्धे किम् । अवग्रहः पदस्य ।

## प्रे वणिजाम् ।५२।

प्रे ग्रहेर्घञ्, वणिक्सम्बन्धी चेत्प्रत्ययार्थः । तुलाप्रग्राहेण, तुलाप्रग्रहेण वा चरति ।

## रश्मौ च ।५३।

प्रे ग्रहेर्वा घञ् रश्मावभिधेये । प्रग्रहः । प्रग्राहः ।

## वृणोतेराच्छादने ।५४।

आच्छादने प्रे वृणोतेर्वा घञ् । प्रावारः (१) । प्रवरः । आच्छादने किम् ? प्रवरा गौः ।

---

(१) उपसर्गस्य घञीति दीर्घः ।

## परौ भुवोऽवज्ञाने ।५५।

अवज्ञाने परौ भुवो वा घञ् । परिभावः । परिभवः । तिरस्कार इत्यर्थः । अवज्ञाने किम् । सर्वतो भवनं, परिभवः ।

## एरच् ।५६।

इवर्णान्ताद् धातोरच् भा० अ० । चयः । जयः । अयः (भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्) भयम् । वर्षम् । ( कल्पादिभ्यः प्रतिषेधः ) कल्पः । अर्थः । मन्त्रः । ( जवसवौ छन्दसि ) ऊर्वोरस्तु मे जवः । अयं मे पञ्चौदनः सवः ।

## ऋदोरप् ।५७।

ऋवर्णान्तादुवर्णान्ताच्च धातोरप् भा० अ० । करः । गरः यवः । लवः ।

## ग्रहवृदृनिश्चिगमश्च ।५८।

ग्रहादिभ्योऽप् स्यात् । घञोऽपवादः । ग्रहः वरः । दरः । निश्चयः । गमः । (वशिरण्योश्चोपसंख्यानम्) सवसं सैन्धवम् । धनञ्जयं रणेरणे । ( घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ) प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थः । प्रस्थे हिमवतः । शृङ्गे । प्रस्नान्ति अस्मिन्निति प्रस्नः । प्रपिबन्त्यस्यामिति प्रपा । आविध्यन्ति तेनाविधः । विघ्नन्ति तस्मिन् मनांसि विघ्नः । आयुध्यन्तेऽनेनायुधम् ।

## उपसर्गेऽदः ।५९।

उपसर्गेऽदेरप् भा० अ० । प्रघसः । विघसः । घञपोश्चेति घस्लृ । उपसर्गे किम् । घासः ।

## नौ ण च ।६०।

नौ अदेर्णश्चादप् भा० अ० न्यादः । निघसः ।

## व्यधजपोरनुपसर्गे । ६१ ।

अनुपसर्गाभ्यां व्यधिजपिभ्यामप् भा० अ० । व्यधः । जपः । अनुपसर्गेकिम् । आव्याधः । उपजापः ।

## स्वनहसोर्वा । ६२ ।

अनुपसर्गाभ्यां स्वनिहसिभ्यां वाऽप् स्याद् भा० अ० । स्वनः । स्वानः । हसः । हासः । अनुपसर्गे किम् । प्रस्वानः । प्रहासः ।

## यमः समुपनिविषु च । ६३ ।

समादिष्वनुपसर्गे च यमरेप् वा भा० अ० । संयमः । संयामः उपयमः । उपयामः । नियमः । नियामः । वियमः । वियामः । यामः । यमः ।

## नौ गदनदपठस्वनः । ६४ ।

नौ गदादिभ्योऽप् वा भा० अ० । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः । निस्वनः । निस्वानः ।

## क्वणो वीणायाञ्च । ६५ ।

नावनुपसर्गे च वीणाविषयात् क्वणतेरप् वा भा० अ० निक्वणः । निक्वाणः । क्वणः । क्वाणः । वीणाग्रहणं सोपसर्गार्थम् । प्रक्वणः । प्रक्वाणः ।

## नित्यं पणः परिमाणे । ६६ ।

पणेर्नित्यमप् स्यात्परिमाणे भा० अ० शाकपणः । (१) मूलकपणः । परिमाणेकिम् ? पाणः ।

## मदोऽनुपसर्गे । ६७ ।

(१) व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः ।

अनुपसर्गे मदेरप् स्याद् भा० अ० । धनमदः । उपसर्गे तु, उन्मादः ।

## प्रमदसम्मदौ हर्षे ।६८।

प्रसम्पूर्वाच्च मदेरप् निपात्यते हर्षेऽभिधेये । प्रमदः, सम्मदो वा हर्षः । हर्षेकिम् । प्रमादः । उन्मादः ।

## समुदोरजः पशुषु ।६९।

समुद्भ्यामजोऽप् स्यात्पशुविषये प्रयोगे । समजः पशूनाम् । संघ इत्यर्थः । उदजः पशूनाम् । प्रेरणमित्यर्थः । पशुषुकिम् ? समाजोविदुषाम् । उदाजः क्षत्रियाणाम् ।

## अक्षेषु ग्लहः ।७०।

देवने यत्पणरूपेण ग्राह्यन्तत्र ग्रहेरप् लत्वश्च निपात्यते । अक्षस्य ग्लहः । अक्षेषु किम् । पादस्य ग्रहः ।

## प्रजने सर्तेः ।७१।

प्रजनविषयात्सर्तेरप् । गवामुपसरः । अवसर इत्यादावधिकरणे 'पुंसि संज्ञाया' मिति घः ।

## ह्वः सम्प्रसारणं च न्यभ्युपविषु ।७२।

न्यभ्युपविषु ह्वयतेरप् स्यात्सम्प्रसारणञ्च भा० अ० निहवः । अभिहवः । उपहवः । विहवः । न्यादिषुकिम् । प्रह्वायः ।

## आङि युद्धे ।७३।

आङ् पूर्वात् ह्वयतेरप् सम्पसारणञ्च युद्धेऽभिधेये । आहूयन्तेऽस्मिन्नित्याहवो युद्धम् । युद्धे किम् । आह्वायः ।

## निपानमाहावः ।७४।

आङ्पूर्वात् ह्वयतेरप्सम्प्रसारणं वृद्धिश्च निपात्यते निपानश्चेत्। आहवः निपानम् (१)।

## भावेऽनुपसर्गस्य। ७५।

अनुपसर्गस्य ह्वयतेः सम्प्रसारणमप् च भावे। हवः।

## हनश्च वधः। ७६।

अनुपसर्गाद्धन्तेरप् वधश्चादेशोऽन्तोदात्तो भावे, चाद् घञ्। वधः। घातः।

## मूर्तौ घनः। ७७।

हन्तेरप् स्याद् घनश्चादेशः काठिन्येऽभिधेये। दधिघनः। घनं दधीत्यादौ तु धर्मशब्देन धर्मी लक्ष्यते।

## अन्तर्घनो देशे॥ ७८॥

अन्तरुपपदे हन्तेरप् घनश्चादेशो देशेऽभिधेये। अन्तर्घनो वाहीकेषु ग्रामविशेषः। अन्तर्घणइतिकेचित्।

## अगारैकदेशे प्रघणः प्रघाणश्च। ७९।

एतौ निपात्येते बाह्ये प्रकोष्ठे। प्रघणः (२) प्रघाणः। प्रघणालिन्दौ बहिर्द्वारप्रकोष्ठके इतिकोषः।

## उद् घनोऽत्याधानम्॥ ८०॥

उत्पूर्वाद्धन्तेरच् घनादेशश्च निपात्यते, अत्याधानञ्चेत्। यस्मिन् काष्ठे अन्यानि काष्ठानि स्थापयित्वा तक्षयन्ते, तदुद्घनः।

---

(१) निपिबन्त्यस्मिन्निति निपानम्। कूपसमीपे जलाधारइत्यर्थः।

(२) प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते इति कर्मण्यप्, घनस्य नस्य णत्वं, पक्षे वृद्धिश्च।

## अपघनोऽङ्गम् ॥ ८१ ॥

अपघन इति निपात्यते अंगश्चेत्। अपहन्यतेऽनेनेति करणे अप्। अपघनः। पाणिः पादश्च। अपघातोऽन्यः।

## करणेऽयोविद्रुषु ॥ ८२ ॥

अयोविद्रुषु हन्तेः करणेऽप्, घनादेशश्च। अयो हन्यतेऽनेनेतिअयोघनः। विघनः। द्रुघणः। कुठारस्य संज्ञैषा। 'पूर्वपदादि' तिणत्वम्।

## स्तम्बे क च ॥८३॥

स्तम्बे हन्तेः करणे कश्चादप्, घनश्च। स्तम्बघ्नः। स्तम्बहनः। करणे· किम्। स्तम्बघातः।

## परौ घः ॥८४॥

परौ हन्तेः करणे अप् स्यात् घश्चादेशः। परिहन्यतेऽनेनेतिपरिघः। परेश्चे'ति लत्वे पलिघः।

## उपघ्न आश्रये ॥८५॥

उपपूर्वाद्धन्तेरप्, उपधालोपश्च निपात्यते आश्रये। पर्वतेनोपहन्यते, पर्वतोपघ्नः।

## संघोद्घौ गणप्रशंसयोः ॥८६॥

सम्पूर्वादुत्पूर्वाच्च हन्तेरप्, घश्चादेशो निपात्यते गणप्रशंसयोरभिधेययोः। संघः पशूनाम्। उद्घश्छात्रः। प्रशंसनीय इत्यर्थः। एतयोः किम्। संघातः। उद्घातः।

## निघो निमितम् ॥८७॥

निपूर्वाद्धन्तेरप्, घश्चादेशो निपात्यते। निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघाः वृक्षाः।

## ड्वितः क्त्रिः । ८८ ।

ड्वितो धातोः क्त्रिः स्याद्, भावे स्वभावात् । उप्त्रिमम् (१) ।

## ट्वितोऽथुच् । ८९ ।

ट्वितो धातोऽथुच् स्याद्भावे । वेपथुः ।

## यजयाचयतविच्छप्रच्छरक्षो नङ् । ९० ।

यजादिभ्यो नङ् भा० । यज्ञः याञ्चा । यत्नः । विश्नः । ङित्वाद्गुणो न । प्रश्नः । रक्ष्णः । 'प्रश्ने चासन्नकाल' इतिज्ञापकान्न सम्प्रसारणम् ।

## स्वपो नन् ॥ ९१ ॥

स्वपो नन् स्यात् । स्वप्नः ।

## उपसर्गे घोः किः ॥ ९२ ॥

उपसर्गे घुसंज्ञकात्किः स्याद् भा० अ० । प्रदिः । प्रधि । अन्तर्धानमन्तर्द्धिः ।

## कर्मण्यधिकरणे च ॥ ९३ ॥

कर्मण्युपपदे घुसंज्ञकादधिकरणे किः । जलानि धीयन्तेऽस्मिन्निति जलधिः ।

## स्त्रियां क्तिन् ॥ ९४ ॥

स्त्रियां भावादौ क्तिन् स्यात् । पचनं पक्तिः । भजनं भक्तिः । आप्प्रकारा (स्त्रियां क्तिन्नाबादिभ्यः) आप्तिः । राद्धिः । दीप्तिः । आप्प्रकारा आबादयः । तेन, स्रस्तिः । ध्वस्तिः ।

## स्थागापापचो भावे ॥ ९५ ।

(१) क्त्रेर्मम्नित्यमिति मप् ।

स्थादिभ्यः क्तिन् भावे । प्रस्थितिः । उद्गीतिः । प्रपीतिः । पक्तिः । पुरस्तादपवादन्यायेनायमङं बाधते, न तु णमुलिञौ । तेन, कां त्वं स्थायिकां, कां त्वं स्थायिमिति सिद्धम् । ( श्रुयजीषिस्तुभ्यः करणे ) श्रूयतेऽनयेति श्रुतिः । इष्टिः । स्तुतिः ( ग्लाम्लाज्याहाभ्यो निः ) ग्लानिः । म्लानिः । ज्यानिः । हानिः ।

## मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः । ९६ ।

वृषादिभ्यो मन्त्रविषये क्तिन् स्यात् स चोदात्तः । वृष्टिं दिवः । सुम्नमिष्टये । पक्तिः । इयन्ते नव्यसी मतिः । वित्तिः । भूतिः । अग्न आयाहि वीतये । रातौ स्यामोभयासः ।

## ऊतियूतिजूतिसातिहेतिकीर्तयश्च । ९७ ।

ऊत्यादयो निपात्यन्ते । अवज्वरयोः क्तिनिरूठ उदात्तत्वार्थं वचनम् । ऊतिः । यूतिः । दीर्घत्वञ्च । जूतिः । सातिः । इत्वाभावः । सनोतेर्वा आत्वे स्वरार्थं वचनम् । हन्तेर्हिनोतेर्वा हेतिः । कीर्त्तिः ।

## व्रजयजोर्भावे क्यप् । ९८ ।

व्रजयजिभ्यां भावे क्यप् । व्रज्या । इज्या ।

## सञ्ज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः । ९९ ।

समजादिभ्यः स्त्रियां भावादौ क्यप् स चोदात्तः सञ्ज्ञायाम् । समजन्त्यस्यामिति समज्या (१) सभा । निषीदन्त्यस्यामिति निषद्या, आपणः । निपतन्त्यस्यामिति निपत्या । पिच्छिला भूमिः । मन्यतेऽनयेति मन्या, गलपार्श्वशिरा विदन्त्यनया विद्या । सुत्या । अभिषवः । शय्या । भृत्या । ईयतेऽनया, इत्या शिविका ।

## कृञः श च । १००

(१) ( अजेः क्यपि वीभावो नेति वाच्यम् )

करोतेः शः, चात् क्यप्। क्रिया। कृत्या। ( कृञः श चेति वा वचनम् ) तेन कृतिरित्यपि।

## इच्छा। १०१।

इषेर्भावे शो यगभावश्च निपात्यते। इच्छा। ( परिचर्यापरिसर्या मृगयाऽटाट्यानामुपसंख्यानम् ) परेश्चरेः सर्तेश्च, शो यक् च निपात्यते। परिचर्या, पूजा। परिसरणं, परिसर्या। मृगयतेः शे यकि णिलोपोऽतोलोपाभावश्च निपात्यते। अटतेः शे यकि टयशब्दस्य द्वित्वं यकारनिवृत्तिश्च। अटाट्या। ( जागर्तेरकारो वा ) जागरा। जागर्या।

## अ प्रत्ययात्। १०२।

प्रत्ययान्ताद्धातो, स्त्रियामः स्यात्। चिकीर्षा। पुत्रकाम्या।

## गुरोश्च हलः। १०३।

हलन्ताद् गुरुमतो धातोः स्त्रियामः प्रत्ययः स्यात्। ऊहा। कुण्डा। गुरोःकिम्। भक्तिः। हलः किम्। नीतिः।

## षिद्भिदादिभ्योऽङ्। १०४।

षिद्भ्यो भिदादिभ्यश्च स्त्रियां भावेऽङ्। जरा। 'ऋदृशोऽङी'-तिगुणः। भिदा। ( भिदा विदारण इति वक्तव्यम् ) भित्तिरन्या। ( छिदा द्वैधीकरणइतिवक्तव्यम ) छित्तिरन्या। ( आरा शस्त्रयामिति-वक्तव्यम् ) आर्तिरन्या। ( धारा प्रपात इति वक्तव्यम्) धृतिरन्या। (गुहा गिर्योषध्योरिति वक्तव्यम् ) गूढिरन्या। (क्रपेःसंप्रसारणञ्च) कृपा।

## चिन्तिपूजिकथिकुम्बिचर्चश्च। १०५।

चिन्तादिभ्योऽङ् स्याद् भावादौ युचोऽपवादः। चिन्ता। पूजा। कथा। कुम्बा। चर्चा।

## आतश्चोपसर्गे । १०६ ।

उपसर्ग उपपदे आकारान्ताद्धातोरङ् स्यात् । प्रदा । प्रधा । अद-न्तरोरुपसर्गवद्वृत्तित्वात्, श्रद्धा । अन्तर्द्धा ।

## ण्यासश्रन्थो युच् । १०७ ।

ण्यन्तादासश्रन्थिभ्याञ्च युच् स्याद्भावादौ । कारणा । हारणा । आसना । श्रन्थना ( युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम् ) घट्टना । वन्दना । वेदना । ( इषेरनिच्छार्थस्य ) अन्वेषणा । ( परेर्वा ) अन्यां पर्येषणां चर, परीष्टिं वा ।

## रोगाख्यायां ण्वुल्बहुलम् । १०८ ।

रोगाख्यायां गम्यमानायां धातोर्ण्वुल् बहुलं स्यात् । प्रच्छर्दिका । प्रचर्चिका । बहुलग्रहणान्नेह-शिरोऽर्तिः । ( धात्वर्थनिर्देशे ण्वुल् ) का नामासिका अन्येष्वीहमानेषु । का नाम शायिका अन्येष्वधीयानेषु । ( इक्श्तिपौ धातुनिर्देशे ) पचेर्ब्रूहि । पचतेर्ब्रूहि । वर्णात्कारः ) अकारः ( रादिफः ) रेफः । ( इञ् वपादिभ्यः ) वापिः । वासिः । वादिः । ( मत्वर्थाच्छः ) मत्वर्थीयः । इणजादिभ्यः ) आजिः । आतिः । आदिः । ( इक् कृष्यादिभ्यः ) कृषिः ( संपदादिभ्यः क्विप् ) संपत् । विपत् । प्रतिपत् । आपत् । परिषद् ।

## सञ्ज्ञायाम् । १०९ ।

सञ्ज्ञायां धातोर्ण्वुल् स्यात् । उद्दालकपुष्पभञ्जिका ।

## विभाषाख्यानपरिप्रश्नयोरिञ् च । ११० ।

आख्यानपरिप्रश्नयोर्गम्ययोर्धातोरिञ् चाण्ण्वुल् स्यात् । विभाषोक्तेर्यथाप्राप्तमन्येऽपि । कां त्वं कारिं, कारिकां, क्रियां, कृत्यं, कृत्यां, कृतिं वा, अकार्षीः । सर्वां कारिं, कारिकां, क्रियां, कृत्यं, कृत्यां, कृतिं वाऽकार्षम् ।

## पर्यायार्हर्णोत्पत्तिषु ण्वुच् ।१११।

पर्यायादिषु द्योत्येषु धातोर्ण्वुच् वा स्यात् । भवतः शायिका । भवान् मोदकभक्षिकामर्हति । पयःपायिकां मे धारयसि । इक्षुभक्षिका मे उदपादि ।

## आक्रोशे नञ्यनिः ।११२।

आक्रोशे गम्ये नञ्युपपदे धातोरनिः स्यात् । अजीवनिस्ते भूयात् ।

## कृत्यल्युटो बहुलम् ।११३।

कृत्यसंज्ञका ल्युट् च धातोर्बहुलं स्युः । स्नान्त्यनेन, स्नानीयम् । दीयतेऽस्मै दानीयः । राज्ञा भुज्यन्ते, राजभोजिनः । ( कृतोबहुलमिति वक्तव्यम् (१) पादहारकाद्यर्थम् ) पादाभ्यां ह्रियते, पादहारकः । गले चोप्यते, गलेचोपकः ।

## नपुंसके भावे क्तः ।११४।

नपुंसके भावे क्तः स्यात् । हसितम् ।

## ल्युट् च ।११५।

नपुंसके भावे ल्युट् । योगविभाग उत्तरार्थः । हसनम् ।

## कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ।११६।

येन संस्पर्शात्कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे धातोर्ल्युट् । उपपदसमासार्थं वचनम् । पयः पानं सुखम् । कर्तुः किम् । गुरोः स्नापनं सुखम् । गुरुरत्र कर्म ।

## करणाधिकरणयोश्च ।११७।

(१) कृत्यग्रहणमपनीय व्यापकत्वात् कृद्ग्रहणम् । तस्मिन् सति ल्युड्ग्रहणन्न कार्यम, तस्यापि कृत्त्वात् ।

करणाधिकरणयोर्ल्युट् स्यात् । इध्मप्रव्रश्चनः । गोदोहनी स्थाली । करणाधिकरणयोरिति खलः प्रागधिक्रियते ।

## पुंसि सञ्ज्ञायां घः प्रायेण ।११८।

पुंसि धातोः प्रायेण घः सञ्ज्ञायाम् । दन्ताश्छाद्यन्तेऽनेनेति दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ।

## गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च ।११९।

गोचरादयो घान्ता निपात्यन्ते । घञोऽपवादः । गावश्चरन्त्यस्मिन्निति गोचरो देशः । संचरन्तेऽनेन, संचरो मार्गः । वहन्त्यनेन वहः स्कन्धः । व्रजः । व्यजस्तालवृन्तम् । निपातनाद्वीभावो न । आपणः पण्यस्थानम् । निगच्छन्त्यनेन निगमश्छन्दः । चात्कषः । निकषः ।

## अवे तॄस्त्रोर्घञ् ।१२०।

अवे तॄ स्तृभ्यां घञ् । अवतारः कूपादेः । अवस्तारो जवनिका ।

## हलश्च ।१२१।

हलन्ताद् घञ् स्यात् । विदन्त्यस्मिन्निति, वेदः । अपमृज्यतेऽनेनेत्यपामार्गः । ( घञ्विधाववहाराधारावायानामुपसंख्यानम् ) अव ह्रियन्तेऽस्मिन्नवहारः । आध्रियन्तेऽस्मिन्नाधारः । एत्यैतस्मिन् वयन्त्यावायः ।

## अध्यायन्यायोद्यावसंहाराश्च ॥ १२२ ॥

एते घञन्ता निपात्यन्ते । अधीयतेस्मिन्नित्यध्यायः । नयत्यनेन न्यायः । उद्यावः संहारः ।

## उदङ्कोऽनुदके ।१२३।

उत्पूर्वादञ्चेर्घञ् निपात्यते न तूदके । घृतमुदच्यतेऽस्मिन् घृतोदङ्कश्चर्ममयं पात्रम् । अनुदके किम् । उदकोदञ्चनः ।

## जालमानायः ॥१२४॥

आङ्पूर्वान्नयतेर्घञ् निपात्यते जालश्चेत्। आनीयन्तेऽनेनेत्यानायः। जालंकिम्। आनयनः।

## खनो घ च ॥१२५॥

खनो घश्चाद्घञ् (१) क०। आखनः। आखानः। ( खनो डडरे केकवकाः आखः। आखरः। आखनिकः। आखनिकवकः।

## ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥१२६॥

कृच्छ्राकृच्छ्रार्थेषु ईषद्दुःसुषु धातोः खल् स्यात्। 'तयोरेवे' ति भावकर्मणोः। ईषत्करः। दुःखेन क्रियते, दुष्करः कटो भवता। सुकरः। सुखेन कार्य इत्यर्थः ( अजब्भ्यां स्त्रीखलना विप्रतिषेधेन ) चितिः। स्तुतिः। ईषच्चयः। सुचयः। ईषल्लवः। सुलवः। पलाशचयनः। अविलवनः। स्त्रियाः खलनौ तथा। ईषद्भेदा। सुभेदा। सक्तुधानी। तिलपीडनी।

## कर्तृकर्मणोश्च भूकृञोः ॥१२७॥

कर्तृकर्मणोरीषदादिषूपपदेषु भूकृञ्भ्यां खल् स्यात्। ( कर्तृकर्मणोश्च्व्यर्थयोः ) ( कर्तृकर्मग्रहणं चोपपद (२) संज्ञार्थम् ) ईषदाढ्य (३) भवं भवता। दुराढ्यंभवम्। स्वाढ्यंभवम्। ईषदाढ्यंकरः। (४)। दुराढ्यङ्करः। स्वाढ्यङ्करः।

---

(१) घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थं, तेन भगः पदमित्यादीतिवृत्तिः।

(२) एतेन यथासंख्यं नेष्यते, कर्तृकर्मणी धातोरव्यवधानेन प्रयोज्ये, ईषदादयस्ततः प्रागिति लभ्यते।

(३) अनाढ्येन सुखेन दुःखेन वा भूयते इत्याद्यर्थः।

(४) अनाढ्य आढ्यः सुखेन दुःखेन वा क्रियते, इत्याद्यर्थः।

## आतो युच् । १२८ ।

कृच्छ्राकृच्छ्रार्थेषु ईषदादिषु आकारान्ताद्धातोर्युच् । ईषत्पानः । दुष्पानः । सुपानः ।

## छन्दसि गत्यर्थेभ्यः । १२९ ।

कृच्छ्राकृच्छ्राद्यर्थेषु ईषदादिषूपपदेषु गत्यर्थेभ्यो युच् स्याच्छन्दसि । सूपसदनमन्तरिक्षम् ।

## अन्येभ्योऽपि दृश्यते । १३० ।

कृच्छ्राकृच्छ्राद्यर्थेषु ईषदादिषु अन्येभ्योऽपि युज् दृश्यते । सुदोहनामकृणोद् ब्रह्मणे गाम् । ( भाषायां शासियुधिदृशिधृषिभ्यो युज्वक्तव्यः ) दुशासनः । दुर्योधनः दुर्दर्शनः । दुर्द्धर्षणः ( मृषेश्चेतिवक्तव्यम् ) दुर्मर्षणः ।

## वर्तमानसामीप्ये[1] वर्तमानवद्वा । १३१ ।

याभ्यः प्रकृतिभ्यो येन विशेषणेन वर्तमाने प्रत्ययाः विहितास्ताभ्यस्तेनैव विशेषणेन वर्तमानसामीप्ये भूते भविष्यति च वा स्युः । कदाऽऽगतोऽसि । अयमागच्छामि, आगमं वा । कदा गमिष्यसि । एष गच्छामि, गमिष्यामि वा । एषोऽसि पचन् । पचमानः । अलङ्करिष्णुरित्यादि । सामीप्यग्रहणाद विप्रकर्षविवक्षायां न-परुदगच्चल्लत्रपुरम् ।

## आशंसायां[2] भूतवच्च । १३२ ।

आशंसायां भूतवचाद् वर्तमानवच्च प्रत्यया वा स्युः । देवश्चेदव-

( १ ) समीपमेव सामीप्यम् , स्वार्थे ष्यञिति केचित् ।
( २ ) आशंसनमाशंसा । अप्राप्तस्य प्राप्तुमिच्छा, तस्याश्च भविष्यद्विषयता ।

र्षीत् । वर्षति, वर्षिष्यति वा, धान्यमवाप्स्म, वपामः, वप्स्यामो वा । सामान्यातिदेशो विशेषानतिदेशाल्लङ्लिटौ न ।

## क्षिप्रवचने लृट् । १३३ ।

क्षिप्रवचन उपपदे आशंसायां गम्यमानायां धातोर्लृट् स्यात् । भवान् क्षिप्रमाशु त्वरितं वा गमिष्यति । शीघ्रमध्येष्यामहे । नेति-वक्तव्ये लृड्ग्रहणं लुड्विषयेऽपि यथा स्यात् । श्वः शीघ्रमध्येष्यामहे ।

## आशंसावचने लिङ् । १३४ ।

आशंसावाच्युपपदे भविष्यति लिङ् स्यात् । गुरुश्चेदुपेयादाशंसे, अधीयीय । क्षिप्रप्रयोगेऽपि परत्वाल्लिङ् । आशंसे, क्षिप्रमधीयीय ।

## नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः । १३५ ।

क्रियायाः प्रबन्धे सामीप्ये च गम्येऽनद्यतनवन्न । यावज्जीवमपठीत् । यावज्जीवमन्नं दास्यति । प्रबन्धः सातत्येनानुष्ठानम् । सा-तुल्यजातीयेनाव्यवधानम् । येयं पौर्णमास्यतिक्रान्ता तस्यामग्नीनाधित । येयममावास्या आगामिनी तस्यामग्नीनाधास्यते ।

## भविष्यति मर्यादावचनेऽवरस्मिन् । १३६ ।

मर्यादावचनेऽवरस्मिन् प्रविभागे भविष्यति अनद्यतनवत्प्रत्यया न स्युः । योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र स्थास्यामः ।

## कालविभागे चानहोरात्राणाम् ॥ १३७ ॥

अनहोरात्रसम्बन्धिनि कालविभागे सति मर्यादावचनेऽवरस्मिन् प्रविभागे भविष्यति अनद्यतनवत्प्रत्यया न स्युः । योऽयं संवत्सर आगामी तस्य यदवरम्, आग्रहायण्यास्तत्र युक्ता अध्येष्या-

महे। अनहोरात्राणां किम्। योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः, तत्र युक्ता अध्येतास्महे।

## परस्मिन् विभाषा। १३८।

मर्यादावचने परस्मिन् प्रविभागे भविष्यति अनद्यतनवत्प्रत्यया वा स्युः। योऽयं संवत्सर आगामी तस्य यत्परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे, अध्येतास्महे।

## लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ। १३९।

हेतुहेतुमद्भावादि, लिङ्निमित्तं, तत्र भविष्यत्यर्थे धातोर्लृङ् क्रियाया असिद्धौ गम्यमानायाम्। देवं चेदनंस्यत, सुखमलप्स्यत।
(१)

## भूते च। १४०।

लिङ्निमित्ते भूते भविष्यति च लृङ्, क्रियातिपत्तौ।

## वोताप्योः। १४१।

उताप्योरित्यतः प्राक् 'लिङ्निमित्ते लृङ् भूते वे' त्यधिक्रियते। तदादौ तु पूर्वेण नित्यमेव।

## गर्हायां लडपिजात्वोः। १४२।

अपिजात्वोर्लट् गर्हायां गम्यमानायाम्। अपि सन्ध्यां त्यजसि, जातु ईश्वरं न मन्यसे, गर्हितमेतत्। कालत्रयेऽप्येते प्रत्ययाः।

## विभाषा कथमि लिङ् च। १४३।

कथमि वा लिङ् चाल्लट्गर्हायाम्भविष्यति नित्यं लृङ्, भूते वा।

---

( १ ) अस्योदाहरणानि 'उताप्योः समर्थयो' रित्यारित्यारभ्य 'समानकर्तृकेषु तुमुनि' ति विहाय सप्तसूत्र्याम्।

कथं धर्मं त्यजेः, त्यजसि वा । भविष्यति-कथं धर्ममत्यक्ष्यत् । भूते-कथं धर्ममत्यक्ष्यत, अत्याक्षीद्वा ।

## किंवृत्ते लिङ्लृटौ । १४४

किंवृत्त उपपदे गर्हायां लिङ्लृटौ स्तः । कः, कतरः, कतमो, वा वेदं निन्देत्, निन्दिष्यति, वा । भूते भविष्यति च पूर्ववत् ।

## अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । १४५ ।

अनवक्लृप्तिरसम्भावना । अमर्षोऽक्षमा । अनयोरकिंवृत्तेऽपि लिङ्लृटौ स्तः । न सम्भावयामि, न मर्षये वा, त्वं वेदं निन्देः निन्दिष्यति वा । लृङ् प्राग्वत् ।

(२)

## किंकिलास्त्यर्थेषु लृट् । १४६ ।

किंकिलास्त्यर्थेषु अनवक्लृप्त्यमर्षयोर्लृट् । न सम्भावयामि, न मर्षये, वा त्वं धर्मं किंकिल त्यक्ष्यसि । अस्ति, भवति, विद्यते, वा पलाण्डुं भोक्ष्यसे ।

## जातुयदोर्लिङ् ॥ १४७ ॥

जातुयदोरुपपदयोरन० धातोर्लिङ् स्यात् । ( यदायद्योरुपसंख्यानम् ] जातु, यद्, यदा, यदि, त्वादृशो युद्धात्पलायेत, न श्रद्धये, न मर्षयामि । लृङ् प्राग्वत् ।

## यच्चयत्रयोः । १४८ ।

यच्चयत्रयोरुपपदयोरन० धातोर्लिङ् स्यात् । यच्च यत्र वा, त्वं वेदं त्यजेः, न श्रद्धधे, न मर्षयामि ।

## गर्हायाञ्च । १४९ ।

( १ ) किंकिलेतिसमुदायः क्रोधद्योतकः । अस्त्यर्थाः अस्तिभवतिविद्यतयः ।

यच्चयत्रयोरुपपदयोर्गर्हायां धातोर्लिङ् स्यात्। यच्च यत्र वा, त्वं मिथ्या वदेः। अन्याय्यमेतत्।

## चित्रीकरणे च ॥ १५० ॥

यच्चयत्रयोरुपपदयोश्चित्रीकरणे धातोर्लिङ् स्यात्। यच्च यत्र वा त्वं मिथ्या वदेः, आश्चर्यमेतत्।

## शेषे लृडयदौ । १५१ ।

यदिभिन्ने यच्चयत्राभ्यामन्यस्मिन्नुपपदे चित्रीकरणे गम्ये लृट् स्यात्। आश्चर्यमन्धो नामाक्षराणि पठिष्यति। अयदौ किम्। आश्चर्यं यदि सोऽधीयीत।

## उताप्योः समर्थयोर्लिङ् । १५२ ।

समर्थयोरुताप्योरुपपदयोर्धातोर्लिङ् स्यात्। लिङ्निमित्ते क्रियातिपत्तौ भूते भविष्यति च नित्यं लङ्। उत, अपि वा; वेदं पठेत्। बाढमित्यर्थेऽनयोस्तुल्यार्थता। समर्थयोः किम्। उत वृक्षः पतिष्यति, अपि धास्यति द्वारम्। प्रश्नः, प्रच्छादनश्च गम्यते।

## कामप्रवेदनेऽकच्चिति । १५३ ।

स्वाभिप्रायाविष्करणे गम्यमाने धातोर्लिङ् न तु कच्चिति। कामो मे शयीत भवान्। अकच्चिति किम्। कच्चिज्जीवति ते पिता।

## संभावनेऽलमिति चेत्सिद्धाप्रयोगे । १५४ ।

संभावनेऽर्थे धातोर्लिङ् तच्चेत्संभावनमलमर्थे,ऽलमि सिद्धाप्रयोगे सति। अपि शिरसा गिरिं भिन्द्यात्। सिद्धाप्रयोगे किम्? अलमर्जुनो हनिष्यति कर्णम्।

## विभाषा धातौ संभावनवचनेऽयदि । १५५ ।

यद्रहिते संभावनवचने धातावुपपदे पूर्वविषये लिङ् वा

स्यात् । सम्भावयामि हस्तिनं हन्यात्, हनिष्यति वा भवान् । अयदि किम् ? सम्भावयामि यद् हन्यात् ।

## हेतुहेतुमतोर्लिङ् ।१५६।

अनयोर्गम्यमानयोर्धातोर्लिङ् वा स्यात् । पठेच्चेत्सुखं यायात् । पठिष्यति चेत्सुखं यास्यति । ( भविष्यदधिकार इतिवक्तव्यम् ) तेनेह न, वर्षतीति धावति ।

## इच्छार्थेषु लिङ्लोटौ ।१५७।

इच्छार्थेषूपपदेषु धातोर्लिङ्लोटौ स्तः । इच्छामि, कामये, प्रार्थये, भुञ्जीत भुङ्क्तां वा भवान् । (कामप्रवेदनं चेद्गम्यत इतिवक्तव्यम् ) तेनेह न, इच्छन् कटं करोति ।

## समानकर्तृकेषु तुमुन् ।१५८।

समानकर्तृकेषु इच्छार्थेषु धातुषूपपदेषु धातोस्तुमुन् स्यात् । भोक्तुमिच्छति । इच्छन् करोतीत्यादावनभिधानान्न ।

## लिङ् च ।१५९।

समानकर्तृकेषु इच्छार्थेषु धातुषूपदेषु धातोर्लिङ् स्यात् । भुञ्जीयेतीच्छति ।

## इच्छार्थेभ्यो विभाषा वर्तमाने १६०।

वर्तमाने इच्छार्थेषु वा लिङ् स्यात् । इच्छेत् । इच्छति । कामयेत । कामयते ।

## विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ।१६१।

विध्यादिषु द्योत्येषु धातोर्लिङ् स्यात् । अहरहः संध्यामुपासीत । इह भुञ्जीत । इहासीत । पुत्रं पाठयेद्भवान् । किं भोः ? व्याकरणमधीयीय उत तर्कम् । राज्यं लभेय ।

## लोट् च ॥१६२॥

विध्यादिषु धातोर्लोट् स्यात् । कटं करोतु । इत्यादि पूर्ववत् ।

## प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ॥१६३॥

प्रैषादिषु धातोः कृत्यसंज्ञकाः स्युः, चाल्लोट् । भवता यष्टव्यम् । भवान् यजताम् ।

## लिङ् चोर्ध्वमौहूर्तिके ॥१६४॥

प्रैषादिषु गम्येषूर्ध्वमौहूर्तिके वर्तमानाद्धातोर्लिङ् स्याच्चात्कृत्यलोटौ । मुहूर्तादूर्ध्वं यजेत । यजताम् । यष्टव्यम् ।

## स्मे लोट् ॥१६५॥

स्म उपपदे ऊर्ध्वमौहूर्तिके वर्तमानाद्धातोर्लोट् स्यात् प्रैषादिषु । ऊर्ध्वं मुहूर्तात्कटं करोतु स्म । स्म इति वाक्यालङ्कारे ।

## अधीष्टे च ॥१६६॥

स्म उपपदे अधीष्टे धातोर्लोट् स्यात् । अङ्ग स्म अध्यापय माणवकम् ।

## कालसमयवेलासु तुमुन् ।१६७।

कालादिषूपपदेषु धातोस्तुमुन् स्यात्प्रैषादिषु कालः, समयो, वेला, वा भोक्तुम् प्रैषादिसम्बन्धात् कालः पचतीत्यत्र न । कालोभोजनस्येत्यत्र तु वासरूपविधिना ल्युट् ।

## लिङ् यदि ।१६८।

यच्छब्द उपपदे कालादिषु च धातोर्लिङ् स्यात् । कालः समयो, वेला वा यत्पठेद् भवान् ।

## अर्हे कृत्यतृचश्च ।१६९।

अर्हे कर्तरि धातोः कृत्यतृचश्चाल्लिङ् । भवता वेदः पठितव्यः । पठनीयः । भवान् वेदं पठिता । पठेद्वा ।

## आवश्यकाधमर्ण्ययोर्णिनिः ।१७०।

आवश्यकाधमर्ण्ययोधातोर्णिनिः स्यात् । अवश्यकारी । शतंदायी ।

(१)

## कृत्याश्च ।१७१।

आवश्यकाधमर्ण्ययोर्धातोः कृत्यसंज्ञकाः स्युः । आवश्यं खलु यज्ञः कार्यः । शतं देयम् ।

## शकि लिङ् च ।१७२।

शक्तौ धातोर्लिङ् स्याच्चात्कृत्याः भारं वोढुं शक्तः । भारं वहेत् । भारो वोढव्यः ।

## आशिषि लिङ् लोटौ ।१७३।

आशिषि धातोर्लिङ्लोटौ स्तः । चिरं जीव्यात्, जीवतु वा । आशिषि किम् काकोऽपि जीवति चिराय बलिञ्च भुङ्क्ते ।

## क्तिच् क्तौ च सञ्ज्ञायाम् ॥१७४॥

आशिषि धातोः क्तिच्क्तौ च स्तः सञ्ज्ञायां गम्यमानायाम् । तनुतादिति तन्तिः । देवा एनं देयासुरिति देवदत्तः । क्तिचा बाधो मा भूदिति सामान्यविहितोऽपि क्तः पुनरुच्यते ।

---

( १ ) ननु सामान्यविहिताः कृत्या अत्रापि स्युरिति चेन्न; णिनिना बाधप्रसङ्गात् ननु भावकर्मणोः कृत्याः कर्तरि च णिनिरित्यर्थभेदइतिचेत् भव्यगेयादयः कर्तृवचनाउदाहार्याः । प्रातर्गेयः साम्नामिति ।

## माङि लुङ् । १७५ ।

माङ्युपपदे धातोर्लुङ् स्यात् । सर्वलकारापवादः । मा कार्षीः ।

## स्मोत्तरे लङ् च । १७६ ।

स्मोत्तरे माङ्युपदे धातोर्लङ्लुङौ स्तः । मा स्म करोत् । मा स्म कार्षीत् ।

॥ तृतीयः पादः समाप्तः ॥

---

# अथ तृतीयाध्यायस्य चतुर्थः पादः ॥

## धातुसम्बन्धे प्रत्ययाः । १ ।

धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः । तिङन्तवाच्यक्रियायाः प्राधान्यात् तदनुरोधेन गुणभूतक्रियावाचिभ्यः प्रत्ययाः । वसन् (१) ददर्श । सोमयाज्यस्य (२) पुत्रो भविता । श्वः पटः कृतो भविता । पुनः प्रत्ययग्रहणमधात्वधिकारविहितप्रत्ययसंग्रहार्थम् तेन, गोमानासीत् ।

---

(१) अतीतवासकर्तृकर्तृकं दर्शनम् । अत्रानेन भूते शतुः साधुत्वे बोधितेऽर्थापत्या तदर्थको लङपि कल्प्यते ।

(२) सोमेन यक्ष्यमाणो यः पुत्रस्तत्कर्तृकं भवनम् । भूतकालो भविष्यत्कालेनाभिसम्बध्यमानः साधुर्भवति ।

(१)

## क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः ॥२॥

धात्वर्थानां सम्बन्धे क्रियासमभिहारे धातोर्लोट् तस्य हिस्वौ तध्वमोर्विषये वा (क्रियासमभिहारे द्वे वाच्ये) लुनीहि २ इति लुनाति । पुनः पुनरतिशयेन वा लवनं ह्यन्तस्यार्थः । एककर्तृकं वर्त्त कालिकं लवनं लुनातीत्यस्यार्थः । इतिशब्दस्त्वभेदान्वये तात्पर्यग्राहकः । एवं लुनीहि २ इति लुनीतः । लुनन्ति । लुनासि । लुनीथः । लुनीथ । लुनीत लुनीतेति यूयं लुनीथ । एवं लिडादौ बोध्यम् । अधीष्व २ इत्यधीते । ध्वम्विषये, पक्षे·अधीध्वम् २ इति यूयमधीध्वे ।

## समुच्चयेऽन्यतरस्याम् ॥३॥

क्रियासमुच्चये द्योत्ये लोड् वा तस्य हिस्वौ तध्वमोर्विषये वा । पुरीमवस्कन्द लुनीहि नन्दनम् । मुषाण रत्नानि हरामराङ्गनाः ॥ विगृह्य चक्रे नमुचिद्विषा बली । य इत्थमस्वास्थ्यमहर्दिवं दिवः । तध्वमोस्तु पिबत खादत इत्यभ्यवहरथ । भुङ्ग्ध्वमास्वादयध्वमित्यभ्यवहरध्वे । पक्षे हिस्वौ । अत्र समुचीयमानविशेषाणामनुप्रयोगार्थेन सामान्येनाभेदान्वयः । पक्षे—पुरीमवचस्कन्द । नन्दनं लुलाव । अमराङ्गना जहार इत्यादि ।

## यथाविध्यनुप्रयोगः पूर्वस्मिन् ॥४॥

पूर्वस्मिन् लोड्विधाने यस्माद्धातोर्लोड् विहितः स एवानुप्रयो-

---

(१) अस्यैवं योगविभागो भाष्ये दर्शितः । 'क्रिया समभिहारे लोट्' ततो 'लोटो हिस्वौ' लोटो यौ हिस्वौ । लोडादेशौ यौ हिस्वौ दृष्टौ तत्तुल्यावनेन ह्स्वौ भवतः । तेन तदीयकार्यातिदेशात्परस्मैपदात्मनेपदसञ्ज्ञे हिस्वयोर्भवतः । तेन परस्मैपदिभ्यो हि, रात्मने पदिभ्यः स्वो भवति । हिशब्दस्य कर्त्ता वाच्यः स्वशब्दस्य भावकर्मकर्त्तारः, तिङ्त्वञ्च भवतीति (तिङ्ङतिङः) इत्यादि कार्यं भवति । पुरुषैकवचनसंज्ञे तु सामर्थ्यान्न भवतः । यदि हि ते अपि स्यातां हिस्वयोरनेन विधानमनर्थकं स्यात् । वचनान्तरेण तयोः सिद्धत्वात् 'वा च तध्वम्भाविनो लोटः' ।

क्तव्यः । तथैवोदाहृतम् । ननु हिस्वान्तमव्यक्तपदार्थकमित्यपरिसमाप्तोऽर्थ इतिकृत्वा-नुप्रयोगः स्यादेवेति चेन्न, यथाविध्यनुप्रयोगार्थत्वादस्य । उत्तरत्र सामान्यवचनस्येति वचनादत्र यथाविध्यनुप्रयोग एवेति खण्डितमित्यन्यत् ।

## समुच्चये सामान्यवचनस्य । ५ ।

समुच्चये लोड्विधाने सामान्यवचनस्य धातोरनुप्रयोगः । तथैवोदाहृतम् ।

## छन्दसि लुङ्लङ्लिटः । ६ ।

धातुसम्बन्धे लुङादयो वा स्युश्छन्दसि । शकलाङ्गुष्ठकोऽकरत् । अग्निमद्य होतारमवृणीतायं यजमानः । अत्र ममार । पक्षे यथास्वम् प्रत्ययाः ।

## लिङर्थे लेट् । ७ ।

लिङर्थे विध्यादौ हेतुमद्भावादौ च वा लेट् स्यात् । प्र ण आयूंषि तारिषत् । मन्दिषदित्यादि ।

## उपसंवादाशङ्कयोश्च । ८ ।

उपसंवादे (१) आशङ्कायाञ्च (२) छन्दसि लेट् । अहमेव (३) पशूनामीशै । नेज्जिह्मायन्तो नरकं पताम । जिह्माचरणेन नरकपात आशङ्क्यते ।

## तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः । ९ ॥

---

( १ ) उपसंवादः पणबन्धः । यदि मे भवानिदं कुर्यात्तर्हीदमहं दास्यामीति समयकरणम् ।

( २ ) आशङ्का-कारणतः कार्यानुसरणम् ।

( ३ ) संसारिणामीशः स्यामिति पणबन्धः ।

तुमर्थे (१) छन्दसि धातोः सेयादयः स्युः। वक्षे रायः। ता वामेषे रथानाम्, क्रत्वे दक्षाय जीवसे। प्रेषे। गवामिव श्रियसे। कर्मण्युपाचारध्यै। इन्द्राग्नी वा हुवध्यै। श्रियध्यै। पिबध्यै। सोममिन्द्राय पातवै। दशमे मासि सूतवे। स्वर्देवेषु गन्तवे।

## प्रयै रोहिष्यै अव्यथिष्यै। १०।

तुमर्थे छन्दसि एते निपात्यन्ते। प्रपूर्वाद्यातेः कैः। प्रयै देवेभ्यः। प्रयातुमित्यर्थः। रुहेनञ्पूर्वाद् व्यथेश्च इष्यै। अपामोषधीनां रोहिष्यै, रोढुमित्यर्थः। अव्यथिष्यै, अव्यथितुम्।

## दृशे विख्ये च। ११।

दृशेः ख्यातेश्च तुमर्थे छन्दसि के प्रत्ययो निपात्यते। दृशे विश्वाय सूर्यम्। द्रष्टुमित्यर्थः। विख्ये त्वा हरामि, विख्यातुम् इत्यर्थः।

## शकि णमुल्कमुलौ ॥ १२ ॥

शक्युपपदे तुमर्थे छन्दसि णमुल्कमुलौ स्तः। विभाजं नाशकत्। अपलुपं नाशकत्। विभक्तुमपलोप्तुमित्यर्थः।

## ईश्वरे तोसुन्कसुनौ। १३।

ईश्वरे उपपदे तुमर्थे छन्दसि तोसुन्कसुनौ स्तः। ईश्वरो विचरितोः। ईश्वरो विलिखः। विचरितुं, विलिखितुमित्यर्थः।

## कृत्यार्थे तवैकेन्केन्यत्वनः। १४।

कृत्यार्थे छन्दसि तवायादयः स्युः। न म्लेच्छितवै। अवगाहे। दिदृक्षेण्यः। कर्त्वं हविः।

## अवचक्षे च। १५।

---

(१) (अव्ययकृतो भावे) इति वचनात्तुमुन् भावे, तत्रैते पञ्चदश प्रत्ययाः।

कृत्यार्थे छन्दसि अवपूर्वाचक्षेरेश् निपात्यते । नावचक्षे । नावख्यातव्यमित्यर्थः ।

## भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् । १६ ।

भावलक्षणेऽर्थे वर्तमानेभ्यः स्थादिभ्यस्तुमर्थे छन्दसि तोसुन् स्यात् । आसंस्थातोः सीदन्ति । आसमाप्तेः सीदन्तीत्यर्थः । उदेतोः । अपाकर्तोः । प्रवदितोः । प्रचरितोः । होतोः । आतमितोः । काममाविजनितोः संभवामः ।

## सृपितृदोः कसुन् ॥ १७ ॥

भावलक्षणे सृपितृदिभ्यां तुमर्थे छन्दसि कसुन् स्यात् । क्रूरस्य विसृपो विरप्शिन् । पुरा जतृभ्य आतृदः ।

## अलंखल्वोः प्रतिषेधयोः प्राचां(१) क्त्वा । १८ ।

प्रतिषेधार्थयोरलंखल्वोरुपपदयोर्धातोर्वा क्त्वा स्यात् । अलं (२) रुदित्वा । खलु रुदित्वा । पक्षे अलं रोदनेन । अलंखल्वोः किम् । मा कार्षीः । प्रतिषेधयोः किम् । अलङ्कारः । भावे घञ् ।

## उदीचां माङो(३) व्यतीहारे । १९ ।

व्यतीहारे वर्तमानाद् मेङः क्त्वा वा स्यात् । अपूर्वकालार्थोऽयमारम्भः । अपमित्य,(४)अपमाय वा याचते । उदीचांग्रहणान्यथा प्राप्तमपि । याचित्वा अपमयते ।

---

( १ ) वासरूपविधिनैव सिद्धे प्राचांग्रहणं पूजार्थम् ।

( २ ) अमैवेतिनियमान्नोपपदसमासः ।

( ३ ) कृतात्वस्य मेङो ग्रहणं ज्ञापकं 'नानुबन्धकृतमनेजन्तत्वमि' त्यस्य तेन तन्नामरूपसर्वादेशदाप्प्रतिषेधेषु पृथक्त्वनिर्देशोऽनाकारान्तत्वादिति न वक्तव्यं भवति ।

( ४ ) मयतेरिदन्यतरस्यामिति इत्वा । 'समासेनञि' तिल्यप् । ह्रस्वस्यपिती' तितुक् । पूर्वं ह्यसौ याचित्वा पश्चादपमयते ।

## परावरयोगे च । २० ।

परेण पूर्वस्यावरेण परस्य च योगे गम्यमाने धातोः क्त्वा स्यात् । अप्राप्य नदीं पर्वतः स्थितः । परनदीयोगोऽत्र पर्वतस्य । अतिक्रम्य पर्वतं नदी स्थिता । अवरपर्वतयोगोऽत्र नद्याः ।

## समानकर्तृकयोः पूर्वकाले । २१ ।

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले धात्वर्थे वर्तमानाद्धातोः क्त्वा स्यात् । स्नात्वा व्रजति । द्वित्वमतन्त्रम् । तेन स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादि; आस्यते भोक्तुमित्यादौ तु वासरूपविधिना लट् । मुखं व्यादाय स्वपिति, नेत्रे संमील्य हसतीत्यादौ व्यादानसंमीलनाद्यनन्तरभाविस्वप्नहसनादिक्रियापेक्षव्यादानहसनादीनां पूर्वकालत्वम् ।

## आभीक्ष्ण्ये णमुल् च । २२ ।

पौनःपुन्ये द्योत्ये समानकर्तृकयोः पूर्वकाले धातोर्णमुल्, चात्क्त्वा । स्मारम् २ जल्पति । संस्मृत्य २ वा ।

## न यद्यनाकाङ्क्षे । २३ ।

यच्छब्दे उपपदे समा० धातोः क्त्वाणमुलौ न स्तोऽनाकाङ्क्षे वाक्ये । यदयं भुङ्क्ते ततः शेते । अनाकाङ्क्षे किम् ? यदयं भुक्त्वा व्रजति, ततोऽधीते ।

## विभाषाऽग्रेप्रथमपूर्वेषु । २४ ।

अग्रेप्रथमपूर्वेषूपपदेषु समा० धातोः क्त्वाणमुलौ वा स्तः । अग्रे भोजम् । अग्रे भुक्त्वा । प्रथमम्भोजम् । प्रथमं भुक्त्वा । पूर्वं भोजम् पूर्वं भुक्त्वा । वासरूपविधिना लडपि । अग्रे भुङ्क्ते, ततो व्रजति । आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यम् । अग्रेभोजम् २ भुक्त्वा २ वा ।

## कर्मण्याक्रोशे कृञः खमुञ् । २५ ।

समा० कर्मण्युपपदे करोतेः खमुञ् आक्रोशे गम्यमाने । चौरंकारमाक्रोशति । चौरोऽसीत्याक्रोशतीत्यर्थः ।

## स्वादुमि णमुल् । २६ ।

स्वाद्वर्थे उपपदे समा०करोतेर्णमुल् स्यात् । अस्वादुं स्वादुं कृत्वा भुङ्क्ते, स्वादुंकारं भुङ्क्ते । लवणंकारं भुङ्क्ते । सम्पन्नंकारं भुङ्क्ते । सम्पन्नलवणशब्दौ स्वादुपर्यायौ । वा सरूपविधिना क्त्वापि । स्वादुं कृत्वा भुङ्क्ते । स्वादुमि मान्तनिपातनमीकाराभावार्थम् । स्वाद्वीं कृत्वा ।

## अन्यथैवंकथमित्थंसुसिद्धाप्रयोगश्चेत् । २७ ।

अन्यथादिषूपपदेषु समा० करोतेर्णमुल् स्यात्, सिद्धो (१) ऽप्रयोगोऽस्य, एवंभूतः कृञ् चेत् । अन्यथाकारम्, एवंकारम्, कथंकारम्, इत्थंकारम्, वा भुङ्क्ते । सिद्धाप्रयोगइतिकिम् । शिरोऽन्यथा कृत्वा भुङ्क्ते ।

## यथातथयोरसूयाप्रतिवचने । २८ ।

यथातथयोरुपपदयोः समा० करोतेर्णमुल् स्यात् सिद्धाप्रयोगः करोतिश्चेदसूयाप्रतिवचने गम्यमाने । यथाकारमहं भोक्ष्ये तथाकारमहं; किं तवानेन । असूयेत्यादिकिम् । यथा कृत्वाऽहं भोक्ष्ये तथा त्वं द्रक्ष्यसि ।

## कर्मणि दृशिविदोः साकल्ये । २९ ।

समा० कर्मण्युपपदे दृशिविदिभ्यां णमुल् स्यात्, साकल्ये गम्यमाने । ब्रह्मदर्शं भोजयति । ब्राह्मणवेदं नमति । साकल्ये किम् । ब्राह्मणं दृष्ट्वा भोजयति ।

(१) व्यर्थत्वात्प्रयोगानर्हः इत्यर्थः । अन्यथाकारमित्यादावन्यथा भुङ्क्त इत्यादिरर्थः ।

## यावति विन्दजीवोः । ३० ।

यावच्छब्द उपपदे समानकर्तृकयोः पूर्वकाले वर्त्तमानाभ्यां विन्दिजीविभ्यां णमुल् स्यात् । यावद्वेदं भुङ्क्ते । यावल्लभते, तावद्भुङ्क्त इत्यर्थः । यावज्जीवमधीते । यावत्प्राणिति तावदित्यर्थः ।

## चर्मोदरयोः पूरेः । ३१ ।

चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्णमुल् स्यात् । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । पूर्वकाल इति न सम्बध्यते, असम्भवात् । एवमन्यत्रापि ।

## वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् । ३२ ।

कर्मण्युपपदे पूरयतेः णमुल्, अस्य ऊलोपश्च वा वर्षप्रमाणे गम्यमाने । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वा । अस्यकिम् । मूषिकाविलं पूरमित्यत्रोपपदस्य मा भूत् ।

## चेले क्नोपेः । ३३ ।

चेले कर्मण्युपपदे क्नोपेर्णमुल् स्यात् । चेलक्नोपं वृष्टो देवः । वसनक्नोपं वृष्टो देवः ।

## निमूलसमूलयोः कषः । ३४ ।

निमूलसमूलयोः कर्मणोरुपपदयोः कषेर्णमुल् स्यात् । निमूलकाषं कषति । समूलकाषं कषति । निमूलं (१) समूलं कषतीत्यर्थः ।

## शुष्कचूर्णरूक्षे पिषः । ३५ ।

शुष्कादिषु कर्मस्पपदेषु पिषेर्णमुल् । शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ।

---

(१) निमूलसमूलकषणाभिन्नं कषणमिति बोधः । सामान्य विशेष्यं; विशेषस्तु विशेषणम् ।

## समूलाकृतजीवेषु हन्कृञ्ग्रहः । ३६ ।

समूलादिषु कर्मसूपपदेषु हनादिभ्यो णमुल् स्यात् । समूलघातं हन्ति । अकृतकारं करोति । जीवग्राहं गृह्णाति ।

## करणे हनः । ३७ ।

करणे उपपदे हन्तेर्णमुल् स्यात् । पाण्युपघातं वेदिं हन्ति । अहिंसार्थोऽयमारम्भः । यथाविध्यनुप्रयोगार्थः सन् नित्यसमासार्थश्च । तेन हिंसार्थादप्यनेनैव पूर्वविप्रतिषेधेन-असिघातं हन्ति ।

## स्नेहने पिषः । ३८ ।

स्नेहने करणे उपपदे पिषेर्णमुल् स्यात् । उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ।

## हस्ते वर्तिग्रहोः । ३९ ।

हस्ते करणे उपपदे वर्तिग्रहिभ्यां णमुल् स्यात् । हस्तवर्तं वर्तयति । हस्तग्राहं गृह्णाति । हस्तेन वर्तयति, गृह्णाति वेत्यर्थः । हस्तशब्देन तद्वाचि गृह्यते । तेन करवर्तमित्यादि ।

## स्वे पुषः । ४० ।

स्वे करणे उपपदे पुषेर्णमुल् स्यात् । स्वपोषं पुष्णाति । स्वशब्देन तदर्थो गृह्यते । तेन धनपोषमित्यादि ।

## अधिकरणे बन्धः । ४१ ।

अधिकरणे उपपदे बध्नातेर्णमुल स्यात् । चक्रबन्धं बध्नाति । मुष्टिबन्धं बध्नाति । चक्रे मुष्टौ वा बध्नातीत्यर्थः ।

## संज्ञायाम् । ४२ ।

संज्ञायां बध्नातेर्णमुल् स्यात् । मयूरिकाबन्धं बद्धः । क्रौञ्चबन्धम् । अट्टालिकाबन्धम् । बन्धविशेषाणां संज्ञा एताः ।

## कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥४३॥

जीवपुरुषयोः कर्त्रोरुपपदयोर्नशिवहिभ्यां णमुल् स्यात् । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो वहतीत्यर्थः ।

## ऊर्ध्वे शुषिपूरोः ॥४४॥

ऊर्ध्वे कर्तरि उपपदे शुषिपूरिभ्यां णमुल् स्यात् । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं शुष्यति पूर्यते वेत्यर्थः ।

## उपमाने कर्मणि च ॥४५॥

उपमानवाचिनि कर्मणि कर्तरि चोपपदे धातोर्णमुल् स्यात् । घृतनिधायं निहितः । घृतमिव निहितः । अजकनाशं नष्टः । अजक इव नष्टः ।

## कषादिषु यथाविध्यनुप्रयोगः ॥४६॥

कषादिषु यस्माण्णमुलुक्तः स एवानुप्रयोक्तव्यः । तथैवोदाहृतम् ।

## उपदंशस्तृतीयायाम् ॥४७॥

इतः प्रभृति पूर्वकाल इति सम्बध्यते । तृतीयान्त उपपदे समानकर्तृकयोः पूर्वकाले वर्तमानादुपदंशेर्णमुल् स्यात् । मूलकेनोपदंशम् मूलकोपदंशम् (१) । 'तृतीयाप्रभृती' ति वा समासः । वासरूपविधिना क्त्वाऽपि । मूलकेनोपदश्य भुङ्क्ते ।

## हिंसार्थानां च समानकर्मकाणाम् ॥४८॥

तृतीयान्त उपपदेऽनुप्रयुक्तधातुना समानकर्मकात् हिंसार्था-

---

(१) मूलकेन भुङ्क्ते, किं कृत्वा, उपदश्य, किमुपदश्य, मूलकमिति सम्बन्धात् मूलकस्य भुजिं प्रति करणत्वात्तृतीया । उपदंशिना सह त्वार्थः सम्बन्धः कर्मत्वात्, एतावतैव सामर्थ्येन प्रत्ययः समासश्च । तृतीयायामिति वचनसामर्थ्यात् ।

द्धातोर्णमुल् स्यात् । दण्डेनोपघातम् । दण्डोपघातं गाः कालयति । दण्डेनोपहत्य गाः प्रेरयतीत्यर्थः । समानकर्मकाणां किम् । दण्डेन चौरमाहत्य गाः कालयति ।

## सप्तम्यां चोपपीडरुधकर्षः ॥४९॥

सप्तम्यन्ते तृतीयान्ते चोपपदे उपपूर्वेभ्यः पीडादिभ्यो णमुल् स्यात् । पार्श्वोपपीडं शेते । पार्श्वयोः पार्श्वाभ्याम्वा उपपीडम् । व्रजोपरोधं गाः स्थापयति । व्रजेन व्रजे वोपरोधम् । पाण्युकर्षं धानाः संगृह्णाति । पाणिना, पाणौ वोपकर्षम् ।

## समासत्तौ ॥५०॥

तृतीयान्ते सप्तम्यन्ते चोपपदे धातोर्णमुल् स्यात् सन्निकर्षे गम्ये । केशग्राहं, केशैर्ग्राहं, केशेषु ग्राहं, वा युध्यन्ते । केशेषु ग्रहणं भवतु मा वा, सन्निकर्षप्रतिपादनपरमेतत् ।

## प्रमाणे च ॥५१॥

तृतीयासप्तम्यन्ययोरुपपदयोर्धातोर्णमुल् स्यात्, प्रमाणे गम्यमाने । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले, वोत्कर्षम् । द्व्यङ्गुलेन परिच्छिद्येत्यर्थः ।

## अपादाने परीप्सायाम् ॥५२॥

अदापान उपपदे धातोर्णमुल् स्यात् परीप्सायां गम्यमानायाम् । शय्योत्थायं धावति । शय्याया उत्थाय वा ।

## द्वितीयायाञ्च ॥५३॥

द्वितीयान्त उपपदे धातोर्णमुल्स्यात्परीप्सायां गम्यमानायाम् । यष्टिग्राहं युध्यन्ते । लोष्टग्राहम् । एवं युद्धाय त्वरन्ते खलु, यदाऽऽयुधमपि न प्रतीक्षन्ते ।

## स्वाङ्गेऽध्रुवे ।५४।

अध्रुवे स्वाङ्गे द्वितीयान्त उपपदे धातोर्णमुल् स्यात् । भ्रूविक्षेपं, भ्रुवं विक्षिप्य वा कथयति । अध्रुवे किम् । शिर उत्क्षिप्य । येन विना न जीवति तद् ध्रुवम् ।

## परिक्लिश्यमाने च ।५५।

परिक्लिश्यमाने स्वाङ्गे द्वितीयान्त उपपदे धातोर्णमुल् स्यात् । उरः पेषं युध्यन्ते । कृत्स्नमुरः पीडयन्तो युध्यन्त इत्यर्थः । ध्रुवार्थमिदम् ।

## विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।५६।

द्वितीयान्त उप० विश्यादिभ्यो णमुल्, व्याप्यमाने आसेव्यमाने च गम्यमाने । विश्यादिक्रियाभिः साकल्येन पदार्थानां सम्बन्धो व्याप्तिः । पौनः पुन्यमासेवा । नित्यवीप्सयोरिति द्वित्वन्तु न, स्वभावतः समासेनैव व्याप्त्यासेवयोरुक्तत्वात् । असमासपक्षे व्याप्तौ द्रव्यवचनस्य, आसेवायान्तु क्रियावचनस्य द्वित्वम् । सुप्सु वीप्सा, तिङ्क्षु नित्यतेतिवचनात् । गेहानुप्रवेशमास्ते । गेहं गेहमनुप्रवेशमास्ते । गेहमनुप्रवेशमनुप्रवेशमास्ते । एवं गेहानुप्रपातं, गेहानुप्रपादं, गेहानुस्कन्दम् ।

## अस्यतितृषोः क्रियान्तरे कालेषु ।५७।

कालवाचिद्वितीयान्ते उपपदे क्रियान्तरे वर्तमानादस्यतेस्तृषेश्च णमुल् स्यात् । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासं गाः पाययति । द्व्यहतर्षम् । द्व्यहं तर्षम् । अत्यसनेन तर्षणेन च गवाम् पानक्रिया व्यवधीयते । अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ।

## नाम्न्यादिशिग्रहोः ।५८।

द्वितीयान्ते नाम्न्युपपदे दिशिग्रहिभ्यां णमुल् स्यात् । नामादेशमाचष्टे । नामग्राहमाचष्टे ।

## अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।५९।

अव्यय उपपदे करोतेः क्त्वाणमुलौ स्तोऽयथाभिप्रेताख्याने गम्ये। पुत्रस्ते जातः, किन्तर्हि नीचैः कृत्य। नीचैः कृत्वा। नीचैः कारं वाऽऽचष्टे। प्रियं नामोच्चैराख्येयम्। पुत्रस्ते परीक्षायामनुत्तीर्णः, किन्तर्हि उच्चैः कृत्याचष्टे। उच्चैः कृत्वा। उच्चैः कारं वा। अप्रियन्नाम नीचैराख्येयम्। अयथाभिप्रेताख्याने किम्—उच्चैः कृत्वाऽऽचष्टे, पुत्रस्तेजातः। क्त्वाग्रहणं समासार्थं। पुनर्णमुल्ग्रहणं तुल्यपक्षत्वज्ञापनार्थम्।

## तिर्यच्यपवर्गे ।६०।

तिर्यगुपपदे कृञः क्त्वाणमुलौ स्तोऽपवर्गे गम्यमाने। तिर्यक्कृत्य। तिर्यक्कृत्वा। तियक्कारं वा गतः। समाप्य गत इत्यर्थः। अपवर्गे किम्। तिर्यक्कृत्वा काष्ठं गतः।

## स्वाङ्गे तस्प्रत्यये कृभ्वोः ।६१।

तस्प्रत्ययान्ते स्वाङ्गवाचिन्युपपदे कृभूभ्यां क्त्वाणमुलौ स्तः। मुखतः कृत्य। मुखतः कृत्वा। मुखतः कारम्। मुखतोभूय। मुखतोभूत्वा। मुखतोभावं वा गतः। प्रत्ययेकिम्। मुखतः (१) कृत्वा गतः।

## नाधार्थप्रत्यये च्व्यर्थे ।६२।

च्व्यर्थविषये नाधार्थप्रत्ययान्त उपपदे। कृभूभ्यां क्त्वाणमुलौ स्तः। अनाना नाना कृत्त्वा गत इति नानाकृत्य, नानाकृत्वा, नानाकारं वा गतः। नानाभूय। नानाभूत्वा। नानाभावं वा गतः। एवं द्विधाकृत्य। द्विधा कृत्वा। द्विधाकारमित्यादि। प्रत्ययेकिम्? हिरुक्कृत्वा। पृथग्भूत्वा। च्व्यर्थेकिम्। नाना कृत्वा काष्ठं गतः।

## तूष्णीमि भुवः ॥६३॥

(१) मुखे तस्यतीति मुखतः। कर्त्तरि क्विप्। धातुत्वाद्दीर्घो न।

तूष्णींशब्द उपपदे भुवः क्त्वाणमुलौ स्तः । तूष्णीम्भूय । तूष्णीं-भूत्वा । तूष्णींभावं गतः । कृञ्निवृत्तये भूग्रहणम् ।

## अन्वच्यानुलोम्ये । ६४ ।

अन्वक्शब्द उपपदे भुवः क्त्वाणमुलौ स्त आनुलोम्ये गम्यमाने । अन्वग्भूय । अन्वग्भूत्वा । अन्वग्भावं वा गतः । आनु-लोम्ये किम् । अन्वग् भूत्वा तिष्ठति ।

## शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् । ६५ ।

शकादिष्वस्त्यर्थेषु चोपपदेषु धातोस्तुमुन् स्यात् । शक्नोति, धृष्णोति, जानाति, ग्लायति, घटते, आरभते, लभते, क्रमते, सहते, अर्हति, अस्ति विद्यते वा भोक्तुम् ।

## पर्याप्तिवचनेष्वलमर्थेषु । ६६ ।

अलमर्थेषु पर्याप्तिवचनेषूपपदेषु धातोस्तुमुन् स्यात् । पर्याप्तः, अलं, पारयति वा भोक्तुम् । पर्याप्तिवचनेषु किम् । अलंकृत्वा । अलमर्थेषु किम् । पर्याप्तं भुङ्क्ते (१) ।

## कर्तरि कृत् । ६७ ।

कृत्प्रत्ययः कर्त्तरि स्यात् । कृदुत्पत्तिवाक्यानामयमर्थशेषः । तत्र येष्वर्थादेशो नास्ति तत्रेदमुपतिष्ठते । अर्थस्याकाङ्क्षितत्वात् । यत्र तु साक्षादर्थनिर्देशस्तत्रानाकाङ्क्षितत्वान्नास्योपयोगः । कारकः । कर्त्ता ।

## भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा । ६८ ।

भव्यादयः कर्त्तरि वा निपात्यन्ते । पक्षे यथाप्राप्तं भावकर्मणोः । भवत्यसौ भव्यः । भव्यमनेन । गेयो माणवकः साम्नाम् । माणवकेन

(१) प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ।

साम गेयम् । प्रवचनीयो गुरुः स्वाध्यायस्य । गुरुणा स्वाध्यायः प्रवचनीयः । उपस्थानीयः शिष्यो गुरोः शिष्येण गुरुरुपस्थानीयः । जन्यो देवदत्तः । जन्यं देवदत्तेन । आप्लाव्यो देवदत्तः । आप्लाव्यं देवदत्तेन । आपात्यो देवदत्तः । आपात्यं देवदत्तेन ।

## लः कर्मणि च भावे चाकर्मकेभ्यः । ६९ ।

लकारास्सकर्मकेभ्यः कर्मणि चात्कर्तरि स्युः । अकर्मकेभ्यो भावे चात्कर्तरि । गम्यते ग्रामो देवदत्तेन । गच्छति ग्रामं देवदत्तः । अकर्मकेभ्यः आस्यते देवदत्तेन । आस्ते देवदत्तः ।

## तयोरेव कृत्यक्तखलर्थाः । ७० ।

कृत्यक्तखलर्था भावकर्मणोरेव स्युः । कर्त्तव्यो घटः । कर्त्तव्यः कटो भवता । आसितव्यं भवता । हतो देवदत्तेन । शयितं भवता । ईषत्करः कटो भवता । ईषदाढ्यंभवं भवता । सकर्मकेभ्यः कर्मणि । अकर्मकेभ्यो भावे ।

## आदिकर्मणि क्तः कर्तरि च । ७१ ।

आदिकर्मणि यः क्तस्स कर्त्तरि स्यात् । चाद्यथाप्राप्तम् । प्रकृतः कटं देवदत्तः । प्रकृतः कटो देवदत्तेन ।

## गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च । ७२ ।

गत्यर्थेभ्योऽकर्मकेभ्यः श्लिषादिभ्यश्च क्तः कर्त्तरि स्यात् । चाद्यथाप्राप्तं भावकर्मणोः । ग्रामं गतः । ग्लानो हरिः । आश्लिष्टः पुत्रं पिता । शय्यामधिशयितः । पर्वतमधिष्ठितः । शिवमुपासितः । रात्रिमुपोषितः । चन्द्रमनुजातः । अश्वमारूढः । विश्वमनुजीर्णः पक्षे गङ्गा गता । ग्लानं हरिणेत्यादि ।

## दाशगोघ्नौ सम्प्रदाने । ७३ ।

अच्प्रत्ययान्तो दाशशब्दष्टक्प्रत्ययान्तो गोघ्नशब्दश्च सम्प्रदाने

निपात्यते । दाशन्त्यस्मै इति दाशः । गौर्हन्यते ( दीयते ) अस्मैइति गोघ्नो ऋत्विगादिः ।

## भीमादयोऽपादाने । ७४ ।

भीमादयः शब्दा अपादाने निपात्यन्ते । बिभेत्यस्मादिति भीमः । भीष्मः । 'भियः षुक्वे, त्युणादौ द्रष्टव्यम् ।

## ताभ्यामन्यत्रोणादयः । ७५ ।

सम्प्रदानापादानाभ्यामन्यत्र ( अन्यस्मिन् कारके ) उणादयः प्रत्ययाः स्युः । कृषितोऽसौ कृषिः । तन्यत इति तन्तुः वृत्तमिति वर्त्म ।

## क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः । ७६ ।

ध्रौव्याद्यर्थेभ्यः क्तोऽधिकरणे चाद्यथाप्राप्तं भावकर्मकर्तृषु । धरेशस्यासितमिदमिदं यातं धरापतेः । भुक्तमेतदकम्पस्येत्यहुर्मर्त्यादिदृक्षवः । पक्षे-आसितः (१) सः । आसितं तेन । स इदं यातः (२) तेनेदं यातम् । तेन भुक्तम् (३) ।

## लस्य । ७७ ।

अधिकारोऽयम् । अनुबन्धभेदेन भेदमाश्रित्य (४) दश लकाराः । सर्वेषां ग्रहणम् । त्यक्तानुबन्धत्वात् ।

## तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । ७८ ॥

---

( १ ) प्रभूततेह गम्यते न तु भोक्तुः सामर्थ्यम् ।

( १ ) आसेरकर्मकत्वात्कर्तरि भावे च ।

( २ ) यातेः कर्तृकर्मणोः ।

( ३ ) भुजेः कर्मणि ।

( ४ ) लट् । लिट् । लुट् । लृट् । लेट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् ।

एतेऽष्टादश लस्यादेशाः स्युः। तिप्सिप्मिपास्पकारः स्वरार्थः। इटष्टकार इटोऽदिति विशेषणार्थः। न देशविध्यर्थः। ङकारस्तिङिति प्रत्याहारार्थः। पचति। पचतः। पचन्ति। पचसि। पचथः। पचथ। पचामि। पचावः। पचामः। पचते पचेते। पचन्ते। पचसे। पचेथे। पचध्वे। पचे। पचावहे। पचामहे।

## टित आत्मनेपदानां टेरे। ७९।

टितो लस्यात्मनपदानां टेरेत्वं स्यात्। एधते। पचमानो यजमानइत्यादौ तु न, तिबादिभिरात्मनेपदस्य विशेषणात्।

## थासस्से। ८०।

टितो लस्य थासस्सेः स्यात्। पचसे।

## (१) लिटस्तझयोरेशिरेच्। ८१

लिडादेशयोस्तझयोरेशिरेचौ स्तः। एधांचक्रे। एधांचक्रिरे।

## (२) परस्मैपदानां णलतुसुस्थलथुसणल्वमाः। ८२।

लिडादेशानां परस्मैपदानां णलादयः स्युः। चिचेत। चिचितुः। चिचितुः। चिचेतिथ। चिचितथुः। चिचित। चिचेत। चिचिचितिव। चिचितिम।

## विदो लिटो वा। ८३।

विदः परेषां लडादेशानां णलादयो वा स्युः। वेद। विदतुः। विदुः। वेत्थ। विदथुः। विद। वेद। विद्व। विद्म। पक्षे-वेत्ति। वित्तः, इत्यादि।

---

(१) एकारोच्चारणं ज्ञापकं तङादेशानां टेरेत्वन्न, तेनैधितेत्यादौ नेत्यपि द्रष्टव्यम्।
(२) णलिति प्रश्लिष्टनिर्देशः ( ण, अलिति ) तेनानेकाल्त्वेन सर्वादेशः।

## ब्रुवः पञ्चानामादित आहो ब्रुवः । ८४ ।

ब्रुवः परेषा मादितः पञ्चानां परस्मैपदानां णलादयः पञ्च वा स्युः, ब्रुवश्चाहादेशः । आह । आहतुः । आहुः । आत्थ । आहथुः । पक्षे । ब्रवीति । ब्रूत इत्यादि ।

## लोटो लङ्वत् । ८५ ।

लोटो लङ इव कार्यं स्यात् । तेन तामादयस्सलोपश्च । पचताम् । पचतम् । पचत । पचाव । पचाम ।

## एरुः । ८६ ।

लोडादेशस्येत उस्स्यात् । पचतु । पचन्तु ।

## सेर्ह्यपिच्च । ८७ ।

लोडादेशस्य सेर्हिः सोऽपित् । लुनीहि । हिन्योरुत्वन्न इकारोच्चारणसामर्थ्यात् ।

## वा छन्दसि । ८८ ।

छन्दसि विषये हिरपिद्वा । युयोध्यस्मज्जुहुराणमेनः । युयुधि ।

## मेर्निः । ८९ ।

लोटो मेर्निस्स्यात् । पठानि । यजानि ।

## आमेतः । ९० ।

लोडेत आम् स्यात् । पचताम् । पचेताम् । पचन्ताम् ।

## सवाभ्यां वामौ । ९१ ।

सवाभ्यां लोडेतो वामौ स्तः । पचस्व । पचध्वम् ।

## आडुत्तमस्य पिच्च । ९२ ।

लोडुत्तमस्याट् स च पित्। यवानि। यवाव। यवाम। करवै। करवावहै। करवामहै।

## एत ऐ। ९३।

लोडुत्तमस्यैत ऐ स्यात्। एधै। एधावहै। एधामहै। पचावेदमित्यादौ न, गुणस्य बहिरङ्गत्वात्।

## लेटोऽडाटौ। ९४।

लेटोऽडाटौ स्तः। जोषिषत्। उदधिं च्यावयाति।

## आत ऐ। ९५।

लेट आत ऐ स्यात्। मन्त्रयैते। मन्त्रयैथे। आटस्तु न; विधानसामर्थ्यात्।

## वैतोऽन्यत्र। ९६।

आत ऐतोऽन्यत्र लेडेत ऐ स्यात्। सप्ताहानि शयै। मदग्रा-एव वो ग्रहा गृह्यान्तै।

## इतश्च लोपः परस्मैपदेषु। ९७।

लेट्सम्बन्धीकारान्तस्य परस्मैपदस्य लोपो वा स्यात्। जोषिषत्। कारिषत्। क्वचिन्न। उदधिं च्यावयाति। परस्मैपदग्रहणम्, इड्वहिमहिङां निवृत्यर्थम्।

## स उत्तमस्य। ९८।

सकारान्तस्यलेडुत्तमस्य वा लोपः स्यात्। करवाव। करवाम। पक्षे-करवावः। करवामः

## नित्यं ङितः। ९९।

ङिल्लकारसम्बन्धिनः सकारान्तस्योत्तमस्य नित्यं लोपः स्यात्। अपचाव। अपचाम।

## इतश्च ।१००।

ङिल्लकारसम्बन्धिन इकारान्तस्य परस्मैपदस्य लोपः स्यात् । अपचत् । पचेत् । परस्मैपदानुवृत्तेरपचावहै इत्यादौ न ।

## तस्थस्थमिपां तान्तन्तामः ॥१०१॥

ङित्सम्बन्धिनां तसादीनां तामादयः स्युः । अपचताम् । अपचतम् । अपचत । अपचम् ।

## लिङः सीयुट् ।१०२।

लिङः सीयुट् स्यात् । पचेत । पचेयाताम् । पचेरन् । पक्षीष्ट । पक्षीयास्ताम्, इत्यादि । यासुटा सीयुड् बाध्यते विशेषविहितत्वात् । सुटा सीयुट् यासुट् च न बाध्यते, विरोधाभावात् (१) ।

## यासुट् परस्मैपदेषूदात्तो ङिच्च ।१०३।

लिङः परस्मैपदानां यासुट् स्यात् स चोदात्तो ङिच्च । रूयात् । लूयात् ।

## किदाशिषि ।१०४ ।

आशिषि लिङो यासुट् कित्स्यात् । ङित्त्वे प्राप्ते किद्वचनं वच्यादीनां सम्प्रसारणार्थं, जागर्तेर्गुणार्थञ्च । उच्यात् । उच्यास्तामित्यादि जागर्यात् । जागर्यास्तामित्यादि । आशिषिकिम् । वच्यात् । जागृयात् ।

## झस्य रन् ।१०५।

लिङो झस्य रन् स्यात् । यजेरन् ।

---

(१) सति विरोधे बलवता दुर्बलो बाध्यते इतिन्यायात् । तकारथकारयोः सुट्, समुदायस्य तुष्टौ ।

## इटोऽत् । १०६ ।

लिङ इटोऽत्स्यात् । एधेय । यजेय । एहेथ ।

## सुट् तिथोः । १०७ ।

लिङस्तकारथकारयोः सुट् स्यात् । एधिषीष्ट । एधिषीयास्ताम्

## झेर्जुस् । १०८ ।

लिङो झेर्जुस्स्यात् । पचेयुः । यजेयुः ।

## सिजभ्यस्तविदिभ्यश्च । १०९ ।

सिचोऽभ्यस्ताद्विदेश्च परस्य ङितो लस्य झेर्जुस् स्यात् । अलिङर्थोऽयम् । अचैषुः । अबिभयुः । अविदुः ।

## आतः । ११० ।

सिज्लुक्यादन्तादेव झेर्जुस्स्यात् । अदुः अधुः । अभूवन्नित्यादौ प्रत्ययलक्षणेन जुस्प्राप्तौ नियमान्न ।

## लङः शाकटायनस्यैव । १११ ।

आतः परस्य लङः शाकटायनस्यैव मते झेर्जुस् । अयुः । अयान् । ननु लङेवाऽऽतोऽनन्तरो ङित्संभवति किलङ्ग्रहणेनेतिचेन्न । लङेव यो लङ् तत्र यथा स्यात्, लङ्वद्भावेन यो लङ् तत्र मा भूत् । तेन लोटि न । यान्तु ।

## द्विषश्च । ११२ ।

द्विषः परस्य लङो झेर्जुस् वा । अद्विषुः । अद्विषन् ।

## तिङ्शित्सार्वधातुकम् । ११३ ।

तिङः शितश्च प्रत्ययाः सार्वधातुकसंज्ञास्स्युः । रोदिति । पच्यते । इज्यते । भवति ।

## आर्द्धधातुकं शेषः॥११४॥

तिङ्शिद्भ्योऽन्यो धातोर्विहितः प्रत्यय आर्द्धधातुकसंज्ञः स्यात्। भविता। भविष्यति। धातोःकिम्। वृक्षत्वम्। वृक्षता।

## लिट् च॥११५॥

लिडादेशस्तिङ् आर्द्धधातुकसंज्ञस्स्यात्। बभूविथ। तिङ्-शस्त्विह न, एवकारानुवृत्तेः।

## लिङाशिषि॥११६॥

आशिषि लिङ् आर्द्धधातुकसंज्ञस्स्यात्। लविषीष्ट। आशिषि किम्। लुनीयात्। संज्ञासमावेशस्तु न, पूर्वोक्तयुक्त्या।

## छन्दस्युभयथा॥११७॥

छन्दसि विषये उभे संज्ञे स्तः। वर्द्धन्तु त्वा सुष्टुतयः। आर्द्धधातुकत्वा-णिलोपः। मा रुहेमा स्वस्तये। लिङः सार्वधातुकत्वाच्छप्। उपस्थेयाम शरणं बृहन्तम्। सार्वधातुकत्वात्सलोपः।

इति तृतीयोऽध्यायः॥

---

# अथ चतुर्थाध्यायस्य प्रथमः पादः ।

(१)

## ङ्याप्प्रातिपदिकात् ॥१॥

अधिकारोऽयमापञ्चमपरिसमाप्तेः । लिङ्गविशिष्टपरिभाषया सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्, ङ्याब्भ्यां प्राङ् मा भूदित्येतदर्थम्, तेन कालितरा । हरिणितरा । खट्वातरा । मालातरेत्यादि सिद्धम् । अन्यथा विप्रतिषेधात्पूर्वं तद्धितोत्पत्तिः स्यात् । प्रातिपदिकग्रहण 'वृद्धाच्छः' इत्यादौ विशेषणार्थन्तेन राज्ञो देवदत्तस्येत्यादौ वाक्याच्छो न ।

## स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योःसुप् ॥२॥

ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । कुमारी । कुमार्यौ । खट्वा । खट्वे । घटः । घटौ ।

## स्त्रियाम् ॥३॥

अधिकारोऽयं 'समर्थाना' मित्यतः प्राक् ।

(२)

## अजाद्यतष्टाप् ॥४॥

अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप्

---

(१) ङीप् ङीष् ङीनां सामान्येन ग्रहणं तथा टाब्डाप्चापाम् ।

(२) षष्ठ्यन्तमेतद् भाष्यसम्मतम् ।

स्यात्। अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय। अजा, एडकेत्यादौ जातिलक्षणो ङीष्प्राप्तः। होडा, इत्यादौ 'वयसिप्रथमे' इति ङीप्प्राप्तः। हलन्तानां पाठस्तु विध्यर्थ एव। क्रुञ्चा, देवविशा। खट्वा (शूद्रा चामहत्पूर्वा जातिः) (१) शूद्रत्वजातिविशिष्टा स्त्री शूद्रा। जातिः किम्। पुंयोगे शूद्री। अमहत्पूर्वाकिम्। महाशूद्री। अजादिभिः स्त्रीत्वस्य विशेषितत्वान्नेह। पञ्चाजी। समासाभिधेयसमाहारगतमत्र स्त्रीत्वन्न त्वजादिगतम्।

## ऋन्नेभ्यो ङीप् ॥५॥

ऋकारान्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात्। कर्त्री। दण्डिनी।

## उगितश्च ॥६॥

उगिदन्तात् (२) प्रातिपदिकात् स्त्रियां ङीप् स्यात् भवती (३)। यजन्ती। दीव्यन्ती। शप्श्यनोरितिनुम्। उखास्रदित्यादौतु न, उगिदचामितिसूत्रेऽजग्रहणेन धातोश्चेदुगित्कार्य्यं तर्ह्यञ्चतेरेवेति नियमात्। अञ्चतेः प्राची। प्रतीचीत्यादि।

## वनो र च ॥७॥

वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्याद्रश्चान्तादेशः।

---

(१) शूद्रशब्दष्टापमुत्पादयति जातिश्चेद् वाच्या। महत्पूर्वस्तु न। जातिरत्रापि संबध्यते। तेन, महती शूद्रा, महाशूद्रा, इत्यत्र निषेधो न। ननु गणे शूद्रशब्दस्य पाठाद् ग्रहणवता प्रातिपादिकेन तदन्तविधेः प्रतिषेधादमहत्पूर्वग्रहणं व्यर्थमितिचेन्न तस्य स्त्री प्रत्ययेषु तदन्तविधिज्ञापनार्थत्वात्, तत्फलमतिभवतीत्यादौ ङीप् सिद्धिः।

(२) प्रत्ययग्रहणपरिभाषया।

(३) व्यपदेशिवद्भावेनोगिदन्तत्वम्। नच व्यपदेशिवद्भावोऽप्रातिपादिकेनेतिशङ्क्यम्, तस्याः प्रातिपदिकग्रहणपात्रविषयत्वात्। उगित्त्वस्य प्रातिपदिकाप्रातिपदिकसाधारणत्वात्। प्रत्ययग्रहण इत्यस्यापि तद्ग्रहणमात्रविषयत्वात् तेन निर्गोमती, इत्यादिसिद्धिः।

वन्निति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणम् । प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् । तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते । सुत्वानमतिक्रान्ता, अतिसुत्वरी । अतिधीवरी । (१) शर्वरी (वनो न हशः) हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकात् ङीप् रश्च नेत्यर्थः । ओणृअपनयने । वनिप् 'विड्वनो' रित्यात्वम् । अवावा ब्राह्मणी । राजयुध्वा । (बहुलं छन्दसि ङीप्रौ वक्तव्यौ) यज्वरीरिषः । यज्वनीरिषः ।

## पादोऽन्यतरस्याम् । ८ ।

पादन्तात् प्रातिपदिकान्ङीब् वा स्यात् । द्विपदी । द्विपात् ।

## टाबृचि । ९ ।

ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । द्विपदा ऋक् ।

## न षट्स्वस्रादिभ्यः । १० ।

षट्संज्ञकेभ्यः (२) स्वस्रादिभ्यश्च (३) ङीपटापौ न स्तः । पञ्च कुमार्य्यः । स्वसा । दुहिता ।

## मनः । ११ ।

मन्नन्तान् ङीप न स्यात् । दामा । दामानौ । 'अनिनसन्निति' परिभाषया अतिमहिमेत्यादावपि न ।

---

(१) शॄ हिंसायामित्येतस्मा 'दन्येभ्योपिदृश्यन्त, इति वनिप् । ङीप् तु सिद्धस्तत् सन्नियोगेन रो विधीयते तेन तदभावे चारुपर्वेत्यादौ न ।

(२) षट्संज्ञानामन्ते लुप्त ग्रबुत्पत्तिः कस्मान्न स्यात् । प्रत्याहाराच्चापा सिद्ध दोषस्त्वित्वे (बहुचर्मिकेत्यादौ) तस्मान्नोभौ ।

(३) स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ।

## अनो बहुव्रीहेः ॥१२॥

अन्नन्ताद्बहुव्रीहेर्ङीप् स्यात् । बहुयज्वा । उपधालोपिनो हि विकल्पं वक्ष्यति । बहुव्रीहेः किम् । राजानमतिक्रान्ता, अतिराज्ञी ।

## डाबुभाभ्यामन्यतरस्याम् ॥१३॥

मन्नन्तात्प्रातिपदिकादन्नन्ताद्बहुव्रीहेश्च डाप् वा स्यात् । दामा । दामे । दामानौ । बहुयज्वा । बहुयज्वे । बहुयज्वानौ । अन्यतरस्यांग्रहणम् [१] बहुव्रीहौ 'वनोर चे' त्यस्यापि विकल्पार्थम् । तेन बहुपीवा । बहुपीवात्यादि ।

## अनुपसर्जनात् ॥१४॥

अधिकारोयम् 'यूनस्ति' रित्यभिव्याप्य । प्रधानेन तदन्त [२] विधिज्ञापनार्थमिदम् । कुम्भकारी । प्रत्ययग्रहणपरिभाषयाऽवयवादुत्पत्तिर्मा[३] भूत् । उत्पत्तौ त्ववयवस्यैव वृद्धिस्वरौ स्याताम् ।

## टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।१५।

---

(१) अन्यतरस्यांग्रहणाभावे 'ऽनउपधालोपिन' इतिसूत्र विध्यर्थं स्यात्ततश्च प्रकरणान्तरेण ङीपो विधाना 'द्वनोरचे' त्यनेन ऋन्नेभ्योङीबिति विहितङीप्सन्नियोगेन विधीयमानो रेफो बहुपीवरीत्यत्र न स्यात् किन्तु बहुपीव्नोति रूपं स्यात् ।

(२) तेन टिड्ढेत्यादौ प्रत्ययग्रहणपरिभाषया टाद्यन्ते लब्धे पुनस्तदन्तविधिना टाद्यन्तान्तं ग्राह्यम् । तेन कुरुचरी इति । 'कृद्ग्रहण' इति तु न तस्याः कृन्मात्रग्रहणविषयत्वात् । प्रधानेनेति किम् । बहुकुरुचरा ।

[३] प्रत्ययग्रहणइति-कारीशब्दादेव ङीप्स्यात्तथा सति तस्यैव वृद्धिस्वरौ स्यातामितितात्पर्यम् ।

अनुपसर्जनाट्टितः (१) प्रातिपदिकाड्ढाद्यन्ताच्च स्त्रियां ङीप्स्यात् । कुरुचरी । नदी । स्तनन्धयी । सौपर्णेयी । ऐन्द्री । ऊरुद्वयसी । ऊरुदघ्नी । जानुमात्री । चतुष्टयी । भावत्की । लावणिकी । तादृशी । इत्वरी । (नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्) । स्त्रैणी । पौंस्नी । शाक्तीकी । आढ्यङ्करणी । तरुणी । तलुनी । ताच्छीलिके णेऽ(२) प्यण्कार्यविज्ञानाच्चुरा शीलमस्याश्चौरी । अनुपसर्जनात्किम् । बहुकुरुचरा । वक्ष्यमाणेत्यत्र टक्जादित्वाट्टाब् बोध्यः ।

## यञश्च ।१६।

यञन्तात्स्त्रियां ङीप्स्यात् । अकारयकारलोपे गार्गी । अपत्य (३) ग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् ) । तेनेह न । द्वीपे भवा द्वैप्या ।

## प्राचां ष्फस्तद्धितः ।१७।

यञन्तात्स्त्रियां ष्फो वा स्यात्स च तद्धितः । 'यः प्रत्ययस्ये' ति षस्येत्त्वम् । आयनेयीत्यायन् । षित्त्वसामर्थ्यात् ष्फेणाक्तेऽपि स्त्रीत्वे षिद्गौरेति-ङीष् । गार्ग्यायणी । गार्गी ।

(४)

## सर्वत्र लोहितादिकतन्तेभ्यः ।१८।

लोहितादिभ्यः कतन्तेभ्यो यञन्तेभ्यः स्त्रियां नित्यं ष्फः स्यात् । लौहित्यायनी । कात्यायनी ।

---

(१) टित्वन्तु प्रातिपदिकस्य क्वचित्प्रत्ययकृतं, क्वचित्स्वतः, क्वचित्प्रकृतिकृतं भवत्यवयवधर्मस्य समुदाये उपचारात् । तत्र क्रमेणोदाहरणमुपरि द्रष्टव्यम् ।

(२) ज्ञापकलभ्यमिदम् । तत्प्रकारन्तु 'कार्म्मस्ताच्छील्ये' इत्यत्र वक्ष्यामः ।

(३) अत्रापत्यशब्देनापत्याधिकारभवो ग्राह्यः । तेनेह न; देवस्यापत्यं दैव्या । संहितापाठेकञ्स्वरपोऽयञश्चेत्यत्रायञश्चेति परिच्छिद्य प्रत्याख्यातमिदमाकरे ।

(४) लोहितात्शाकलः पूर्वः कतादुत्तर इष्यते ।।। पूर्वोत्तरौ तदन्तादी ष्फाणौ तत्र प्रयोजनम् । तेन शाकल्यायनीति सिद्धम् ।

## कौरव्यमाण्डूकाभ्याञ्च ॥१९॥

कौरव्यमाण्डूकाभ्यां ष्फः स्यात्स च तद्धितः । कुर्वादिभ्यो ण्येकौरव्यायणी । 'ढक् च मण्डूकादि' त्यणि । माण्डूकायनी । (आसुरेरुपसंख्यानम्) । आसुरायणी । (छश्च) (१) । आसुरिणा प्रोक्तः, आसुरीयः कल्पः ।

## वयसि प्रथमे ॥२०॥

प्रथमे वयसि वर्त्तमानाददन्तात्प्रातिपदिकान्न स्त्रियां ङीप्स्यात् । कुमारी । ( वयस्यचरम इति वक्तव्यम् ) (२) । वधूटी । चिरण्टी । प्राप्तयौवना स्त्र्यभिधीयते । अचरमइतिकिम् । वृद्धा । अन्तःकिम् । शिशुः । 'कन्यायाः कनीनचे, तिनिपातनात्कन्या ।

## द्विगोः ॥२१॥

अदन्ताद्द्विगोः स्त्रियां ङीप्स्यात् । त्रिलोकी ।

(३)

## अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥२३॥

अपरिमाणान्ताद्विस्ताद्यन्ताद् द्विगोर्ङीप्न स्यात्तद्धितलुकि ।

---

(१) शेषेऽर्थे छापवादे इञश्चेत्यणि प्रतिप्रसवः । इहैव भाष्ये लाघवार्थं पठितम् ।

(२) ये त्रीणि चत्वारि वा वयांसीच्छन्ति तन्नये वार्तिकम् । ये तूपचयापचयलक्षणे द्वे मन्यन्ते तन्मते नारम्भणीयम् ।

(३) परिमाणशब्देन परिच्छेदवाचकस्यैव ग्रहणम् । तथाच भाष्यम् । इमौ द्वौ प्रतिषेधौ-तयोरेकः शक्योऽवक्तुम् । कथम् । एवं वक्ष्यामि-परिमाणान्तात्तद्धितलुकि ङीब् भवतीति तन्नियमार्थं भविष्यति परिमाणान्तादेव तद्धितलुकि ङीम्नान्यतइति । ( तद्धितलुक्येवेति विपरीतनियमो न, लक्ष्यानुसारित्वाल्लक्षणस्य । तेन तद्धितलुकि समाहारे च द्व्याढकीति ङीब् भवति पञ्चाश्वेत्यादौ न भवति ) ततो विस्ताचितकम्बल्येभ्योनेति तद्धितलुकीत्येव । ( बिस्तादीनां परिमाणवाचित्वात्प्रतिषेधो विधेयः ।

पञ्चभिरश्वैः क्रीता, पञ्चाश्वा । (१) 'तेन क्रीत' मिति ठक् तस्याध्यर्द्धेति लुक् । द्वौ बिस्तौ पचति, द्विबिस्ता । द्व्याचिता । (२) द्विकम्बल्या (३) । परिमाणान्तात्तु द्व्याढकी (४) । तद्धितलुकि किम् समाहारे पञ्चाश्वी । (५)

## काण्डान्तात् क्षेत्रे ।२३।

क्षेत्रे वर्तमानात्काण्डान्ताद् द्विगोर्न ङीप्तद्धितलुकि । द्वे काण्डे प्रमाणमस्याः सा द्विकाण्डा क्षेत्रभक्तिः । 'प्रमाणे द्वयसजि' तिविहितस्य मात्रचः 'प्रमाणेलोर्द्विगोर्नित्य, मिति लुक् । क्षेत्रे किम् । द्विकाण्डी रज्जुः ।

## पुरुषात्प्रमाणेऽन्यतरस्याम् ।२४।

प्रमाणे यः (६) पुरुषशब्दस्तदन्ताद् द्विगोर्ङीब् वा स्यात् । द्वौ पुरुषौ प्रमाणमस्याः(७) सा द्विपुरुषी द्विपुरुषा वा परिखा । प्रमाणे किम् ? द्वाभ्यां पुरुषाभ्यां क्रीता, । द्विपुरुषा । तद्धितलुकीत्येव । समाहारे द्विपुरुषी ।

---

(१) नचात्र द्विगुलक्षणङीप्निषेधेऽपि ठग्लक्षणङीप्तु स्यादेवेति वाच्यम् । ठकोयोऽकारस्तदन्तादिति व्याख्यानात् ।

(२) सम्भवतीत्यादिना ठक् तस्याध्यर्द्धेति लुक् । आचितः शाकटो भारइत्येके । आचितो दश भाराः स्युरित्यन्ये ।

(३) द्वाभ्यां कम्बल्याभ्यां क्रीतेति विग्रहे पूर्ववत् ।

(४) आढकाचितपात्रात्खोऽन्यतरस्याम्. द्विगोष्ठंश्चेति खठनौ ताभ्यां मुक्ते प्राग्वतीयष्ठञ् तस्याध्यर्द्धेति लुक्-एतेन द्व्याचिता व्याख्याता ।

(५) षोडशहस्तप्रमाणदण्डवाचककाण्डशब्दस्यायामपरिच्छेदकत्वेन प्रमाणत्वम् । क्षेत्रइतिकाण्डान्तस्य विशेषणं यथास्यादित्येतदर्थमन्तग्रहणम् ।

(६) पञ्चारत्निः पुरुष इति शुल्वसूत्रादत्र पुरुषशब्दः प्रमाणे ।

(७) विग्रहे 'तदस्यपरिमाण' मिति विहितस्याद्ध्यर्द्धेति लुक् ।

## बहुव्रीहेरूधसो ङीष् ॥२५॥

ऊधोऽन्ताद्बहुव्रीहेः स्त्रियां ङीष् स्यात् । कुण्डोध्नी धेनुः । स्त्रियां किम् । महोधाः पर्जन्यः । इहानङपि न । तद्धितौ स्त्रियामित्युपसङ्ख्यानात् ।

## सङ्ख्याव्ययादेर्ङीप् ॥२६॥

संख्याव्ययादेरुधोऽन्ताद्बहुव्रीहेर्ङीप् स्यात् स्त्रियाम् । द्वे ऊधसी यस्याः सा द्व्यूध्नी । अतिगतमूधोऽस्याः सा अत्यूध्नी । बहुव्रीहेः किम् । ऊधोऽतिक्रान्ता, अत्यूधाः ।

## दामहायनान्ताच्च ॥२७॥

संख्यादे (१) दामान्ताद्धायनान्ताच्च बहुव्रीहेः स्त्रियां ङीप्स्यात् । द्वे दाम्नी यस्याः सा द्विदाम्नी वडवा । द्वौ हायनौ यस्या, द्विहायनी बाला । वयोवाचिनो(२) हायनस्य ग्रहणान्नेह-द्विहायना शाला । त्रिचतुर्भ्यामिति णत्वमपि वयोवचनस्यैव, तेनेह न, त्रिहायना शाला ।

## अन उपधालोपिनोऽन्यतरस्याम् ॥२८॥

उपधालोपिनोऽन्नन्ताद्बहुव्रीहेर्वा ङीप्स्यात् । बहुराज्ञी । बहुराजे । बहुराजानौ । पक्षे डाब्निषेधौ । उपधालोपिनः किम् । सुपर्वे । सुपर्वाणौ ।

(३)

## नित्यं संज्ञाछन्दसोः ॥२९॥

उपधालोपिनोऽन्नन्ताद्बहुव्रीहेर्नित्यं स्त्रियां ङीप् स्यात् संज्ञाछन्दसोः । सुराज्ञी नाम नगरी । समानमूर्द्ध्नी ।

---

(१) एकयोगनिर्दिष्टानाभप्येकदेशानुवृत्तिर्भवति, स्वरितत्वात् ।

(२) हायनो वयसि स्मृतः इति भाष्य वचनात् ।

(३) संज्ञाशब्दा नियतानुपूर्वीका अनादय, श्छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवादन उपधेत्येव सिद्धे, इदं व्यर्थमिति न शङ्क्यमुत्तरार्थत्वात् योगविभागस्तु व्यर्थ एव ।

## केवलमामकभागधेयपापापरसमानार्य्यकृतसुमंगलभेषजाच्च।३०।

केवलादिभ्यो नवभ्यः स्त्रियां ङीप् स्यात संज्ञाछन्दसोः। केवली। मामकी। भागधेयी (१)। पापी (२) उतापरीभ्यो मघवाविजिग्ये। आर्य्यकृती। सुमंगली। भेषजी (३)। अन्यत्र तु केवलेत्यादि। अणन्तादेव सिद्धे मामकग्रहणान्नियमार्थं-संज्ञाछन्दसोरेव मामकशब्दान्ङीप्। अन्यत्र तु मामिका बुद्धिः।

## रात्रेश्चाजसौ।३१।

छन्दसि रात्रिशब्दात्स्त्रियां ङीप् स्यात् न तु जस्विषये। या रात्री सृष्टा। लोके तु 'कृदिकारादि' ति ङीष्यन्तोदात्तः। ( अजसादिष्वति वक्तव्यम् ) तेनेह न-रात्रिम जानन्तः।

## अन्तर्वत्पतिवतोर्नुक्।३२।

गर्भिण्यां जीवद्भर्तृकायाञ्चान्तर्वत्पतिवच्छब्दौ निपात्येते। अनयोः स्त्रियां नुक् स्यात्। नान्तत्वान्ङाप्। अन्तर्वत्नी (४) गर्भिणी पतिवत्नी (५), जीवद्भर्तृका। अनयोः किम्। अन्तरस्त्यस्यां शालायां घटः। प्रथते त्वया पतिमती पृथिवी। अन्तर्वत्पतिवतोर्नुङ् मतुब्वत्वे निपातनात्। गर्भिण्यां जीवत्पत्याञ्च वा च छन्दसि नुग् भवेत्। छन्दसि-पतिवत्नी; पतिवती वा।

---

(१) पुंलिङ्गभागशब्दात्स्वार्थे धेयप्रत्ययः स्वार्थिकाश्च क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्तइति स्त्रीलिङ्गता।

(२) अभेदोपचारात्तद्वति वर्तमान पापशब्दोऽभिधेयलिङ्गः।

(३) भिषज इयमिति विग्रहे तस्येदमित्यण्। अतएव निपातनाददेरच एत्वम्।

(४) अन्तरस्त्यस्यां गर्भ इतिविग्रहे, अन्तः शब्दस्याधिकरणशक्तिप्रधानत्वादस्तिसामानाधिकरण्याभावादप्राप्तो मतुब् निपात्यते।

(५) अत्र मतुपो मस्य वत्वं निपात्यते।

## पत्युर्नो यज्ञसंयोगे ।३३।

पतिशब्दस्य स्त्रियां नकारान्तादेशः स्याद्यज्ञसंयोगे । वशिष्ठस्य पत्नी । तत्कर्तृकयज्ञस्य फलभोक्त्रीत्यर्थः । दम्पत्योः सहाधिकारात् । तु यजकस्य पत्नीति तूपमानाद्बाध्यम् । यज्ञसंयोगे किम् । ग्रामस्य पतिरियम् ।

## विभाषा सपूर्वस्य ।३४।

सपूर्वस्य पतिशब्दान्तस्य प्रातिपदिकस्य नो वा स्यात् । धनस्य पतिः, धनपतिः । धनपत्नी । अनुपसर्जनादित्यनुवृत्तमपि पत्यन्तस्य विशेषणम्, तेन दृढः पतिरस्याः सा दृढपत्नी । दृढपतिरित्यादौ बहुव्रीहावपि । सपूर्वस्य किम् । गवाम्पतिरियम् ।

## नित्यं सपत्न्यादिषु ।३५।

सपत्न्यादिषु नित्यन्नकारादेशः स्यात् । समानस्य सभावोऽपि निपात्यते । समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी ।

(१)

## पूतक्रतोरै च ।३६।

पूतक्रतुशब्दान् ङीप्स्यादैकारश्चान्तादेशः । ( पूतक्रत्वादीनां पुंयोग-प्रकरणे वचनम्) पूतक्रतोः स्त्री पूतक्रतायी । यया तु क्रतवः पूताः स्यात् । पूतक्रतुरेव सेत्यमरः ।

## वृषाकप्यग्निकुसितकुसिदानामुदात्तः ।३७।

वृषाकप्यादीनामुदात्त ऐ आदेशो ङीप् च । वृषाकपेः स्त्री वृषाकपायी । अग्नेः स्त्री, अग्नायी । कुसितायी । कुसिदायी ।

---

(१) अत्रादेशप्रकरणाद् भाष्यकृता शङ्कितं- लिङ्गसंनियोगे सर्वत्रागमादेशानां वचने लिङ्ग-लुकि ( पञ्च इन्द्राण्यो देवताऽस्येति पञ्चेन्द्र इत्यादौ ) तत्कृतं प्राप्नोति तस्य लौकिकदृष्टान्त ( तद्यथा देवदत्तयज्ञदत्ताभ्यामिदं कार्यङ्कर्तव्यम् । देवदत्तापाये यज्ञदत्तोऽपि न करोति ) सिद्धया 'सन्नियोगशिष्टा-नामन्यतरापाय उभयोरप्यपायः' इतिपरिभाषया समुद्धारः कृतः ।

## मनोरौ वा । ३८ ।

मनुशब्दस्यौकारादेश उदात्त ऐकारश्च ङीप् च । मनोः स्त्री, मनायी । मनावी । मनुः । सन्नियोगशिष्टत्वाद् ङीबपि न ।

## वर्णादनुदात्तात्तोपधात्तो नः । ३९ ।

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनाद् वा ङीप् तकारस्य नकारादेशश्च । एनी (१) एता । रोहिणी । रोहिता । त्र्येण्या शलल्येतिगृह्यम् (२) । अनुदात्तात्किम्-श्वेता । अतइत्येव । शितिः । (असितपलितयोः प्रतिषेधः) असिता । पलिता । (छन्दसि क्नमेके) । असिक्नयस्योषधेः । पलिक्नीरियुवतयो भवन्ति (पिशङ्गादुपसंख्यानम्) पिशङ्गी । 'लघावन्ते' इतिमध्योदात्तत्वान्ङीष् प्राप्तः ।

## अन्यतो ङीष् । ४० ।

तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकान्ङीष् स्यात् । सारङ्गी (३) कल्माषी । अनुदात्तान्तात्किम् । कृष्णा ।

## षिद्गौरादिभ्यश्च । ४१ ।

षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष् स्यात् । नर्तकी । गौरी । अनड्वाही । अनडुही (४) ।

---

(१) 'वर्णानां तणतिनितान्ताना' मितिफिट्सूत्रेणाद्युदात्तः 'अनुदात्तं पद' मितिशेषनिघातेनानुदात्तः ।

(२) त्रीणि एतानि यस्या इति बहुव्रीहिः ।

(३) लघावन्ते द्वयोश्च बह्वषो गुरुः । एकस्मिन् लघौ द्वयोश्च लघ्वोः परतो बह्वचूकस्य गुरुरुदात्तः स्यादि, ति मध्योदात्तः ।

(४) अनकारान्तत्वाज्जातिलक्षणस्य पुंयोगलक्षणस्य वा ङीषोऽप्राप्तिः 'स्त्रियां वें'ति वचनात् पाक्षिक आम् ।

## जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबरात् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥४२॥

जानपदादिभ्यो ङीष् स्याद् वृत्त्यादिष्वर्थेषु । जानपदी वृत्तिश्चेत् । अन्या जानपदी । उत्सादित्वादञन्तत्वेन ङिद्धीतिङीप्याद्युदात्तः । कुण्डी अमत्रञ्चेत् । कुण्डाऽन्या । गोणी आवपनञ्चेत् । गोणाऽन्या । स्थली अकृत्रिमा चेत्स्थलान्या । भाजी श्राणा चेत् । भाजाऽन्या । नागी स्थूला चेत् । नागान्या(१) । काली वर्णश्चेत् । कालाऽन्या । नीली अनाच्छादनञ्चेत् । नीलान्या(२) । कुशी अयोविकारश्चेत् । कुशान्या । कामुकी मैथुनेच्छावती चेत् । कामुकान्या । कबरी केशवेशश्चेत् । कबराऽन्या(३) । ( नीलादोषधौ ) । नीली ओषधिः । ( प्राणिनि च ) । नीली गौः । ( वा संज्ञायाम् ) नीली । नीला ।

## शोणात्प्राचाम् ।४३।

शोणशब्दाद्वा ङीष् स्यात् । शोणी । शोणा ।

## वोतो गुणवचनात् ।४४।

उकारान्ताद् गुणवाचिनः प्रातिपदिकात्स्त्रियां वा ङीष् स्यात् । पट्वी । पटुः । मृद्वी । मृदुः । उतः किम् । शुचिः । गुणेतिकिम् । आखुः । ( खरुसंयोगोपधप्रतिषेधः ) खरुरियं ब्राह्मणी । पाण्डुः ।

## बह्वादिभ्यश्च ।४५।

बह्वादिभ्यः स्त्रियां वा ङीष् स्यात् । बह्वी । बहुः ।

---

(१) गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम्' । सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् ।

(२) नील्या रक्ता शाटीत्यर्थः ।

(३) चित्रेत्यर्थः ।

## नित्यं छन्दसि ।४६।

बह्वादिभ्यः स्त्रियां नित्यं ङीष् स्याच्छन्दसि । बह्वी नामौषधी । नित्यग्रहणमुत्तरार्थम् ।

## भुवश्च ।४७।

भूप्रातिपदिकात्स्त्रियां ङीष् स्यात् । विभ्वी च । उत इत्यनुवर्त्तमानान्नेह-स्वयम्भूः ।

## पुंयोगादाख्यायाम् ।४८।

पुंयोगाद् या पुमाख्या स्त्रिया वर्त्तते ततो ङीष् । गोपस्य स्त्री गोपी । गणकी(१) । चतुर्भिः प्रकारैरतस्मिन्स इत्येतद् भवति । तास्थ्यात् । ताद्धर्म्यात् । तत्सामीप्यात् । तत्साहचर्यात । (गोपालकादीनां प्रतिषेधः) गोपालिका । अवदातशब्दस्तु विशुद्धवाची न तु वर्णवाची; तेन वर्णादनुदात्तादिति न ङीष् । आतश्च विशुद्धवाची । त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च ॥ एतच्छिवे विजानीहि ब्राह्मणाग्र्यस्य लक्षणम् । (सूर्याद्देवतायां चाब्वक्तव्यः) सूर्यस्य स्त्री सूर्या । देवतायां किम् ? सूरी ।

## इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्य्याणामानुक् ।४९।

इन्द्रादीनामानुगागमो ङीष् च स्त्रियाम् । इन्द्रादीनां मृडान्तानां मातुलाचार्य्ययोश्च पुंयोग एवेष्यते । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी । (हिमारण्ययोर्महत्त्वे (२))

---

(१) यथा—मञ्चा हसन्ति, गिरिर्दह्यते । अत्र मञ्चगिरिशब्दयोस्तत्स्थेषु प्रवृत्तिः, हसन्ति, दह्यते इति पदान्तरप्रयोगात् । जटिनं यान्तं ब्रह्मदत्तइत्याह; ब्रह्मदत्तवद्धर्मलाभात्तदारोपः । गङ्गायां घोषः । यष्टीः प्रवेशय । यद्यप्येतद् वर्णादनुदात्तेत्यत्र वक्तुमुचितं परं भाष्यानुरोधादत्रोक्तम् ।

(२) तद्योगे एवानयोः स्त्रीत्वमिति ।

महद्धिमं हिमानी । महदरण्यमरण्यानी । ( यवाद्दोषे ) दुष्टो यवो यवानी । ( यवनाल्लिप्याम् ) यवनानां लिपिर्यवनानी (१) । ( उपाध्यायमातुलाभ्यां वा ) उपाध्यायी । उपाध्यायानी * मातुली । मातुलानी ( मुद्गलाच्छन्दसि लिच्च ) रथीरभून्मुद्गलानी । ( आचार्यादणत्वं च ) आचार्यानी । ( अर्यक्षत्रियाभ्यां वा ) अर्या । अर्याणी । क्षत्रिया । क्षत्रियाणी ।

## क्रीतात्करणपूर्वात् । ५० ।

करणपूर्वात् क्रीतान्तादनुपसजनात् प्रातिपदिकात् स्त्रियां ङीष् स्यात् । वस्त्रक्रीती । मनसाक्रीती । करणपूर्वात्किम् (२) । अश्वेन क्रीता । सुक्रीता ।

(३)

## क्तादल्पाख्यायाम् । ५१ ।

करणपूर्वात्क्तान्तात् प्रातिपदिकात् स्त्रियां ङीष् स्यादल्पत्वे द्योत्ये । अभ्रैर्लिप्ता, अभ्रलिप्ती (४) द्यौः ।

## बहुव्रीहेश्चान्तोदात्तात् । ५२ ।

अन्तोदात्तात् क्तान्तादन्ताद्बहुव्रीहेः स्त्रियां ङीष् स्यात् । ऊरुभिन्नी (५) । ( जातिपूर्वादिति वक्तव्यम् ) तेन बहुनञ्सुकाल-

---

(१) लिप्यर्थकोऽत्र ङीष् । * मातुलान्नित्ये प्राप्ते, उपाध्यायादप्राप्ते विभाषेयम् ।

(२) करणं पूर्वं यस्मिन् प्रातिपदिके तदिदं करणपूर्वं तस्मादिति स्वीकारेणाश्वेन क्रीतेत्यत्र न । मनसाक्रीतीत्यत्र तु स्यादेव । 'मनसः संज्ञायाम्' मितितृतीयाया अलुकि करणपूर्वप्रातिपदिकत्वात् । 'कर्तृकरणे कृते' त्यत्र बहुलग्रहणात्क्वचित्सुबुत्पत्तौ समासे ततः पूर्वमेव टाबुत्पत्तावदन्तत्वाभावान्न ङीष् । तेन धनक्रीतेत्यपीत्युपपदमतिङिन्त्यत्र कैय्यटः ।

(३) अल्पाख्यायामिति समुदायोपाधिः, अल्पत्वं करणगतं क्रियागतं वा बोध्यम् ।

(४) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् क्तान्तत्वम् ।

(५) जातिकालसुखादिभ्योऽनाच्छादनादिति क्तान्तस्योदात्तत्वम् । जातिकालेत्यादिना निष्ठायाः परनिपातः ।

सुखादि (१) पूर्वान्न। बहुकृता। अकृता। सुकृतेत्यादि। [दन्ताज्जातस्य प्रतिषेधो वक्तव्यः] दन्तजाता। [पाणिगृहीतीत्यादीनां विशेषे] पाणिगृहीती भार्य्या चेत्। यस्या हि यथाकथञ्चित् पाणिगृह्यते, पाणिगृहीता सा (बहुलं तणि) तणीति संज्ञाछन्दसोर्ग्रहणम्। प्रवृद्धविलूनी। प्रवृद्धविलूना।

## अस्वाङ्गपूर्वपदाद्वा ॥५३॥

अस्वाङ्गपूर्वपदादन्तोदात्तात् क्तान्ताद्बहुव्रीहेः स्त्रियां वा ङीप् स्यात्। पलाण्डुभक्षिता। पलाण्डुभक्षिता। अन्तोदात्तात्किम्। वस्त्रच्छन्ना [२]। अनाच्छादनादित्युदात्तनिषेधः। अतएव पूर्वेणापि न।

## स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥५४॥

स्वाङ्गवाचि यदुपसर्जनमसंयोगोपधं तदन्तादन्तात्प्रातिपदिकात्स्त्रियां वा ङीप् स्यात्। चन्द्रमुखी। चन्द्रमुखा। असंयोगोपधात्किम्। सुगुल्फा। उपसर्जनात्किम् शिखा। स्वाङ्गं त्रिधाः–

[३] अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम्।

सुस्वेदा। द्रवत्वात्। सुज्ञाना। अमूर्त्तत्वात्। सुमुखा शाला। अप्राणिस्थत्वात्। सुशोफा। विकारजत्वात्।

### अतत्स्थं तत्र दृष्टं च।

सुकेशी। सुकेशा, वा रथ्या। अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्।

---

(१) सुखादिभ्यः कर्तृवेदनायामित्यत्र गणपाठे द्रष्टव्याः।

(२) बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरे शेषनिघातेनानुदात्तान्तोऽयम्।

(३) द्रवतीति, द्रवम्, न द्रवमद्रवम्। मूर्तिः (काठिन्यमसर्वगतद्रव्यपरिमाणं वा) यस्यास्तीति मूर्तिमत्। अप्राणिस्थं प्राणिनि कदाचिद् दृष्टम्। येन वस्तुना यथा प्राणी संबद्धस्तेन तज्जातीयेन वस्तुना तथा (प्राणिवत्) अप्राणी संबद्धश्चेत्तदपि स्वाङ्गमित्यर्थः।

( तेन चेत्तत्तथायुतम् )

सुस्तनी, सुस्तना वा प्रतिमा। प्राणिवत्प्राणिसदृशे स्थितत्वात्।

## नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।५५।

नासिकादि यदुपसर्जनं स्वाङ्गं तदन्ताद्वा ङीष् स्यात्। तुङ्गनासिकी। तुङ्गनासिका। क्षामोदरी। क्षामोदरा। बिम्बोष्ठी-बिम्बोष्ठेत्यादि (पुच्छाच्च) कल्याणपुच्छी। कल्याणपुच्छा। (कबरमणिविषशरेभ्यो नित्यम्)। कबरपुच्छी। मणिपुच्छी। विषपुच्छी। शरपुच्छी (उपमानात्पक्षाच्च पुच्छाच्च) उलूकपक्षी शाला। उलूकपुच्छी सेना।

## न क्रोडादिबह्वचः ।५६।

क्रोडादि बह्वच यत्स्वाङ्गमुपसर्जनन्तदन्तान् ङीप् न स्यात्। कल्याणक्रोडा। अश्वानामुरः क्रोडा। महाललाटा।

## सहनञ्विद्यमानपूर्वाच्च ।५७।

सहनञ्विद्यमानपूर्वादनुपसर्जनात्स्वाङ्गात् ङीष् न स्यात्। सकेशा। अकेशा। विद्यमानकेशा।

## नखमुखात्संज्ञायाम् ।५७।

नखमुखान्तात्प्रातिपदिकान्ङीष् न सञ्ज्ञायाम्। शूर्पणखा। गौरमुखा। सञ्ज्ञायांकिम्। ताम्रनखी।

## दीर्घजिह्वी च छन्दसि ।।५८।।

(१) आद्याभ्यां बहुवज्लक्षणनिषेधो बाध्यते, पुरस्तादपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति न्यायात्। अन्त्यैस्त्वसंयोगोपधादिति, मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरानिति न्यायात्। तेन सहनासिकेत्यादौ न।

छन्दसि विषये दीर्घजिह्वीति निपात्यते । संयोगोपधत्वादप्राप्तो ङीष् निपातनात् । दीर्घजिह्वी वै देवानां हव्यमलेट् ।

## दिक्पूर्वपदान्ङीप् ॥६०॥

दिक्पूर्वपदात्स्वाङ्गान्तात् प्रातिपदिकान्ङीषो वा ङीप् स्याच्छन्दसि । आद्युदात्तार्थमिदम् । प्राङ्मुखी । प्राङ्मुखा वा ।

## वाहः ।६१।

वाहन्तात्प्रातिपदिकान्ङीष् स्याच्छन्दसि । दित्यवाट् च मे । दित्यौही च मे ।

## सख्यशिश्वीति भाषायाम् ।६२।

सखी, अशिश्वीति च ङीषन्तं निपात्यते । सखी । न शिशुर्यस्याः सा अशिश्वी । इतिश्चार्थः । भाषायामिति छन्दोनिवृत्त्यर्थम् । तेन छन्दस्यपि आधेनवो धुनयन्तामशिश्वीः ।

## जातेरस्त्रीविषयादयोपधात् ।६३।

यत् स्त्रियान्न नियतमयोपधन्त्तो जातिवाचिनोऽदन्तात्प्रातिपदिकात् स्त्रियां ङीष् स्यात् । आकृतिग्रहणा जातिः(१) अवयवसंनिवेशविशेषव्यङ्ग्येत्यर्थः । कुक्कुटी । नटी । लिङ्गानाञ्च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या । असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनमन्तरेणापि सुग्रहत्यर्थः । वृषली । गोत्रञ्च चरणैः सह । अपत्यप्रत्ययान्तः शाखाध्येतृवाची च जातिकार्यं लभते ।

---

(१) भाष्येऽव्याख्याताऽपि कैयटादिरीत्या व्याख्यातेत्यवधेयम् । भिन्नक्रमार्थकचकारद्वयदानेन त्रीण्येव लक्षणानि प्रतिभान्ति । पूर्वलक्षणस्वीकारे ब्राह्मणादौ, रजतादौ चाव्याप्तिः स्यात् द्वितीयस्य पूर्वार्द्धमात्रस्वीकारे देवदत्तादिसंज्ञाशब्देष्वतिव्याप्तिः स्यात् । उत्तरार्द्धमात्रस्वीकारे शुक्लादिषु सा स्यात् । उक्तलक्षणद्वयाऽनाक्रान्तत्वात् तृतीयमाह-गोत्रञ्चेति ।

नाडायनी । कठी । बह्वृची । ब्राह्मणीत्यत्र तु ङीना ङीष् बाध्यते शार्ङ्गरवादिपाठात् । जातेःकिम । मुण्डा । अस्त्रीविषयात्किम् । बलाका । अयोपधात्किम् । क्षत्रिया । ( योपधप्रतिषेधे हयगवयमुकयमत्स्यमनुष्याणामप्रतिषेधः ) हयी । गवयी । मुकयी । मत्सी । मनुषी ।

## पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च । ६४ ।

पाकाद्युत्तरपदाज्जातिवाचिनः प्रातिपदिकात्स्त्रियां ङीष् (१) । ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोवाली । ( सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधः ) सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा । ( सम्भस्त्राजिनशणपिण्डेभ्यः फलात्प्रतिषेधः ) सम्फला । भस्त्राफला । अजिनफला । शणफला । पिण्डफला । ( श्वेताच्च ) । श्वेतफला ) । ( त्रेश्च ) । त्रिफला । [ मूलान्नञः ] । अमूला ।

(२)

## इतो मनुष्यजाते । ६५ ।

इकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियां ङीष् स्यात । दाक्षी । अवन्ती । [ ३ ] । [ इतो मनुष्यजातेरिञ उपसंख्यानम् ] सौतङ्गमी [ ४ ] । सुतङ्गमेन निर्वृत्तेत्यर्थः ।

---

( १ ) नियतस्त्रीविषयत्वात्पूर्वेणाप्राप्तौ वचनम् एवं वार्तिकेष्वपि बोध्यम् ।

( २ ) जातेरितिवर्तमाने पुनर्जातिग्रहणमयोपधनिवृत्त्यर्थम् , तेन औदमेयी, इत्यपि । दक्षस्यापत्यं स्त्री; दाक्षी । अतइञ् गोत्रलक्षणजातिः । अदन्तत्वाभावादप्राप्तौ ङीष् विधीयते ।

( ३ ) वृद्धेत्कोशलाजादाञ्ञ्यङ् इतिञ्यङ् । तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यः' इतिलुक् ।

( ४ ) सुतङ्गमशब्दाच्चातुरर्थिको 'वुञ्छण ; ति इञ् ।

## ऊङुतः । ६६ ।

उकारान्तान्मनुष्यजातिवाचिनः प्रातिपदिकात् स्त्रियामूङ् स्यात् । कुरूः (१) । ब्रह्मबन्धूः । अयोपधादित्येव । अध्वर्युर्ब्राह्मणी । (२) ( ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् ) अलाबूः । कर्कन्धूः । अप्राणिजातेरिति किम् । कृकवाकुः । अरज्ज्वादीनामिति किमर्थम् ? रज्जुः । हनुः ।

## बाह्वन्तात्संज्ञायाम् । ६७ ।

बाह्वन्तात्प्रातिपदिकात्स्त्रियामूङ् स्यात्संज्ञायाम् । भद्रबाहूः । संज्ञायां किम् । वृत्तबाहुः ।

## पङ्गोश्च । ६८ ।

पङ्गुप्रातिपदिकात्स्त्रियामूङ् स्यात् । (३) पङ्गूः । (४) श्वशुरस्योकाराकारलोपश्च । श्वश्रूः ।

(५)

## ऊरूत्तरपदादौपम्ये । ६९ ।

उपमानवाचिपूर्वपदादूरूत्तरपदात्प्रातिपदिकादूङ् स्यात् । करभोरूः (६) । औपम्ये किम् ? वृत्तोरुरियम् ।

---

(१) कुरुनादिभ्योण्यइतिण्यः, तस्यावन्तीत्यादिना लुक् । ततोऽनेनोङि रूपम् । अत्र दीर्घोच्चारणन्तु प्रश्लेषेणोकारद्वयविधानद्वारा शेषलक्षणस्य कपोनिवृत्त्यर्थम् एकदेशस्य पूर्वान्तवत्त्वात्स्वादयः ।

(२) अध्वर्युशाखाध्येत्रीत्यर्थः ।

(३) पङ्गुशब्दो गुणवाचीति पूर्वेणाप्राप्तः ।

(४) श्वशुरःश्वश्र्वेति निर्देशलभ्यमिदम् ; भाष्ये तु न दृश्यते । ऊङन्तादपि पूर्वान्तवद्भावेन सिद्धमिति ङ्याबितिसूत्रस्थभाष्यस्वरसस्त्वनूङन्तमव्युत्पन्नं बोधयति ।

(५) उपमीयतेऽनयेत्युपमा तद्भाव औपम्यमुपमानत्वमित्यर्थः ।

(६) करभवदूरू यस्याः सेत्यर्थः ।

(१) (२)

## संहितशफलक्षणवामादेश्च । ७० ।

संहिताद्यादेरूरूत्तरपदात्प्रातिपदिकात्स्त्रियामूङ् स्यात् । संहितौ श्लिष्टौ ऊरू यस्याः सा संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः । ( सहितसहाभ्याञ्च ) ( ३ ) सहितोरूः । सहोरूः ( ४ ) । अनौदम्यार्थमिदम् ।

## कद्रुकमण्डल्वोश्छन्दसि । ७१ ।

आभ्यामूङ् स्याच्छन्दसि विषये । कद्रूश्च वै सुपर्णी च । मा स्म कमण्डलूं शूद्राय दद्यात् । ( कद्रुकमण्डलुगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् ) गुग्गुलूः । मधूः । जतूः । पतयालूः ।

## सञ्ज्ञायाम् । ७२ ।

कद्रुकमण्डलुभ्यां सञ्ज्ञायां विषये ऊङ् स्यात् । अच्छन्दोऽर्थं वचनम् । कद्रूः । कमण्डलूः ।

(५)

## शाङ्गरवाद्यञो ङीन् । ७३ ।

---

( १ ) लक्षणशब्दो लक्षणवति बोध्यः ।

( २ ) वामशब्दः शोभनपर्य्यायः ।

( ३ ) सहितावूरू यस्या सेत्यर्थः । हितेन सह सहितौ, तावूरू यस्याः सेत्यर्थो वा ।

( ४ ) सह विद्यमानावूरूयस्याः सेत्यर्थः । अतिरमणीयाविति तात्पर्य्यम् । सहेतेइति सहौ तावूरू यस्याः सेत्यर्थो वा ।

( ५ ) अत्र शाङ्गरवादीति लुप्तषष्ठीकंपदम्, अञइतिषष्ठ्यन्तं तथाचाञो योऽकारस्तदन्तात् ङीन् । तत्फलं सूरसेनी इत्यत्र जातिलक्षणे ङीषि, अन्तोदात्तत्वम् । पुत्रशब्दस्याजातित्वेपि पाठसामर्थ्यान्ङीन्, पुत्री । अत्र वृत्तिकृता 'नृनरयोश्चेति गणवार्तिकत्वेनोपन्यस्तं तद् ( नृनराभ्यामञ् वचनम्, नुर्नरस्य वा धर्म्या नारी ) ति भाष्यविरोधादनार्षमित्युपेक्षितम् ।

शार्ङ्गरवादिभ्योऽञन्तेभ्यश्च प्रातिपदिकेभ्यः स्त्रियां ङीन् स्यात् शार्ङ्गरवी । कापटवी । वैदी । जातिलक्षणो ङीषनेन बाध्यते । जातेरित्यनुवृत्तेः । तेन पुंयोगे ङीषेव ।

## यङश्चाप् ।७४।

यङन्तात्स्त्रियां चाप् स्यात् । यङिति यङ्ष्यङोर्ग्रहणम् । आम्बष्ठ्या (१) कारीषगन्ध्या । ( षाच्च यञश्चाप् ) शार्कराक्ष्या (२) पौतिमाष्या ।

## आवट्याच्च ॥७५॥

आवट्यशब्दाच्चाप् स्यात् । अवटस्यापत्यं स्त्री आवट्या । गर्गादित्वा-द्यञि चाप् । प्राचान्तु—आवट्यायनी ।

## तद्धिताः ॥७६॥

अधिकारोऽयमापञ्चमपरिसमाप्तेः ।

## यूनस्तिः ।७७।

युवन्शब्दात्स्त्रियां तिस्स्यात् स च तद्धितः । युवतिः । लिङ्ग-विशिष्टपरिभाषयैव प्रातिपदिकत्वे सिद्धे तद्धितानुवृत्तिरुत्तरार्था । अनुपर्जनाधिकारान्नेह । बहवो युवानो यस्यां सा, बहुयुवा नगरी । यौतेश्शत्रन्तान् ङीपि—युवती ।

## अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।७८।

---

(१) अम्बष्ठशब्दादपत्ये 'वृद्धेत्कोशलाजादाञ्ञ्यङि'ति ञ्यङ् ततश्चाप् । करीषस्येव गन्धो यस्येति विग्रहे 'उपमानाच्चे'ति गन्धशब्दस्य समासान्त इच् । करीषगन्धिः, तस्यापत्यमित्यण्, तस्याणिञोरिति ष्यङ् ततश्चाप् ।

(२) शर्करा अक्षणी यस्य स शर्कराक्षः । तस्यापत्यमिति गर्गादित्वाद्यञि अनेन चापि च बोध्यम् । एवमग्रेऽपि ।

गोत्रेऽनार्षौ यावणिञौ विहितौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशस्स्यात् । निर्दिश्यमानपरिभाषयाऽणिञोरेव । कुमुदगन्धेरपत्यं स्त्री, कौमुदगन्ध्या । यङश्चाबिति चाप् । वराहस्याऽपत्यं स्त्री, वाराह्या । अनार्षयोःकिम् ! वाशिष्ठी । वैश्वामित्री । गुरूपोत्तमयोःकिम् । औपगवी । जातिलक्षणो ङीष् । गोत्रे किम् । अहिच्छत्रे जाता, आहिच्छत्री ।

## गोत्रावयवात् ।७९।

गोत्रत्वेनाभिमता या कुलाख्या ततो गोत्रे विहितयोरणिञोः ष्यङ् स्यात् । पुणिकस्याऽपत्यं स्त्री, पौणिक्या । भौणिक्या । दैवदत्या याज्ञदत्या ।

## क्रौड्यादिभ्यश्च ।८०।

क्रौड्यादिभ्यः ष्यङ् स्यात् । क्रौड्या । वाड्या । (सूत युवत्याम्) (१) सूत्या । ( भोजः क्षत्रिये ) भोज्या ।

## दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् ।८१।

दैवयज्ञ्यादिभ्यश्चतुर्भ्यः स्त्रियां ष्यङ् वा स्यात् । पक्षे 'इतोमनुष्यजाते' रिति ङीष् (२) दैवयज्ञ्या । दैवयज्ञी । इत्यादि ।

## समर्थानाम्प्रथमाद्वा ।८२।

---

( १ ) सूतशब्दः ष्यङं लभते युवत्यां वाच्यायाम् । सूत्याऽप्राप्तयौवना । जातेः, सूती । भोज्या, क्षत्रिया । भोजाऽन्या ।

( २ ) देवा यज्ञाः ( यष्टव्याः ) यस्य तस्यापत्य स्त्रीत्यर्थः । शुचिर्वृक्षो यस्य तदपत्यं स्त्रीत्यर्थः । सत्यमुग्रं यस्य त० । निपातनाद्विशेष्यस्य पूर्वनिपातो मुम् च । कण्ठे विद्धं यस्य त० । अमूर्द्धमस्तकेतिसप्तम्या अलुक् । काण्डेविद्धि, इतिपाठे तु काण्डेन विद्धस्त० कर्तृकरणेति समासः । निपातनात्पूर्वपदस्यैत्वम् । अणिञोरित्यत्र शास्त्रीयगोत्रग्रहणेऽगोत्रार्थमेतत् ।

पदत्रयमधिक्रियते 'प्राग्दिश' इति यावत् । सामर्थ्यम्परिनिष्ठितत्वम् । कृतवर्णानुपूर्वीकमिति भाष्यवचनात् । समर्थानां किम् । सौत्थितिः । प्रथमातिक्रम् ? उपगोरपत्यमित्यत्र षष्ठयन्तायथा स्यात्, प्रथमान्तान्मा भूत् । नह्यप्रथमादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यादिति प्रत्याख्यातमेतद् भाष्ये ।

## प्राग्दीव्यतोऽण् ।८३।

'तेनदीव्यती'त्यतः प्रागणधिक्रियते । उपगोरपत्यम्औपगवः । दीव्यदिति विकृतनिर्देशं कुर्वन् ज्ञापयत्याचार्यो भवत्येषा परिभाषा 'एकदेशविकृतमनन्यवदिति ।

## अश्वपत्यादिभ्यश्च ।८४।

अश्वपत्यादिभ्योऽण् स्यात्प्राग्दीव्यतीयेषु । ण्यापवादः । आश्वपतम् । गाणपतम् ।

## दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।८५।

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेषु ण्यः स्यात् । दैत्यः । आदित्यः । आदित्यस्यापि तथा 'हलोयमामि'ति यलोपात् । सैनापत्यः ( ण्यप्रकरणे वाङ्मतिपितृमतां छन्दस्युपसङ्ख्यानम् ) वाच्यः । मात्यः । पैतृमत्यः । ( पृथिव्या ञाञौ ) पार्थिवा । पार्थिवी । ( देवस्य यञञौ ) । दैव्यम् । दैवम् ( बहिषष्टिलोपो यञ् च ) ( बहिर्भवो बाह्यः । (ईकक्च) वाहीकः ( ईकञ् छन्दसि ) वाहीकमस्तु भद्रं वः । ( स्थाम्नोऽकारः ) अश्वत्थामः । ( लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः ) उडुलोम्नोऽपत्यमौडुलोमिः । औडुलोमी । उडुलोमाः । ( सर्वत्र गोरजादिप्रसङ्गे यत् ) गोरपत्यं गव्यः । गवि भवं, गव्यम् । अजादिप्रसङ्गे किम् । गोभ्यो हेतुभ्य आगतं, गोरूप्यम् । (१) ण्यादयोऽर्थविशेषलक्षणादपवादात्पूर्वविप्रतिषेधेन ) वानस्पत्यम् ।

(१) इष्टवाचिपरशब्दं मत्वा खण्डितमिदम्भाष्ये ।

## उत्सादिभ्योऽञ् ।८६।

उत्सादिभ्योऽञ् स्यात् प्राग्दीव्यतीयेषु । उत्सस्यापत्यमौत्सः । ( अञ् प्रकरणे ग्रीष्मादच्छन्दसि ) ग्रैष्मम् । अच्छन्दसि किम् । ग्रीष्मो देवताऽस्येति (१) ग्रैष्मी, त्रिष्टुप् ।

## स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।८७।

स्त्रीपुंसाभ्यां नञ्स्नञौ स्तो 'धान्यानां भवने' इत्यतः प्रागर्थेषु । स्त्रैणम् । पौंस्नम् (२) । 'स्त्रियाःपुंवदि' तिज्ञापकाद्भत्यर्थे न । तच्च योगापेक्षम् । तेन स्त्रीवदित्यपि ।

## *द्विगोर्लुगनपत्ये ।८८।

द्विगोर्निमित्तस्यानपत्यार्थस्य प्राग्दीव्यतीयस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः, पञ्चकपालः । तन्निमित्तस्य किम् । (३) पञ्चकपालस्येदं पाञ्चकपालं खण्डम् । अनपत्यार्थस्य किम् । द्वयोर्मित्रयोरपत्यं द्वैमित्रिः (४) । ( अजादिग्रहणञ्च कर्तव्यम् ) । तेनेह न पञ्चभ्यो गर्गेभ्यो हेतुभ्य आगतं, पञ्चरूप्यम् ।

---

( १ ) छन्दःशब्देनात्र वृत्तमुच्यते तस्मिन्नभिधेयेऽञः प्रतिषेधादणेव । अशेषार्थविवक्षायामौत्सर्गिकोऽण् शेषविवक्षायां तु 'वाय्वृतु' इत्यादिनाऽणेव. नह्यनेनाञा शैषिकस्याणो बाधइति । अर्थविशेषलक्षणानां तुल्यकक्षयाणामेव प्रत्ययानां ण्यादिभिर्बाधनात् । ऋत्वण् तु कक्ष्यान्तरप्राप्तत्वादञो बाधकः । तथाहि:-कालाट्ठञ्. अणोऽपवादः, तदपेवादः ऋत्वण् ।

( २ ) पुंसूशब्दात्स्नञि स्वादिष्विति पदत्वे संयोगान्तलोपः ।

( ३ ) समाहारे द्वन्द्वं कृत्वा ततस्तस्येदमित्यण् स च न द्विगोर्निमित्तमिति न लुक् ।

( ४ ) तद्धितार्थे अपत्ये समासोऽतइञ् द्विगोर्निमित्तम् ।

*द्विगोरितिषष्ठी, तेनोक्तोऽर्थः

## गोत्रेऽलुगचि ।८९।

अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्यालुक् (१) स्यात् । गर्गाणाञ्छात्रा गार्गीयाः (२) गोत्रेकिम् कौवलम (३)। अचि किम् । गर्गरूप्यम् । प्राग्दीव्यतीये किम्-गर्गेभ्यो हितं, गर्गीयम् । ( गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्वयेकयोरलुग्वक्तव्यः ) विदानामपत्यं युवा, वैदः । वैदौ । बैदस्य, वैदयोर्वाऽपत्यानि विदाः ।

## यूनि लुक् ।९०।

प्राग्दीव्यतीयेऽजादौ विवक्षिते युवप्रत्ययस्य लुक् स्यात् । ग्लुचुकस्यापत्यं, ग्लुचुकायनिः । प्राचामवृद्धादितिफिन् । ततो यून्यण् । ग्लौचुकायनः । तस्य छात्रोऽपि । अणो लुकि वृद्धत्वाभावाच्छो न ।

## फक्फिञोरन्यतरस्याम् ।९१।

युवार्थयोः फक्फिञोर्वा लुक् प्राग्दीव्यतीयेऽजादौ विवक्षिते । गर्गस्य गोत्रापत्यं, गार्ग्यस्तस्य युवापत्यं गार्ग्यायणः । यञिञोश्चेति फक्-तस्येमे गार्ग्यायणीयाः, गार्गीयाः । (फिञ) यस्कस्यापत्यं यास्कः । शिवादित्वादण् । तस्य युवाऽपत्यं, यास्कायनिः । 'अणोद्व्यचः' इति फिञ् । तस्येमे, यास्कायनीयाः । यास्कीयाः ।

## तस्यापत्यम् ।९२।

षष्ठ्यन्तात्कृतानुपूर्वीकात् प्रथमादपत्येऽर्थे यथाविहितम्प्रत्ययः स्यात् । उपगोरपत्यम्, औपगवः ।

---

(१) यस्कादिभ्य इत्यादिना प्राप्तस्य लुकोऽपवादः ।

(२) 'आपत्यस्य च' ति यलोपः ।

(३) कुवलीवदरीशब्दौ गौरादिङीषन्तावन्तोदात्तौ. ताभ्यां फले विकारेऽनुदात्तादेश्चेत्यञ् । तस्य 'फलेलुगि' तिप्राप्तस्य लुकस्तस्येदमित्यर्थविवक्षायां प्रतिषेधो न-तेनावृद्धत्वादणेव ।

(१) तस्येदमित्यपत्येऽपि बाधनार्थं कृतम्भवेत् ।
उत्सर्गः शेषएवासौ वृद्धान्यस्य प्रयोजनम् । भानोरपत्यं भानवः ।

(२)

## एको गोत्रे ॥९३॥

एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयति । परमप्रकृतिश्च सर्वप्रत्ययसाधारणीति तत एवोत्पत्तिः । उपगोरपत्यं, औपगवः । गर्गस्यापत्यं गार्ग्यः ।

## गोत्राद् यून्यस्त्रियाम् ॥९४॥

गोत्रप्रत्ययान्तादेव युवापत्ये प्रत्ययः स्यात् । गर्गस्य युवापत्यं गार्ग्यायणः । स्त्रियान्तु गार्गीत्येव ।

## अत इञ् ॥९५॥

अदन्तप्रकृतिकात् षष्ठ्यन्तादपत्येऽर्थे इञ् स्यात् । दक्षस्यापत्यं दाक्षिः । तपरकरणान्नेह-मधुपोऽपत्यं माधुपः । दाशरथइत्यादौ तु शेषत्वविवक्षयाऽण् ।

---

(१) सामान्ये सर्वविशेषान्तर्भावादपत्येऽपि तस्येदमित्येव सिद्धत्वात्तस्यापत्यमतइञित्येव कार्य्ये व्यर्थो योगविभाग इतिप्रश्नः । परिहरति, तस्येति; तस्येदमित्यनेन विधीयमानस्याणो बाधकश्छस्तस्य बाधनार्थम् । नन्वेकस्मिन्नर्थे प्राप्तयोर्बाध्यबाधकभावः कथमशैषिकेणानेन शैषिकस्य छस्य बाध इतिचेन्न योगविभागाभावेऽकारान्तादिप्रकृतिसम्बद्धस्यापत्यार्थस्योक्तत्वेऽपि प्रकृतिसामान्यसम्बद्धस्यानुक्तत्वात् तदाह—उत्सर्ग इति ।

(२) वृत्तौ तु 'गोत्रे' एकएवापत्यप्रत्ययःस्यात् । गोत्रे स्वैकोनसंख्यानां प्रत्ययानाम्परम्परा । यद्वा स्वद्व्यूनसंख्येभ्योऽनिष्टापत्तिः प्रसज्यते । स्वं गोत्रं तदपेक्षयैकोनसंख्यानाम्परम्परा । प्राप्नोति । यथा तृतीये द्वयो, श्चतुर्थे त्रयाणाम्, पञ्चमे चतुर्णाम् । यद्वा स्वं गोत्रं तदपेक्षया द्व्यूनसंख्येभ्यः प्रातिपदिकेभ्यः तृतीय एकस्मात्, चतुर्थे द्वाभ्याम्, पञ्चमे त्रिभ्यः, इत्यादि ।
अपत्यं पितुरेवस्यात्ततः प्राचामपीति च । मतभेदेन तद्व्यान्यै सूत्रमेतत्तथोत्तरम् । पितुरेवाऽपत्यमिति पक्षे उपगोस्तृतीये वाच्य औपगवादिञ् स्यात् । चतुर्थे मृतवंश औपगवेः फक् स्यात् । एवं फगिञोः परम्परा स्यात् । पितामहादीनामप्यपत्यमिति पक्षे तु तृतीये वाच्य उपगोरणोऽष्टे सिद्धेऽप्यणन्तादुपगोरपत्यापत्यमिति विवक्षायामिञपि स्यात् । पुनःफक्, पुनरिञेवमनिष्टाः प्रत्ययाः स्युरिति नियमार्थमिदमेवमुत्तरसूत्रेऽप्यूह्यमित्युक्तम् ।

## बाह्वादिभ्यश्च ॥९६॥

(१) (२)

बाह्वादिभ्योऽपत्येऽर्थे इञ् । बाहोरपत्यं बाहविः । औडुलोमिः ।

## सुधातुरकङ् च ॥९७॥

सुधातृशब्दादिञ्, अकङादेशश्चापत्ये । सौधातकिः । ( व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम् ) वैयासकिः । वारुडकिः (३) । नैषादकिः । चाण्डालकिः । बैम्बकिः ।

## गोत्रे कुञ्जादिभ्यश्चफञ् ॥९८॥

कुञ्जादिभ्यो गोत्रापत्ये च्फञ् स्यात् । कुञ्जस्य गोत्रापत्यं कौञ्जायन्यः । कौञ्जायन्यौ । कौञ्जायनाः । व्रातच्फञोरिति स्वार्थे ञ्यञ् । बहुत्वे तद्राजत्वाल्लुक । स्त्रियां–कौञ्जायनी । गोत्रे किम् ? कुञ्जस्यानन्तरापत्यं कौञ्जिः । गोत्रे इत्यधिक्रियते, शिवादिभ्य इति यावत् ।

---

( १ ) गोत्रत्वे प्रसिद्धानामेव बाह्वादीनां ग्रहणम्, तेनार्वाचीनसंज्ञाशब्देभ्यो यथाप्राप्तमणादयः । सम्बन्धिशब्दोद्देश्यकप्रत्यया अपि बाहुर्नाम कश्चित्, तस्यापत्यं बाहवः । एवं कुञ्जादिषु नडादिषु च । सम्बन्धिशब्दानां तत्तत्सम्बन्धोपाधिकानामनादित्वात्, तेन श्वशुरो नाम तत्सदृशेभ्यो न ( ❀ ) । सम्बन्धिशब्दानां तत्तत्सम्बन्धोपाधिकानामनादित्वात्, तेन श्वशुरो नाम कश्चित्, तस्यापत्यं श्वाशुरिः ।

( २ ) अनुक्तसमुच्चयार्थश्चकारस्तेन जाम्बिः, ऐन्द्रशर्मिः, इत्यादिसिद्धमिति काशिका ।

( ३ ) प्रकृत्यन्तराण्येवेति भाष्यम् । स्वार्थिककन्प्रत्ययान्तानीति तदर्थः । अन्यविकन्यायेन कन्रहितानां वाक्यमेव । कन्नन्तेभ्यो व्यासकादिभ्यो बाह्वादेराकृतिगणत्वादिञि सिद्धे, नार्थोऽनेन ।

---

❀ 'अभिव्यक्तपदार्था ये स्वतन्त्राः लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ।" इति हरिवचनात् ।

## नडादिभ्यः फक् ॥९९॥

नडादिभ्यः फक् स्यात्। गोत्रापत्ये नाडायनः। चारायणः। गोत्रे किम्? अनन्तरो नाडिः।

## हरितादिभ्योऽञः ।१००।

अञन्तेभ्यो हरितादिभ्यो युवापत्ये फक। इञोऽपवादः। हारितायनः। सामर्थ्याद्यू न्ययम्। बिदाद्यन्तर्गणोऽयम्।

## यञिञोश्च ।१०१।

गोत्रे यौ यञिञौ तदन्ताद्युवापत्ये फक्, गार्ग्यायणः। दाक्षायणः।

## शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ॥१०२॥

शरद्वदादिभ्यो गोत्रापत्ये फक्, भग्वादिष्वभिधेयेषु। अञिञोरपवादः। शारद्वतायनः; भार्गवश्चेत्। शारद्वतोऽन्यः। शौनकायनोवात्स्यश्चेत्। शौनकोन्यः। दार्भायणः, आग्रहायण श्चेत्। दार्भिरन्यः। पूर्वौ बिदादी।

## (१) द्रोणपर्वतजीवन्तादन्यतरस्याम् ।१०३।

द्रोणादिभ्यो गोत्रापत्ये वा फक् स्यात्। इञोऽपवादः। द्रोणायनः। द्रौणिः। पार्वतायनः। पार्वतिः। जैवन्तायनः। जैवन्तिः।

## (२) अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।१०४।

---

( १ ) अनादिः कश्चिद् द्रोणः, अश्वत्थाम्नि त्वध्यारोपः।

( १ ) विदस्यानन्तरापत्यं वैदिः, नात्र ऋष्यण् बाहूवादिकल्पनात्।

बिदादिभ्यो गोत्रापत्येऽञ्; ऋष्यनृषयस्तेभ्योऽनन्तरापत्ये। बैदः। और्वः। पौत्रः। दौहित्रः।

## गर्गादिभ्यो यञ् ।१०५।

गर्गादिभ्यो गोत्रापत्ये यञ् स्यात्। गार्ग्यः। वात्स्यः। बहुत्वे गर्गाः। 'यञञोश्चे' ति लुक्।

(१)
## मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ।१०६।

मधुबभ्रुभ्यां गोत्रापत्ये यञ्; ब्राह्मणकौशिकयोरभिधेययोः। माधव्यो ब्राह्मणः। माधवोऽन्यः। बाभ्रव्यः कौशिकश्चेत्। बाभ्रवोऽन्यः।

## कपिबोधादाङ्गिरसे ।१०७।

कपिबोधाभ्यां, गोत्रापत्ये यञ्, आङ्गिरसेऽभिधेये। काप्यः। बौध्यः। आङ्गिरसश्चेत्। कापेयः। बौधिरित्यन्यत्र।

## वतण्डाच्च ॥१०८॥

वतण्डाद्गोत्रापत्ये यञ् स्यादाङ्गिरसेऽभिधेये। वातण्ड्यः, आङ्गिरसश्चेत्। अनाङ्गिरसे तु गर्गादित्वात् शिवादित्वाच्च वातण्ड्यः। वातण्डः।

## लुक् स्त्रियाम् ॥१०९॥

वतण्डस्यावतण्डाद्यञ्प्रत्ययस्याङ्गिरस्यां स्त्रियां लुक् स्यात्। वतण्डस्या-

---

(१) बभ्रुशब्दस्य गर्गादित्वात् यञि सिद्धे कौशिके नियमार्थम्। लोहितादिकार्यार्थं गर्गादिषु पाठः।

ऽपत्यं स्त्री वतण्डी । शाङ्गरवादित्वान् ङीन् । अनाङ्गिरसे तु वातण्ड्यायनी । लोहितादिलक्षणः ष्फः । शिवाद्यणि तु वातण्डी । 'अणिञो'-रिति ष्यङ् न ऋषित्वात् ।

## अश्वादिभ्यः फञ् ।११०।

अश्वादिभ्यो गोत्रापत्ये फञ् स्यात् । आश्वायनः । अश्मायनः । ( पुंसि(१) जाते ) जात इति प्रकृतिविशेषणम् । जातायनः । स्त्रियां तु जातेयः २) ।

## भर्गात्त्रैगर्ते ॥१११॥

भर्गाद्गोत्रापत्ये फञ्, त्रैगर्तेऽभिधेये । भर्गस्य गोत्रापत्यं भार्गायणस्त्रैगर्तश्चेत् । भार्गिरन्यः ।

## शिवादिभ्योऽण् ॥११२॥ (३)

शिवादिभ्योऽपत्यार्थेऽण् स्यात् । शैवः । प्रौष्ठः ।

## अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।११३।

अवृद्धाभ्यो नदीनां मानुषीणां च नामभ्योऽपत्ये ऽण् । ढकोऽपवादः । यामुनः । ऐरावतः । शैक्षितः । अवृद्धाभ्यः किम् ? वासवदत्तेयः । नद्यादि किम् । सौपर्णेयः । तन्नामिकेति किम् । शोभनेयः ।

## ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥११४॥

( १ )-गणसूत्रमिदम् ।

( २ )-असति पुंसि लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तिः ।

( ३ )--गङ्गाशब्दोऽत्रापि पठ्यते, गाङ्गः । तिकादित्वात् फिञि गाङ्गायनिः, शुभ्रादित्वाड्ढकि गाङ्गेयः ।

एभ्योऽपत्येऽण् (१)। ऋषयो मन्त्रदर्शिनो वसिष्ठादयः, वासिष्ठः। वैश्वामित्रः। अन्धकेभ्यः—श्वाफल्कः। वृष्णिभ्यः—वासुदेवः। आनिरुद्धः। कुरुभ्यः—नाकुलः।

## मातुरुत्सङ्ख्यासंभद्रपूर्वायाः ॥११५॥

संख्यादिपूर्वस्य मातृशब्दस्योदादेशोऽण् प्रत्ययश्चापत्येऽर्थे। द्वैमातुरः। सांमातुरः। भाद्रमातुरः। उदादेशार्थं वचनम्। स्त्रीलिङ्गनिर्देशोऽर्थापेक्षस्तेन धान्यमातुर्न ग्रहणम्। संख्येत्यादि किम्। सौमात्रः। शुभ्रादित्वाद्, वैमात्रेयः॥

## कन्यायाः कनीन च।११६।

कन्याशब्दादपत्येऽण्, ढकोऽपवादस्तत्संनियोगेन च कनीनादेशः। कानीनो व्यासः कर्णश्च। अनूढाया अपत्यमित्यर्थः।

## विकर्णशुङ्गछगलाद् वत्सभरद्वाजात्रिषु।११७।

एभ्यो यथासंख्यं वत्साद्यपत्यविशेषेष्वण्। वैकर्णो वात्स्यः। वैकर्णिरन्यः। शौङ्गो भारद्वाजः। शौङ्गिरन्यः। छागल आत्रेयः। छागलिरन्यः। शुङ्गाशब्दं केचित् पठन्ति, ततो ढकं प्रत्युदाहरन्ति।

## पीलाया वा।११८।

तन्नामिकाणो बाधके "द्व्यचः" इति ढकि प्राप्ते पक्षेऽण्। पैलः। पैलेयः।

## ढक् च मण्डूकात्॥११९॥

(१)—मध्येऽपवादन्यायेन इञोऽपवादोऽयं, न तु ढकस्तेनात्रिशब्दात्परत्वाड्ढगिति हरदत्तः।

अपत्येऽर्थे ढक् चादण् वा, पक्षे इञ् । माण्डूकेयः । माण्डूकिः ।

## स्त्रीभ्यो ढक् ।१२०।

स्त्रीप्रत्ययान्तेभ्यो ऽपत्येऽर्थे ढक् । वैनतेयः । ( बडबाया वृषे वाच्ये ) वाडवेयो वृषः । ( अण् क्रुञ्चाकोकिलात् ) क्रौञ्चः । कौकिलः ( १ )।

## द्व्यचः ।१२१।

द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक् । तन्नामिकाणोऽपवादः । दत्ताया अपत्यं दात्तेयः । पार्थ इत्यत्र तस्येदमित्यण् ।

## इतश्चानिञः ॥१२२॥

इकारान्तादनिञन्तात् द्व्यचोऽपत्येऽर्थे ढक् । आत्रेयः । दौलेयः । इतः किम्? दाक्षिः । अनिञः किम्? दाक्षायणः । द्व्यच इत्येव । उदधेरपत्यमौदधः ॥

## शुभ्रादिभ्यश्च ।१२३।

ढक् स्यादपत्ये । यथायोगमिञादीनामपवादः । शौभ्रेयः । चकारस्त्वाकृतिगण ( २ ) त्वद्योतनार्थ इत्याहुः ॥

## विकर्णकुषीतकात्काश्यपे ।१२४।

आभ्यां काश्यपेऽपत्यविशेषे ढक् । वैकर्णेयः । कौषीतकेयः वैकर्णिः, कौषीतकिरन्यः ॥

---

( १ )--कोकिलाया अपत्य मित्यर्थः ।
( २ )--तत्फलन्तु पाण्डवेय इत्यादिसिद्धिः ।

## भ्रुवो वुक् च ।१२५।

भ्रूशब्दादपत्ये ढक्, तत्संनियोगेन च वुगागमः । भ्रौवेयः ।

## कल्याण्यादीनामिनङ् ।१२६।

एतेषामपत्ये ढक्, तत्संनियोगेन चेनङादेशः । काल्याणिनेयः । सौभागिनेयः । 'हृद्भगे'—त्युभयपदवृद्धिः ।

## कुलटाया वा ।१२७।

कुलटाया इनङादेशो वाऽपत्येऽर्थे ढक् च । आदेशमात्रस्य विकल्पः । ढक् तु पूर्वेण नित्यः । कौलटिनेयः । कौलटेयः । सती भिक्षुक्यत्र कुलटा । या तु स्वैरिणी, तस्याः "क्षुद्राभ्यो वे" तिपाक्षिको ढक् । कौलटेरः ।

## चटकाया ऐरक् ।१२८।

चटकाया अपत्ये ऐरक् स्यात । ( पुँल्लिङ्गनिर्देशः कर्तव्यः ) तेन लिङ्गविशिष्टपरिभाषया स्त्रियामपि चटकस्य चटकाया वा अपत्यं चाटकैरः ( स्त्रियामपत्ये लुग्वक्तव्यः ) तयोरपत्यं स्त्री चटका ।

## गोधाया ढ्रक् ।१२९।

गोधाशब्दादपत्ये ढ्रक् स्यात् । गौधेरः । शुभ्रादित्वाद् गौधेयोऽपि ।

## आरगुदीचाम् ।१३०।

गोधाया अपत्ये आरक् स्यादुदीचां मते । वचनसामर्थ्यात्समावेशो सिद्धे उदीचां ग्रहणं पूजार्थम् । गौधारः । रका सिद्धे आरग्वचन-मन्यतोऽपि विधानार्थम् । तेन जाडारः पाण्डारः ।

## क्षुद्राभ्यो वा ।१३१।

क्षुद्राभ्योऽपत्ये वा ढ्रक् स्यात् । अनियतपुंस्का अङ्गहीनाः शीलहीना श्च क्षुद्राः । काणेरः, काणेयः । दासेरः, दासेयः । पक्षे ढक् ।

## पितृष्वसुश्छण् ।१३२।

षष्ठीसमर्थात्पितृष्वसुरपत्ये छण् स्यात् । पैतृष्वस्रीयः ।

## ढकि लोपः ।१३३।

ढकि परे पितृष्वसुर्लोपः स्यादपत्ये । अतएव ज्ञापकाड्ढक् । पैतृष्वसेयः ।

## मातृष्वसुश्च ।१३४।

पितृष्वसुर्यदुक्तं मातृष्वसुरपि तत्स्यात् । मातृष्वस्रीयः । मातृष्वसेयः ।

## चतुष्पाद्भ्यो ढञ् ।१३५।

चतुष्पाद्वाचिभ्यो ऽपत्ये ढञ् । जाम्बेयः (१) । कामण्डलेयः ।

## गृष्ट्यादिभ्यश्च ।१३६।

गृष्ट्यादिभ्योऽपत्ये ढञ् स्यात् । गृष्ट्या अपत्यं गार्ष्टेयः । इतश्चानिञ इति ढक् न ( २ ) मैत्रेयः । मित्रयुः ऋषिः ।

## राजश्वशुराद्यत् ।१३७।

राजश्वशुराभ्यामपत्ये यत्स्यात्, अणिञोरपवादः । ( राज्ञोऽपत्ये

---

( १ )–ढे लोप इत्युकारलोपः ।

( २ ) केकयेति इयादेशे प्राप्ते दाण्डिनायनेत्यादिना निपातनाद् युलोपः ।

जातिग्रहणम् )। राजन्यो नाम जातिः। नेह राज्ञोऽपत्यं राजनः। श्वशुर्यः।

## क्षत्राद् घः ।१३८।

क्षत्राद् घः स्यात्। क्षत्रियः। जातावित्येव। क्षात्रिरन्यः।

## कुलात् खः ।१३९।

कुलादपत्ये खः। कुलीनः। तदन्तादपि, उत्तरत्रापूर्वपदादितिग्रहणात्। आढ्यकुलीनः।

## अपूर्वपदादन्यतरस्यां यड्ढकञौ ।१४०।

अपूर्वपदात्कुलादपत्ये यड्ढकञौ वास्तः; पक्षे खः। कुल्यः। कौलेयकः। कुलीनः। पदग्रहणाद् बहुच्पूर्वाद् भवत्येव। बहुकुल्यः।

## महाकुलादञ्खञौ ।१४१।

महाकुलादञ्खञौ वास्तः, पक्षे खः। माहाकुलः। माहाकुलीनः। महाकुलीनः।

## दुष्कुलाड्ढक् ।१४२।

दुष्कुलादपत्ये ढग्वा, पक्षे खः। दौष्कुलेयः। दुष्कुलीनः।

## स्वसुश्छः ।१४३।

स्वसुरपत्ये छः। स्वस्रीयः।

## भ्रातुर्व्यच्च ।१४४।

भ्रातुरपत्ये व्यत् स्याच्चाच्छः। भ्रातृव्यः। भ्रात्रीयः।

## व्यन्सपत्ने ।१४५।

भ्रातुरपत्ये व्यन्त्स्यात्समुदायेन वैरिणि वाच्ये । भ्रातृव्यश्शत्रुः । पाप्मना भ्रातृव्येणेतितूपचारात्सिद्धम् (१) ।

## रेवत्यादिभ्य ष्ठक् ।१४६।

रेवत्यादिभ्यो ऽपत्ये ठक् स्यात् । रैवतिकः । आश्वपालिकः ।

## गोत्रस्त्रियाः कुत्सने ण च ।।१४७।।

गोत्रस्त्रीवाचकात्कुत्सनापत्ये णश्चाट्ठक्, सामर्थ्याद्यूनि[2] । गार्ग्या अपत्यं गार्ग्यो गार्गिको वा जाल्मः । गोत्रमिति किम् ? कारिकेयो जाल्मः । स्त्रियाः किम् ? औपगविर्जाल्मः । कुत्सने किम् ? गार्गेयो माणवकः ।

## वृद्धाट्ठक् सौवीरेषु बहुलम् ।१४८।

सौवीरगोत्राद् वृद्धसंज्ञकात् यूनि कुत्सनापत्ये ठग्बहुलं स्यात् । भागवित्तेरपत्यं भागवित्तिकः । भागवित्तायनः ।

## फेश्छ च ।१४९।

फिञन्तात्सौवीरगोत्रात्कुत्सनापत्ये छस्स्याच्चाट्ठक् । यामुन्दायनेरपत्यं यामुन्दायनीयः । यामुन्दायनिकः । कुत्ने किम् । यामुन्दायनिः । 'ण्यक्षत्रियार्षे' तिऔत्सर्गिकस्याणो लुक् । सौवीरेति किम् । तैकायनिः ।

---

१--भ्रातृव्य इव भ्रातृव्यः ।

२--णित्करणं ग्लुचुकस्यापत्यं स्त्रीग्लुचुकायनी, तस्या अपत्यमित्यर्थे पुंवद्भावेनो ग्लौचुकायनः, इतिवृद्धिर्यथा स्यात् ।

## फाण्टाहृतिमिमताभ्यां णफिञौ ।१५०।

सौवीरविषयाभ्यां फाण्टाहृतिमिमताभ्यामपत्ये णफिञौ स्तः। अल्पाच्तरत्वेऽप्यपूर्वनिपातो यथासंख्यव्यभिचारार्थम्, इति वृत्तिः। भाष्ये यथासंख्यमेव[1]। फाण्टाहृतः, मैमतायनिः। वृत्तिकारमते तु फाण्टाहृतायनिः, मैमत इत्यपि।

## कुर्वादिभ्यो ण्यः ॥१५१॥

कुर्वादिभ्योऽपत्ये ण्यः स्यात्। कौरव्या ब्राह्मणाः। (सम्राजः क्षत्रिये) ग. वा.। साम्राज्यः क्षत्रियः। साम्राजोऽन्यः। (वामरथस्य[2] कण्वादिवत्स्वरवर्जम्) वामरथस्य छात्रा वामरथाः[3]। कण्वादिभ्यो गोत्र इत्यण्।

## सेनान्तलक्षणकारिभ्यश्च ॥१५२॥

सेनान्ताल्लक्षणशब्दात् कारिवाचिभ्यश्चापत्ये ण्यः स्यात्।
हरिषेणस्यापत्यं हारिषेण्यः[4]। लक्षणस्यापत्यं लाक्षण्यः।
कारिशब्देन शिल्पिनस्तन्तुवायादय उच्यन्ते, तन्तुवायस्यापत्यं तान्तुवाय्यः। कौम्भकार्यः।

---

[१] यथासङ्ख्याभावे मिमतशब्दे णिस्वस्य फलसत्वे तदनिर्दिश्य फाण्टाहृता भार्या अस्येति फाण्टाहृताभार्य इत्यत्र पुंवद्भावाभावस्य फलत्वेनोपदर्शनात्।

[२] ण्यप्रत्ययान्तस्येत्यर्थः।

[३] कण्वादिभ्यो गोत्रे इत्यण्, आपत्यस्येति यलोपः। स्वरवर्जमितिवचनेन प्रत्ययाश्रयकार्यस्याप्यतिदेशाद् बहुषु यञञोश्चेति लुक् वामरथाः। सङ्घाङ्कलक्षणेत्यण् च। वामरथानां सङ्घः, वामरथः।

[४] एति संज्ञायामिति षत्वम्। षत्वणत्वयोरसिद्धत्वात्सेन एव।

## उदीचामिञ् ।१५३।

सेनान्तलक्षणकारिभ्योऽपत्ये उदीचामिञ् स्यात् । हारिषेणिः। लाक्षणिः। तान्तुवायिः । ( तक्ष्णोऽण्वचनम् ) तक्षन् शब्दाच्छिवादित्वादणे ऽञ् बाध्यते । न तु ण्य : । तक्ष्णोऽपत्यं ताक्ष्णः । ताक्षण्यः ।

## तिकादिभ्यः फिञ् ।१५४।

तिकादिभ्योऽपत्ये फिञ् स्यात् । तैकायनिः । तैकवायनिः ।

## कौसल्यकार्मार्याभ्यां च। १५५।

कोसलकर्माराभ्यामपत्ये फिञ् स्यात । तत्सन्नियोगेनानयोर्युगेन-पात्यते । तथाचोक्तम् । ( फिञ् प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् चादिष्टस्य ) कौसल्यायनिः(२) । कार्मार्यायणिः । दागव्यायनिः । छाग्यायनिः । वार्ष्यायणिः ।

## अणो द्व्यचः ।१५६।

अणन्ताद् द्व्यचोऽपत्ये फिञ् स्यात् । कार्त्रायणिः । अणः किम् । दाक्षायणः । द्व्यचः किम् ? औपगविः ( त्यदादीनां फिञ् वा ) त्यादायनिः । त्यादः ।

## उदीचां वृद्धादगोत्रात् ।१५७।

---

१—भाष्ये उदीचां वा ण्य इति योगं विधाय ण्येन मुक्ते यो यतः प्राप्नोति स ततो भविष्यति इति वचनात् । मध्येपवादन्यायोऽत्रमूलम् ।

२—सूत्रे क्वचित् "कौशलेति" पाठः । तत्र कुशलस्यापत्यमिति विग्रहीतव्यम् ।

अगोत्रप्रत्ययान्ताद् वृद्धसंज्ञकादपत्ये फिञ् वा स्यात्। आम्रगुप्तायनिः। आम्रगुप्तिः। वृद्धेभ्यः कारिभ्योऽपि परत्वात्। नापितायनिः। वृद्धात् किम्? दाक्षिः। अगोत्रात् किम्? औपगविः।

## वाकिनादीनां कुक् च ।१५८।

वाकिनादिभ्योऽपत्ये वा फिञ्। तत्संनियोगेन कुक् च। वाकिनकायनिः। वाकिनिः।

## पुत्रान्तादन्यतरस्याम् ।१५९।

पुत्रान्तादपत्ये वा फिञ् स्यात्। कुक् च वा। गार्गीपुत्रकायणिः। गार्गीपुत्रायणिः। गार्गीपुत्रिः।

## प्राचामवृद्धात्फिन्बहुलम् ।१६०।

अवृद्धादपत्ये प्राचां फिन् बहुलं स्यात्। ग्लुचुकायनिः। ग्लौचुकिः। अवृद्धात्किम्? राजदन्तिः।

## मनोर्जातावञ्यतौ षुक् च ।।१६१।।

मनोरञ्यतौ स्तः, षुक् चागमः; समुदायेन जातावभिधेयायाम्। मानुषः। मनुष्यः। अपत्यार्थस्य भावेन बहुवचने न लुक् मानुषाः। अपत्यविवक्षायां तदणैव भाव्यम्। मानवी प्रजा।

अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः।
नकारस्य च मूर्द्धन्यस्तेन सिद्ध्यति माणवः॥

## अपत्यम्पौत्रप्रभृति गोत्रम् ।१६२।

पौत्रप्रभृत्यपत्यं गोत्रसंज्ञं स्यात्। गर्गस्य पौत्रप्रभृत्यपत्यं गार्ग्यः।

पौत्रप्रभृति किम् ? अनन्तरे तु गार्गिः । ( जीवद्वंश्यञ्च कुत्सितम् ) गार्ग्यस्त्वमसि जाल्म ! (१)

## जीवति तु वंश्ये युवा (२) ।१६३।

वंश्ये ( पित्रादौ ) जीवति सति पौत्रप्रभृतेरपत्यं युवसंज्ञं स्यात् । गर्गस्य पित्रादौ जीवति पौत्रप्रभृत्यपत्यं गार्ग्यायणः । ( भ्रातरि च ज्येष्ठे गार्ग्ये जीवति कनीयान् गार्ग्यायणः । (३)
( वृद्धस्य च पूजायाम् ) तत्रभवन्तो गार्ग्यायणाः (४)

## वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ।१६४।

भ्रातुरन्यस्मिन्स्थविरतरे सपिण्डे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसंज्ञं वा स्यात् । स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे वा जीवति गर्गस्यापत्यं गार्ग्यायणो गार्ग्यो वा । जीवतिग्रहणान् मृते मृतो वा गार्ग्य इत्येव । स्थविरेति किम् ? स्थानवयोन्यूने गार्ग्य एव ।

## जनपदशब्दात् क्षत्रियादञ् ।१६५।

क्षत्रियवाचिनो जनपदशब्दादपत्येऽञ् स्यात् । पञ्चालस्यापत्यं

---

(१) यः पितृमान् स्वतन्त्रो भवति स एवमुच्यते ।

(२) तु शब्दोऽवधारणार्थस्तेन युवैव संज्ञा भवति नतु गोत्रम् ।

(३) अवंश्यार्थमिदम् । अकारणत्वाद् भ्राता न वंश्यः । ज्यायसि भ्रातरि जीवति कनीयान् युवसंज्ञः स्यात् ।

(४) युवसंज्ञा विधानसामर्थ्यात् स्वार्थे युवप्रत्ययः । युवत्वं लोके ईप्सितं पूजेत्युपचर्यते ।

पाञ्चालः । वैदेहः । जनपदेति किम् ? द्रुह्योरपत्यं द्रौह्यकः । क्षत्रियादिति किम् ? ब्राह्मणस्य पञ्चालस्यापत्यं पाञ्चालिः । ( क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ) पञ्चालानां राजा पाञ्चालः । पूरोरण वक्तव्यः ) । पौरवः । ( पाण्डोर्ड्यण् वक्तव्यः ) पाण्ड्यः ।

## साल्वेयगान्धारिभ्यां च ।१६६।

क्षत्रियावचिजनपदशब्दाभ्यां साल्वेयगान्धारिभ्यामपत्ये ऽञ्स्यात् । वृद्धेदिति ञ्यङोऽपवादः । साल्वेयस्यापत्यं साल्वेयः । गान्धारः । राजन्यप्येवम् ।

## द्व्यञ्मगधकलिङ्गसूरमसादण् ॥१६७॥

क्षत्रियावचिजनपदशब्देभ्यो द्व्यजादिभ्योऽपत्ये ऽण् स्यात् । आङ्गः । मागधः । कालिङ्गः । सौरमसः । राजन्यप्येवम् ।

## वृद्धेत्कोसलाजादाञ्ञ्यङ् ॥१६८॥

वृद्धादिकारान्तात्कोसलाजादाभ्यां चापत्ये ञ्यङ् स्यात् । अञोऽपवादः। आम्बष्ठ्यः । आवन्त्यः । कौसल्यः । आजाद्यः । इदितितपरकरणान्नेह । कुमारी । क्षत्रियवाची जनपदशब्दः,तस्यापत्यं कौमारः ।

## कुरुनादिभ्यो ण्यः ।१६९।

क्षत्रियवाचिजनपदशब्देभ्यः कुरो नादिभ्यश्च ण्यः स्यादपत्ये । अणोऽपवादः । कौरव्यः १) । नैषध्यः (२) । राजन्यपि,कौरव्यो राजा ।

---

( १ )--द्व्यज्लक्षणोऽण् न ।
( २ )--जनपदेति नादिभ्यो ऽञ् प्राप्तः ॥

## साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।१७०।

क्षत्रियवाचिजनपदशब्देभ्यस्साल्वावयवादिभ्योऽपत्ये इञ् । अणोऽपवादः । उदुम्बरस्यापत्यमौदुम्बरिः । प्रात्यग्रथिः । कालकूटिः । आश्मकिः । राजन्यप्येवम् ।

उदुम्बरास्तिलखलाः, मद्रकारा युगन्धराः ।
भूलिङ्गाः शरदण्डाश्च साल्वावयवसंज्ञिताः ॥

## ते तद्राजाः ।१७१।

अञादयस्तद्राजसंज्ञकास्स्युः । पाञ्चालः । पाञ्चालौ । पञ्चालाः । तद्राजस्य बहुष्विति लुक् ।

## कम्बोजाल्लुक् ।१७२।

कम्बोजात्परस्य तद्राजस्य लुक् स्यात् । कम्बोजस्यापत्यं कम्बोजः । ( कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् ) चोलः । शकः । यवनः । केरलः ।

## स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।१७३।

अवन्तिकुन्तिकुरुभ्यः परस्य तद्राजस्य लुक् स्यात्स्त्रियाम् । अवन्ती(१) । कुन्ती । कुरूः । स्त्रियां किम् ? आवन्त्यः । कौन्त्यः । कौरव्यः ।

## अतश्च ॥१७४॥

---

( १ )—आभ्यां ञ्यङो लुक्, उत्तरत्र च ण्यस्य ।

तद्राजसंज्ञकस्याकारस्य स्त्रियां लुक् स्यात् । शूरसेनी । अव-न्त्यादिभ्यो लुग्वचनान्नेह तदन्तविधिः । तेनेह न । आम्बष्ठ्या । सौवीर्या । यौधेयादि (१) प्रतिषेधो ज्ञापकः पर्श्वादिलुकः, तेन (२) पर्शूः । रक्षाः (३) । आसुरी (४)

## न प्राच्यभर्गादियौधेयादिभ्यः ।१७५।

प्राच्येभ्यो यौधेयादिभ्यश्च परस्य तद्राजस्य न लुक् । अतश्चेति प्राप्तः । पाञ्चाली । भार्गी । यौधेयी (५) ॥

---o---

## इति चतुर्थाध्यायस्य प्रथमः पादः ॥

---

(१)–यदि पाश्चमिकस्य पार्श्वादियौधेयादिविहितस्य तद्राजस्यातश्चेति लुङ् न स्यात्तदा यौधेयादिभ्यो विहितस्याञो लुक्प्रतिषेधविधानमनर्थकमेव स्यादित्यर्थः ।

(२) पर्शोरपत्यं स्त्री इति विग्रहे द्व्यञ्मगधेत्यण्, तस्यातश्चेति लुक्, पर्श्वादियौधेयादि-भ्योऽणञाविति स्वार्थेऽण्; तस्याप्यनेन लुक्, तत 'ऊङुत' इत्यूङ् ।

(३) रक्षसः क्षत्रियविशेषस्यापत्यं स्त्रीति पूर्ववद् लुकि कृते स्त्रिया अभिधायकात् सुलोपे दीर्घत्वे च रक्षाः ।

(४) असुरशब्दात् स्त्रियामपत्ये ऽञो लुक्' ततः स्वार्थिकः पर्श्वाद्यण्, तस्याप्यतश्चेति लुक् । जातिलक्षणो ङीप् ।

(५) युधाया अपत्यं स्त्री 'द्व्यचः' इति ढक्, ततः स्वार्थे पर्श्वादियौधेयादिभ्योऽणिञावित्यञ्, तस्य लुकि प्रतिषिद्धे ऽञन्तलक्षणे ङीनि कृते यौधेयीति भवति, यदि त्वञो लुक् स्यात्तदा ढलक्षणे ङीपि सति 'अनुदात्तस्य च यत्रोदात्तलोप' इत्यनेनोदात्तनिवृत्तिस्वरः स्यात् ।

# अथ चतुर्थाध्यायस्य द्वितीयः पादः ।

## तेन रक्तं रागात्[1] ।१।

तृतीयान्ताद्रागवाचिनः प्रातिपदिकाद्रक्तमित्यर्थेऽण् स्यात् । कषायेण रक्तं वस्त्रं काषायम् । रागात्किम्[2] ? देवदत्तेन रक्तं वस्त्रम् ।

## लाक्षारोचनाट्ठक् ।२।

तृतीयान्ताभ्यां रागवाचिभ्यां लाक्षारोचनाभ्यां रक्तेऽर्थे ठक् स्यात् । लाक्षिकम् । रौचनिकम् । ( ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् ) शाकलिकम् । कार्दमिकम् । अणपीष्यते, इति वृत्तिकारः । शाकलम् । कार्दमम् । ( नील्या अन् ) नील्या रक्तं नीलम् । ( पीतात् [३] कन् ) पीतेन रक्तं वस्त्रं पीतकम् । ( हरिद्रामहारजनाभ्यामञ् ) हारिद्रम् । माहाराजनम् । हारिद्रौ कुक्कुटस्य पादावित्यादौ तूपमानाद् बोध्यम् ।

---

(१) स्वरूपग्रहणन्तु न, उत्तरत्र लाक्षादीनां रागग्रहणेन विशेषणात् ।

(२) रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाधिग्रहणमनर्थकं, नह्यरागादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यादित्यनभिधानाच्चत उत्पत्तिर्नभविष्यतीति, भा० । रक्तादीनां शब्दानां योर्थः स यदि लौकिके प्रयोगे प्रत्ययेनाभिधीयते तदा प्रत्ययोनान्यदेति तदर्थः ।

(३) पीतकशब्दो वा प्रकृत्यन्तरं तस्माल्लुग्वक्तव्यः ।

## नक्षत्रेण युक्तः कालः ।३।

तृतीयान्तान्नक्षत्रवाचिनः प्रातिपदिकाद्युक्तः काल इत्येतस्मिन्नर्थेऽण् स्यात् । पुष्येण युक्तमहः पौषम् । (१) पुष्यसमीपगते चन्द्रमसि पुष्यशब्दो वर्तते तेन कालो विशिष्यते ।

( २ )

## लुबविशेषे । ४ ।

पूर्वेण विहितस्य लुप् स्यादविशेषे गम्यमाने । अद्य । पुष्यः । अविशेषे किम् ? पौषमहः (३)

## सञ्ज्ञायां श्रवणाश्वत्थाभ्यम् । ५ ।

तृतीयासमर्थाभ्यां श्रवणाश्वत्थाभ्यां युक्तः काल इत्यर्थे विहितस्य प्रत्ययस्य लुप् स्यात्, संज्ञायाङ्गम्यमानायां । श्रवणा रात्रिः । अश्वत्थो मुहूर्त्तः । संज्ञायां किम् ? श्रावणी । आश्वत्थो ।

## द्वन्द्वाच्छः ॥ ६ ॥

---

( १ )--मुख्यार्थासम्भवे गोणस्याश्रयणादिति भावः। मघादयश्शब्दा अपरित्यक्तस्वलिङ्गसंख्या एव चन्द्रमसि वर्त्तन्ते यथा मञ्चादयः, मञ्चान् स्त्रियः पश्येति । तेन युक्तवद्भावेऽपि दोषाभावः । कै० । चैत्रीतिनिर्देशेन

( २ )--कथन्तर्हि पुष्ययुक्ता पौषी पौर्णमासीति । विभाषा फाल्गुनीति सूत्रे पौर्णमास्यान्न लुबिति ज्ञापितत्वात् । श्रवणशब्दातु अतएव ज्ञापकाल्लुब्, युक्तवद्भावाभावौ, निपातनानामबाधकत्वात् श्रावणीत्यपि ।

( ३ )--यदाहोरात्रस्यावान्तररात्राद्यवयवविशेषाविवक्षा तदा लुप् । विशेषविवक्षायान्तु श्रवणम् ।

तृतीयान्तान्नक्षत्रद्वन्द्वाद्युक्ते काले छः स्यात् । राधानुराधीया । तिष्यपुनर्वसवीयम् । अविशेषेऽपि अन्न तिष्यपुनर्वसवीयम् ।

(१)

## दृष्टं साम ।७।

तृतीयासमर्थात् दृष्टं सामेत्यस्मिन्नर्थे ऽण् स्यात् । वशिष्ठेन दृष्टं साम वाशिष्ठम् । (कले ढक्) कलिना दृष्टं साम कालेयम् । (अपर आह सर्वत्राग्निकलिभ्यां ढक्) अग्निना दृष्टं साम आग्नेयम् । कालेयम् । अग्नौ भवमाग्नेयम् । कालेयम् । अग्नेरागतमाग्नेयम् । कालेयम् । अग्निर्देवता अस्य आग्नेयम् । कालेयम् (दृष्टे (२) सामनि जाते वा द्विरण् डिद्वा वक्तव्यः) उशनसा दृष्टं साम औशनसं औशनं वा । शतभिषजि जातः शातभिषजः । शातभिषः । (तीयादीकक्) द्वैतीयीकः । ( विद्यायाः) द्वितीया विद्या । ( गोत्रादङ्कवदिष्यते ) (३) औपगवकम् । कापटवकम् । गोत्रचरणेति वुञ् ॥

## वामदेवाड्ड्यड्ड्यौ । ८ ।

तृतीयान्ताद्वामदेवाद् दृष्टे सामनि ड्यड्ड्यौ स्तः । वामदेवेन दृष्टं साम वामदेव्यम् ।

---

१-यस्य साम्नो विशिष्टकार्यविषये विनियोगो येन ज्ञातस्तत्तेन दृष्टमित्युच्यते ।
२-दृष्टे सामनि जाते च द्विरण् डिद्वा विधीयते । तीयादीकक् न विद्याया गोत्रादङ्कवदिष्यते ।
३-अर्थविशेषानिर्देशात्स्वार्थे ईकक् । गोत्रप्रत्ययान्ताद् यथाङ्के एवं दृष्टे सामन्यपि इत्यर्थः ।

सिद्धे यस्येति[1] लोपेन किमर्थं ययतौडितौ।
ग्रहणं मा तदर्थेऽभू वामदेव्यस्य नञ्स्वरे ॥

## परिवृतो रथः । ६ ।

तृतीयासमर्थात् परिवृतो रथइत्येतस्मिन्नर्थेऽण् स्यात। वस्त्रेण परिवृतो वास्त्रोरथः। ( तदेकान्तग्रहणं[2] कर्त्तव्यम् ) तेनेह न। पुत्रैः परिवृतो रथः[3]। रथः किम् ? वस्त्रेण परिवृतः कायः।

## पाण्डुकम्बलादिनिः । १० ।

तृतीयान्तात्पाण्डुकम्बलात्परिवृतेऽर्थे इनिः स्यात्। पाण्डुकम्बली। इनिनैतन्मत्वर्थीयेन सिद्धम्।

## द्वैपवैयाघ्रादञ् । ११ ।

तृतीयान्ताभ्यां द्वैपवैयाघ्राभ्यां परिवृतेऽर्थे ऽञ् स्यात्। अणोऽपादः। द्वैपः। वैयाघ्रः।

## कौमारापूर्ववचने । १२ ।

---

( १ )--यस्येति लोपेन सिद्धे सति यद् ययतौ डितौ करोति, तज्ज्ञापयत्याचार्यः, भवत एते परिभाषे। अननुबन्धकग्रहणेन सानुबन्धकस्य ग्रहणम्। तदनुबन्धकग्रहणेनातदनुबन्धकस्य ग्रहणमिति। तेन अवामदेव्यमित्यत्र 'ययतोश्चातदर्थे' इत्यनेनान्तोदात्तत्वन्न, किन्तु अव्ययपूर्वपदस्वरः।

( २ )--येन परिवृतो रथो रथैकान्तश्चेत्स भवतीत्यर्थः।

( ३ )--तेन पुत्रैश्छात्रैर्वा वृतो रथ इत्यादौ न।

( ४ )--अण् त्वनभिधानेति तात्पर्यम्।

कौमार इति निपात्यतेऽपूर्ववचने (१)। कौमार इत्यविभक्तिको निर्देशः। अपूर्वपतिं कुमारीमुपपन्नः कौमारः। अपूर्वपतिः कुमारी पतिमुपपन्ना कौमारी।

## तत्रोद्धृतममत्रेभ्यः ॥ १३ ॥

सप्तमीसमर्थेभ्यो ऽमत्रवाचिभ्य उद्धृतेऽर्थेऽण् स्यात्। शरावे उद्धृतः शारावः। उद्धरतिश्चात्रोद्धरणपूर्वके निधाने वर्त्तते। उद्धृत्य निहित इत्यर्थः।

## स्थण्डिलाच्छयितरि व्रते ॥ १४ ॥

(३) सप्तम्यन्तात्स्थण्डिलाच्छयितर्यण् स्यात्, व्रते समुदायेन गम्ये। स्थाण्डिलो भिक्षः। शास्त्रोक्तनियमो व्रतम्।

## संस्कृतं (४) भक्षाः ॥ १५ ॥

सप्तम्यन्तात्संस्कृतेऽर्थेऽण् स्याद्यत्संस्कृतं भक्षाश्चेत्ते स्युः। भ्राष्ट्रे संस्कृता भ्राष्ट्रा यवाः। अष्टसु कपालेषु संस्कृतोऽष्टाकपालः पुरोडाशः।

## शूलोखाद्यत् ॥ १६ ॥

सप्तम्यन्ताभ्यां शूलोखाभ्यां संस्कृतं भक्षा इत्यस्मिन्विषये यत् स्यात्। अणोऽपवादः। शूल्या द्राक्षा। उख्यम्। उखा पात्रविशेषः।

---

( १ )--द्वितीयासमर्थात् कुमारीशब्दादुपयन्तर्यण्। स्त्रियान्तु स्वार्थे प्रथमान्तादेव।

( २ )--अत्रोद्धरतिरुद्धरणपूर्वके निधाने वर्त्तते, तेन सप्तमीसमर्थादद् विभक्तिर्नोपपद्यते॥

( ३ )--तत्रेत्यनुवर्त्तनीयं क्षीराड्ढञिति यावत्।

( ४ )--संस्कृतमित्येतत्कर्मसामान्ये व्युत्पाद्यते, तेन नपुंसकलिङ्गमेकवचनञ्च, भक्षाइत्येतत्तु अप्पाद्यभ्यवहार्यविशेषे व्युत्पाद्यते, तेन पुंल्लिङ्गं बहुवचनञ्च, तत्र वाक्यार्थगम्यस्यार्थस्य पदसंस्कारेऽनुपयोगात्संस्कृतमित्येतद्भवति।

## दध्नष्ठक् ।१७।

सप्तम्यन्ताद्दध्नः सं० ठक् स्यात् । दध्नि संस्कृतं दाधिकम् ।

## उदश्वितोऽन्यतरस्याम् ।१८।

सप्तम्यन्त दुदश्वितः सं० ठग्वा । औदश्वित्कम् । औदश्वितम् । उदकेन श्वयति वर्द्धते इत्युदश्वित् ।

## क्षीराड्ढञ् ।१९।

सप्तम्यन्तात् क्षीरात संस्कृतेऽर्थे ढञ् स्यात् । क्षीरे संस्कृतं क्षैरेयम् । स्त्रियान्तु क्षैरेयी यवागूः । अत्र भक्षा इति न सम्बध्यते ।

## सास्मिन्पौर्णमासीति ॥२०॥

पौर्णमासीसमानाधिकरणात्प्रथमासमर्थात्सप्तम्यर्थे यथाविहितं प्रत्ययास्स्युः । इतिकरणो विवक्षार्थस्तेन संज्ञायामिति लभ्यते । पौषी पौर्णमासी अस्मिन् मासे, पौषो मासः ।

## आग्रहायण्यश्वत्थाट्ठक् ॥२१॥

पौर्णमासीसमानाधिकरणाभ्यां प्रथमासमर्थाभ्यामाग्रहायण्यश्वत्थाभ्यां सप्तम्यर्थे ठक् स्यात् । आग्रहायणी पौर्णमासी अस्मिन्नाग्रहायणिको मासः । अश्वत्थः(१) पौर्णमासी अस्मिन्नाश्वत्थिको मासः ।

## विभाषा फाल्गुनीश्रवणाकार्तिकी चैत्रीभ्यः ।२२।

(१) अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वादण्, पूर्वपदादिति णत्वम् । आश्वत्थिकः, अश्वत्थेन युक्ता पौर्णमासी अश्वत्थः । निपातनात् पौर्णमास्यामपि लुप् । आश्वत्थिकः, इति हरदत्तः ।

पौर्णमास्युपाधिकेभ्यः प्रथमान्तेभ्यः फाल्गुन्यादिभ्यः सप्तम्यर्थे ठग्वा पक्षेऽण् । फाल्गुनिकः । फाल्गुनः । श्रावणिकः । श्रावणः । कार्त्तिकः । कार्त्तिकः । चैत्रिकः । चैत्रः ।

## सास्य देवता ॥ २३ ॥

देवतासमानाधिकरणात्प्रथमासमर्थात षष्ठ्यर्थे ऽण् स्यात् । इन्द्रो(१) देवताऽस्यैन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् ।

## कस्येत् ॥ २४ ॥

कस्येत्स्यात् प्रत्ययसन्नियोगेनम । को देवता अस्य कायं हविः । यस्येति लोपात् परत्वाद्वृद्धिः ।

## शुक्राद् घन् ॥ २५ ॥

देवता० प्रथमासमर्थात शुक्राद् षष्ठ्यर्थे घन् स्यात । शुक्रियम् ।

## अपोनप्त्रपान्नप्तृभ्यां घः । २६ ।

देवता० प्र० अपोनपादपां नपाद्भ्यां षष्ठ्यर्थे घः स्यात् । प्रत्ययसन्नियोगेनानयो रपोनप्त्रपान्नप्तृभावो निपात्यते । अपोनपाद्देवताऽस्य अपोनप्त्रियम् । अपान्नप्त्रियम् ।

## छ च । २७ ।

देवता० प्रथ० अपोनपादपांनपाद्भ्यां षष्ठ्यर्थे छः स्याच्चाद्धः । पूर्ववदादेशः । अपोनपत्रीयम् । अपान्नपत्रीयम् । अपोनप्त्रियम । अपान्नप्त्रियम् । छप्रकरणे ( पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् ) ।

---

( १ ) त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मन्त्रस्तुत्या च ।

पैङ्गाक्षीपुत्रीयम्। तार्णविन्दवीयम्। (शतरुद्राद्घ च)। चाच्छः। शतरुद्रीयम्। शतरुद्रियम् (१)।

## महेन्द्राद्घाणौ वा।२८।

देवता० प्र० महेन्द्रात् षष्ठ्यर्थे घाणौ स्तश्चाच्छः। महेन्द्रियम्। माहेन्द्रम्। महेन्द्रीयम्।

## सोमाट्ट्यण्।२९।

देवता० प्र० सोमात् षष्ठ्यर्थे टयण् स्यात्। सौम्यम्। टित्वान् ङीप्। सौमी, ऋक्।

## वाय्वृतुपित्रुषसो यत्।३०।

देवता० प्र० वाय्वादिभ्यः षष्ठ्यर्थे यत्स्यात्। वायव्यम्। ऋतव्यम्। पित्र्यम्।[2] उषस्यम्।

## द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति- गृहमेधाच्छ च।३१।

देवता० प्र० द्यावापृथिव्यादिभ्यः षष्ठ्यर्थे छः[3] स्याच्चाद्यत्। द्यौश्च पृथिवी च द्यावापृथिव्यौ, ते देवतेऽस्य [4]द्यावापृथिवीयम्। द्यावापृथिव्यम्। शुनासीरीयम्[5]। शुनासीर्यम्। मरुत्वतीयम्। मरुत्वत्यम्। अग्नीषो-

---

(१)—शतं रुद्रा देवता अस्येति विग्रहः। घच्छयोर्विधानसामर्थ्याद् द्विगोर्लुगनपत्य इति न लुगिति हरदत्तः।

(२)—रीङृतः यस्येति चेति ईलोपः।

(३)—वास्तोष्पतिशब्दात्पत्युत्तरपदस्य ण्यस्यापवादः, शेषेभ्यो णः।

(४)—दिवसश्च पृथिव्यामिति द्यावादेशः।

(५)—देवताद्वन्द्वे चेत्यनङादेशः, शुनो वायुः, सीर आदित्यः इन्द्रो वा शुनासीर इति मन्त्रलिङ्गञ्च भवति, इन्द्रं वयं शुनासीरमस्मिन् यज्ञे हवामहे।

मीयम् ।[१] अग्नीषोम्यम् । वास्तोष्पतीयम् । वास्तोष्पत्यम् । गृहमेधीयम् । गृहमेध्य । ।

## अग्नेर्ढक् । ३२ ।

देव० प्र० अग्नेः षष्ठ्यर्थे ढक् स्यात् । आग्नेयो मन्त्रः ।

## कालेभ्यो (२) भववत् । ३३ ।

देवता० प्र० कालविशेषवाचिभ्यः षष्ठ्यर्थे भववत्प्रत्ययाः स्युः । कालाट्ठञित्यादयोऽतिदिश्यन्ते । मासो देवदत्तास्य मासिकम् । वासन्तम् । प्रावृषेण्यम् ।

## महाराजप्रोष्ठपदाट्ठञ् । ३४ ।

देवता० प्र० महाराजप्रोष्ठपदाभ्यां षष्ठ्यर्थे ठञ् स्यात् । महाराजो देवताऽस्य माहाराजिकम् । प्रौष्ठपदिकम् । ठञ् प्रकरणे ( तदस्मिन् वर्त्तत इति नवयज्ञादिभ्य उपसंख्यानम् ) नवयज्ञोऽस्मिन् वर्त्तत इति नावयज्ञिकः । पाकयज्ञिकः । ( पूर्णमासादण् वक्तव्यः ) पूर्णोमासोऽस्यां पौर्णमासी तिथिः ।

## पितृव्यमातुलमातामहपितामहाः । ३५ ।

एते शब्दा निपात्यन्ते ( पितृमातृभ्यां भ्रातरि व्यड्डुलचौ प्रत्ययौ निपात्येते ) पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । ( मातृपितृभ्यां पितरि डामहच् ) मातामहः । पितामहः । ( मातरि षिच्च ) मातु-

---

१-ईदग्नेः सोमवरुणयोरितीत् । वास्तोः पतिर्वास्तोष्पतिः । अस्मादेव निर्देशात्साधु ॥

( २ )-बहुवचननिर्देशो स्वरूपविधिनिरासार्थः ।

माता मातामही । पितामही । ( अवेर्दुग्धेसोढदूसमरीसचः ) अवेर्दुग्धम् । अविसोढम् । सकारपाठसामर्थ्यान्न षः । अविदूषम् । अविमरीसम् । ( तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ ) ( निष्फलस्तिलस्तिलपिञ्जः[१] । तिलपेजो वा । ( पिञ्जश्छन्दसि डिच्च ) । तिल्पिञ्जम् ।

## तस्य समूहः ।३६।

षष्ठयन्तात्समूहेऽर्थे यथाविहितम्प्रत्ययः स्यात् । काकानां समूहः काकम् । वाकम् ।

## भिक्षादिभ्योऽण् ।३७।

षष्ठीसमर्थेभ्यो भिक्षादिभ्यः समूहेऽर्थे ऽण् स्यात् । भिक्षाणां समूहो भैक्षम् । गार्भिणम्[२] । भिक्षादिषु युवतिशब्दः[३] पठ्यते तस्य पुंवद्भावे यौवनम् । शत्रन्तस्य तु यौवतम् । अनुदात्तादेरञित्यञ् ।

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।३८।

षष्ठ्यन्तेभ्यो गोत्रादिभ्यः समूहे वुञ् स्यात् । औपगवकम्[४] ।

---

[१] सस्यावस्थायां फलरहित इत्यर्थः ।

[२] भस्याढे तद्धिते इति पुंवद्भाव इनण्यपत्ये इति प्रकृतिभावः ।

[३] अणि भिन्ने तद्धिते विवक्षिते भस्य पुंवदिति पूर्वमेव युवतिशब्दस्य पुंवद्भावे कनिन्नन्तेनाद्युदात्तत्वेनाणेव भविष्यतीति पाठः प्रत्याख्यातो भाष्ये ।

[४] ग्लौचुकायनकम् । कापोतम् । इत्यादौ चरितार्थयोर्वुञञोरौपगवकमित्यत्राञेवेष्टवाचकत्वात्परशब्दस्य ।

औक्षकम् । औष्ट्रकम् । औरभ्रकम् । राजकम् राजन्यकम् । राजपुत्रकम् । वात्सकम् । मानुष्यकम् (१)। आजकम् । ( वृद्धाच्च ) वार्द्धकम् ।

## केदाराद्यञ् च ।३९।

षष्ठीसमर्थात्केदाराद्यञ् स्याच्चाद्वुञ् समूहे । कैदार्यम् । कैदारकम् । ( गणिकायाश्चेति यञ् वक्तव्यम् ) गाणिक्यम् ।

## ठञ् कवचिनश्च ।४०।

षष्ठ्यन्तात्कवचिनश्चात्केदाराट्ठञ् स्यात् समूहे । कवचिनां समूहः कावचिकम् । कैदारिकम् ।

## ब्राह्मणमाणववाडवाद्यन् ।४१।

षष्ठ्यन्तेभ्यो ब्राह्मणादिभ्यः समूहे यन् स्यात् । ब्राह्मण्यम् । माणव्यम् । वाडव्यम् । ( पृष्ठादुपसङ्ख्यानम् ) पृष्ठ्यम् ॥

## ग्रामजनबन्धुभ्यस्तल् ।४२।

षष्ठ्यन्तेभ्यो ग्रामादिभ्यः समूहे तल् स्यात् । ग्रामता । जनता । बन्धुता ( गजसहायाभ्याञ्च ) गजता । सहायता । ( अह्नः खः ) । अह्नां समूहोऽह्नीनः । ( क्रताविति वक्तव्यम् ) तेनेह न । आह्नाय धूतपाप्मानो भास्करा जितमृत्यवः । ( पर्श्वा णस् ) । पर्शूनां समूहः पार्श्वम् ।

---

[१] प्रकृत्याऽके राजन्यमनुष्ययुवान इति यलोपो न ।

[२] यञा सिद्धे यन्वचनमन्येभ्योपीति द्योतनार्थम्, तेन वार्तिकं गतार्थम् । खण्डकादित्वादह्नः शब्दादञ् तदन्ताच्चतुर्थी ।

## अनुदात्तादे रञ् ।४३।

षष्ठ्यन्तादनुदात्तादेः प्रातिपदिकात् समूहेऽञ् स्यात् । कापोतम्(१)। मायूरम् ।

## खण्डिकादिभ्य श्च ।४४।

षष्ठ्यन्तेभ्यः खण्डिकादिभ्यः समूहेऽञ् स्यात् । खाण्डिकम् । (क्षुद्रकमालवात्सेनासञ्ज्ञायाम्[२] ) । क्षौद्रकमालवी सेना । क्षौद्रकमालवकमन्यत् (३) ।

## चरणेभ्यो धर्मवत् ।४५।

षष्ठ्यन्तेभ्यश्चरणवाचिभ्यो धर्मवत्प्रत्ययाः स्युः । कठानां समूहः काठकम् । कालापकम् । छान्दोग्यम् । गोत्रचरणाद्वुञित्यारभ्य प्रत्यया वक्ष्यन्ते तत्र चरणाद्धर्माम्नाययो रिति वार्त्तिकम् । तेन धर्मवदित्यतिदेशः । वतिस्सर्वसादृश्यार्थः ।

## अचित्तहस्तिधेनोष्ठक् ।४६।

षष्ठयन्तेभ्योऽचित्तहस्तिधेनुभ्यस्समूहे ठक् स्यात् । आपूपिकम् । हास्तिकम् । धैनुकम् ।

---

[१] आद्युदात्तार्थमचित्ताट्ठञो बाधनार्थञ्च । लघावन्ते द्वयोश्च बह्वषोगुरुरिति मध्योदात्तत्वादनुदात्तादिः ।

[२] क्षुद्रकस्यापत्यानि जनपदशब्दादिति विहितस्याञो मालवात्तु वृद्धलक्षणस्य तद्राजस्य ञ्यङो लुक् ।

[३] अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् । गोत्राद्वुञ् नच तद्गोत्रं तदन्तान्नच सर्वतः । ज्ञापकं स्यात्तदन्तत्वे तथाचापिशले विधिः । सेनायां नियमार्थञ्च यथा बाध्येत चाञ् वुञा ॥

## कशाश्वोभ्यां यञ्छावन्यतरस्याम् ।४७।

षष्ठ्यन्ताभ्यां केशाश्वाभ्यां समूहे यञ्छौ वास्तः । पक्षे ठगणौ । कैश्यम् । कैशिकम् । अश्वीयम् । आश्वम् ।

## पाशादिभ्यो यः ॥४८।

षष्ठ्यन्तेभ्यः पाशादिभ्यस्समूहे यत्स्यात् । पाश्या । तृण्या । ( वाताच्छै घ्ये ) शीघ्रो वातो वात्या । वन्या । स्त्रीत्वं लोकात् ।

## खलगोरथात् ।४९।

षष्ठ्यन्तेभ्यः खलगोरथेभ्यस्समूहे यत्स्यात् । खल्या । गव्या । रथ्या ।

(१)

## इनित्रकट्यचश्च ॥५०॥

षष्ठ्यन्तेभ्यः खलगोरथेभ्य इनि-त्र-कट्यचः प्रत्ययाः स्युः । खलिनी । गोत्रा । रथकट्या । ( खलादिभ्य इनिः ) तेन डाकिनी । कुटुम्बिनी ।

## विषयो देशे ।५१।

षष्ठ्यन्ताद्विषयेत्यस्मिन्नर्थे यथाविहितं प्रत्ययः स्यात् सचेद्देशः । शिवीनां विषयो देशः शैवः । देशे किम् । देवदत्तस्य विषयोऽनुवाकः । अत्यन्तपरिशीलितो ऽर्थो विषयशब्दार्थः ।

## राजन्यादिभ्यो वुञ् ।५२।

---

[१] योगविभागो यथासङ्ख्यार्थः, अन्यथा इनित्रकट्यचस्त्रयश्चकाराद्यश्चेति चत्वारः प्रत्ययाः प्रकृतयस्तु तिस्र इति वैषम्यं स्यात् ।

षष्ठ्यन्तेभ्यो राजन्यादिभ्यो विषयो देशे इत्येतस्मिन्नर्थे वुञ् स्यात्। राजन्यानां विषयो देशः राजन्यकः। मालवकः। आकृतिगणश्चायम्।

## भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ॥५३॥

षष्ठीसमर्थेभ्यो भौरिक्यादिभ्य ऐषुकार्य्यादिभ्यश्च विषयो देशो इत्येतस्मिन्नर्थे विधल्भक्तलौ स्तः। भौरकीणां विषयो देशः भौरिकिविधम्। भौलिकिविधम् ऐषुकारिभक्तः। सारसायनभक्तः।

## सोऽस्यादिरिति छन्दसः प्रगाथेषु ।५४।

आदिसमानाधिकरणात्प्रथमान्ताच्छन्दोवाचिनः प्रातिपादिकात् षष्ठ्यर्थेऽण् स्यात् प्रगाथेष्वभिधेयेषु। पङ्क्तिरादिरस्य पाङ्क्तः प्रगाथः। आदिरिति किम्? अनुष्टुम्मध्यमस्य प्रगाथस्य। छन्दसः किम्? उदुत्यशब्द आदिरस्य प्रगाथस्य। प्रगाथेषु किम्—पाङ्क्तिरादिरस्यानुवाकस्य। (छन्दसः प्रत्ययविधाने नपुंसकात् स्वार्थे उपसंख्यानम्) त्रिष्टुबेव त्रैष्टुभम्। आनुष्टुभम्। जागतम्

## सङ्ग्रामे प्रयोजनयोद्धृभ्यः ।५५।

प्रथमान्तेभ्यः प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च षष्ठ्यर्थे ऽणस्यात्। संग्रामेऽभिधेये। निधिः प्रयोजनमस्य नैधः संग्रामः। भरता योद्धारोऽस्य संग्रामस्य भारतः संग्रामः।

## तदस्यां प्रहरणमिति क्रीडायां णः ॥५६॥

प्रहरणसमानाधिकरणात्प्रथमान्तात्सप्तम्यर्थे णः स्यात्क्रीडायाम्। दण्डः प्रहरणमस्यां दाण्डा क्रीडा। प्रहरणं किम्। मालाभूषणमस्यां क्रीडायाम्। क्रीडायां किम्? खड्गः प्रहरणमस्यां सेनायाम्।

## घञः सास्यां क्रियेति ञः ।५।७।

क्रियावाचिनः प्रथमासमर्थाद् घञन्तप्रकृतिकात् सप्तम्यर्थे ञः स्यात् । श्येनपातोऽस्यां ( १ ) श्यैनंपाता, तिलपातोऽस्यां सा तैलंपाता क्रिया । श्येनतिलस्येति मुगागमः । दण्डपातोऽस्यां तिथौ वर्तते इति दाण्डपाता तिथिः ।

## तदधीते तद्वेद ।५।८।

द्वितीयान्तादधीते वेद इत्यनयो रर्थयोर्यथाविहितं प्रत्ययः स्यात् । छन्दोऽधीते वेद वा छन्दासः । वैयाकरणः । द्वितीयान्तादध्येतरि वेदितरि यथाविहितम्प्रत्ययः । छन्दोऽधीते वेद वा छान्दसः । वैयाकरणः । द्विस्तद्ग्रहणमधीयाने विदुषि च प्रत्येकं विधानाथम् ।

## क्रतूक्थादिसूत्रान्ताट् ठक् ।५।९।

द्वितीयान्तात्क्रतुविशेषवाचिन उक्थादिभ्यस्सूत्रान्ताच्च अधीते वेदेत्येतयोरर्थयोः ठक् स्यात् । आग्निष्टोमिकः । उक् (२) थान्यधीत औक्थिकः । (विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः) सार्वविद्यिकः । गौलक्षणिकः । पराशरकल्पमधीते पाराशरकल्पिकः । सांग्रहसूत्रिकः । अकल्पादेः किम् । काल्पसूत्रः । ( विद्याचान क्षत्रधर्मत्रिपूर्वेति वक्तव्यम् ) तेनेह न । आङ्गविद्यः । क्षात्रविद्यः ।

---

( १ )–पतनं पातः श्येनानां पात इति कर्त्तरि षष्ठ्या समासः ।

( २ )–मुख्यार्थकोक्थशब्दादुक्थान्यधीत इति वाक्यमेव, लक्षणयौक्थिक्य(※)परादुक्थशब्दादुवि औक्थिक्यः । औक्थिक्यमधीते इति विग्रहेपि वाक्यमेव, आद्येऽनेन ठगौत्सर्गिकोऽण च अन्त्येऽण् न ।

---

※–उक्थानामाम्नाया औक्थिक्यं:, छन्दोगौक्थिकेति ञ्यः ।

धर्मविद्यः। त्रैविद्यः। ( आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ) यवक्रीतमधीते यावक्रीतिकः। वासवदत्तामधीते वासवदत्तिकः (१)। ऐतिहासिकः। पौराणिकः। ( सर्वसादेर्द्विगोश्च लोवक्तव्यः )। सर्ववेदमधीते सर्ववेदः। सर्वार्त्तिकः। पञ्चकल्पः।

अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः।

इकन्पदोत्तरपदाच्छतषष्टेः षिकन्पथः॥

अनुसूमधीते आनुसुकः। लाक्षिकः। लाक्षणिकः। पूर्वपदिकः। शतपथिकः। स्त्री चेत् शतपथिकी। षष्टिपथिकः।

## क्रमादिभ्यो वुन्।६०।

द्वितीयान्तेभ्यः क्रमादिभ्योऽध्येतृवेदित्रोर्वुन् स्यात्। अणोऽपवादः। क्रममधीते क्रमकः। पदकः।

## अनुब्राह्मणादिनिः।६१।

द्वितीयान्तादनुब्राह्मणादध्येतृवेदित्रोरिनिस्स्यात्। ब्राह्मणसदृशो ग्रन्थोऽनुब्राह्मणं, तदधीतेऽनुब्राह्मणी। अणूनिवृत्त्यर्थं वचनम्।

## वसन्तादिभ्य ष्ठक्।६२।

द्वितीयान्तेभ्यो वसन्तादिभ्यो ऽध्येतृवेदित्रोर्थयोष्ठक् स्यात्। वसन्त(२)सहचरितो ग्रन्थो वसन्तस्तमधीते वासन्तिकः। वार्षिकः।

## प्रोक्ताल्लुक्।६३।

---

( १ )–'अधिकृत्य कृते' इति छस्य लुबाख्यायिकाभ्यो बहुलमिति लुप्।

( २ )–यत्र वसन्तो वर्ण्यते, यो वा वसन्तेऽध्येयः।

प्रोक्तार्थ(१)प्रत्ययान्तादध्येतृवेदित्रोरुत्पन्नस्य प्रत्ययस्य लुक् । पाणिनिना प्रोक्तं पाणिनीयन्तदधीते पाणिनीयः । विशेषस्तु स्त्रियां स्वरे च । पाणिनीया स्त्री ।

## सूत्राच्च कोपधात् । ६४ ।

द्वितीयान्तात्सूत्रवाचिनः कोपधात्परस्याध्येतृवेदितृप्रत्ययस्य लुक् स्यात् । अष्टकं(२) पाणिनीयमधीयते विदन्ति वा, अष्टकाः पाणिनीयाः । ( संख्याप्रकृतेरिति वक्तव्यम् ) तेनेह न, माहावार्तिकः । कोपधादिति किम् । चातुष्टयः(३) ।

## छन्दोब्राह्मणानि च तद्विषयाणि । ६५ ।

प्रोक्तप्रत्ययान्तानि छन्दोब्राह्मणान्यध्येतृवेदितृविषयाणि भवन्ति । अध्येतृवेदितृप्रत्ययेन विना न प्रयोज्यानीति तात्पर्यम् । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाणिनिस्तस्य कठचरकादिति लुक् । ततोऽण्, तस्य "प्रोक्तादि"ति लुक् ।

## तदस्मिन्नस्तीति देशे तन्नाम्नि । ६६ ।

अस्तिसमानाधिकरणात्प्रथमान्तात्सप्तम्यर्थे यथाविहितं प्रत्ययः स्यात्, तन्नाम्नि देशेऽभिधेये । देशे तन्नाम्नीत्यग्रेऽपि त्रिषु सम्बध्यते । उदुम्बराः सन्त्यस्मिन् देशे औदुम्बरो नाम देशः । पार्वतः ।

---

( १ )-प्रोक्तस्येह स्वरितत्वं प्रतिज्ञातं तेन तदधिकारविहितप्रत्ययग्रहणम् ।

( २ )-अष्टावध्यायाः परिमाणमस्येति अष्टन्शब्दात्संख्याया अतिशदन्ताया इति कन्, अष्टकं पाणिनेः सूत्रम् ।

( ३ )-चत्वारोऽवयवा अस्य, संख्याया अवयवे तयप ह्रस्वात्तादाविति षत्वम् । चतुष्टयमधीते, इत्यर्थः ।

## तेन निर्वृत्तम् (१) ।६७।

तृतीयान्तान्निर्वृत्तेऽर्थे यथाविहितं प्रत्ययः स्यात् । कुशाम्बेन निर्वृत्ता कौशाम्बी नगरी ।

## तस्य निवासः ।६८।

षष्ठ्यन्तान्निवासेऽर्थे यथाविहितम्प्रत्ययः स्यात् । ऋजुनावां(२) निवासः, आर्जुनावः । शैवः ।

## अदूरभवश्च (३) ॥६९॥

षष्ठ्यन्तादूरभवेऽर्थे यथाविहितम्प्रत्ययः स्यात् । हिमवतो ऽदूरभवं हैमवतं नगरम् । चकारेण प्रागुक्तास्त्रयोर्थाः सन्निधाप्यन्ते, तेनोत्तरत्र चत्वारोऽप्यर्थाः यथायथं सम्बध्यन्ते ।

## ओरञ् ॥७०॥

उवर्णान्ताच्चातुरर्थिको ऽञ् स्यात् । अरडवः सन्त्यस्मिन्, अरडुना निर्वृत्तम्, अरडोर्निवासः, अरडोरदूरभवम्—आरडवं नगरम् । नद्यान्तु परत्वान्मतुप् । इक्षुमती ।

## मतोश्च बह्वजंगात् ।७१।

---

(१) निर्वृत्तमित्यन्तर्भावितण्यर्थाद् वृतेः कर्मणि क्तः ।

(२) ऋज्वी नौ येषां तेषामित्यर्थः ।

(३) अदूर मन्तिकं तत्र भवतीत्यदूरभवः, निपातनात् सप्तमीसमासः ।

बह्वज् अङ्गं यस्य मतुपस्तदन्ताच्चातुरर्थिको ऽञ् स्यात् । अणोऽपवादः । सिध्रिकावतोऽदूरभवन्नगरं सैध्रिकावतम् । बह्वजिति किम्? आहिमतम् । अङ्गग्रहणं बह्वजिति तद्विशेषणं यथा स्यान्मत्वन्तविशेषणं माभूदिति ।

## बह्वचः कूपेषु ॥७२॥

बह्वच्प्रातिपदिकाच्चातुरर्थिको ऽञ् स्यात्कूपेष्वभिधेयेषु । दीर्घवरत्रेण निर्वृत्तः कूपो दैर्घवरत्रः । यथासम्भवमर्थसम्बन्धः ।

## उदक् च विपाशः ॥७३॥

विपाश उत्तरे कूले ये कूपास्तेष्वभिधेयेषु चातुरर्थिकोऽञ् स्यात् । अबह्वजर्थ आरम्भः । दत्तेन निर्वृत्तो दात्तः कूपः । उदक् किम्? दक्षिणतः कूपेष्वणेव ।

## संकलादिभ्यश्च ।७४।

संकलादिभ्यश्चातुरर्थिको ऽञ् स्यात् । संकलेन निर्वृत्तं साङ्कलम् । पौष्कलम् ।

## स्त्रीषु सौवीरसाल्वप्राक्षु ।७५।

स्त्रीलिङ्गेषु सौवीरसाल्वप्राक्षु देशेषु वाच्येषु चातुरर्थिको ऽञ् स्यात् । दत्तामित्रेण निर्वृत्ता नगरी दात्तामित्री । वैधूमाग्नी । माकन्दी । यथाक्रममुदाहरणम् ।

## सुवास्त्वादिभ्योऽण् ।७६।

सुवास्त्वादिभ्यश्चातुरर्थिको ऽण् स्यात् । अञोऽपवादः,

लक्षणस्य च । सुवास्तोरदूरभवं सौवास्तवम् । नद्या । मतुपो बाध-नार्थमणग्रहणम् । सौवास्तवी नदी ।

## रोणी ॥७७॥

रोणीशब्दात्तदन्ताच्चातुरर्थिको ऽण् स्यात् । कूपाञोऽपवादः । रोण्या निर्वृत्तो रौणः । आजकरौणः ।

## कोपधाच्च ॥७८॥

कोपधाच्चातुरर्थिको ऽण् स्यात् । अञोऽपवादः । कृकवाकुना निर्वृत्तं कार्कवाकवम् ।

## वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरी-हणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काश-बलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदा-दिभ्यः ॥७९॥

अरीहणादिभ्यः सप्तदशभ्यो वुञादयश्चातुरर्थिकाः सप्तदश क-मात्स्युः । अरीहणादिभ्यो वुञ् । अरीहणेन निर्वृत्तमारीहणकम् । कृशाश्वादिभ्यश्छण् । कार्शाश्वीयम् । कृश्यादिभ्यः कः । कृश्यकम् । कुमुदादिभ्य ष्ठच् । कुमुदिकम् । काशादिभ्य इलः । काशिलः । तृणादि-भ्यस्सः । तृणसम् । प्रेक्षादिभ्य इनिः । प्रेक्षी । अश्मादिभ्यो रः । अश्म-रः । सख्यादिभ्यो ढञ् । साखेयम् । सङ्काशादिभ्यो ण्यः । साङ्काश्य-म् । बलादिभ्यो यः । बल्यम् । पक्षादिभ्यः फक् । पाक्षायणः ( पथः पन्थ च ) गणसूत्रम् । पान्थायनः । कर्णादिभ्यः फिञ् । कार्णायनिः । सुतङ्गमादिभ्य इञ् । सौतङ्गमिः । प्रगदिन्नादिभ्यो ञ्यः । प्रागद्यः । वराहादिभ्यः कक् । वाराहकः । कुमुदादिभ्य ष्ठक् । कौमुदिकः ।

## जनपदे लुप् ।८०।

जनपदे वाच्ये चातुरर्थिकस्य लुप्स्यात्। पञ्चालानां निवासो जनपदः पञ्चालाः। कुरवः।

## वरणादिभ्यश्च ॥८१॥

वरणादिभ्यः परस्य चातुरर्थिकस्य लुप्स्यात्। अजनपदार्थ आरम्भः। वरणानामदूरभवन्नगरं वरणाः।

## शर्कराया वा ।८२।

शर्करायाः परस्य चातुरर्थिकस्य वा लुप्स्यात्। शर्करया निर्वृत्तं शर्करा, शार्करं वा।

## ठक्छौ च ॥८३॥

शर्करायाश्चातुरर्थिकौ वा ठक्छौ स्तः। शर्कराशब्दात् कुमदादौ वराहादौ च पाठसामर्थ्यात् पक्षे ठचकक्कौ। वाग्रहणात्पक्षे औत्सर्गिकोऽण् तस्य पक्षे लुक। एवं च षडरूपाणि। शर्करा। शार्करम्। शार्करिकम्। शार्करीयम्। शर्करिकम्। शार्करकम्।

## नद्यां मतुप् (१) ।८४।

नद्यामभिधेयायां चातुरर्थिको मतुप्स्यात। उदुम्बुरा स्सन्ति यस्यामुदुम्बुरावती नदी। मतौ बह्वचोनजिरादीनामिति दीर्घः। भागीरथीत्यादौ तु तेन निर्वृत्तमित्यण (२)।

---

[१] तदस्यास्त्यस्मिन्निति मतुपि सिद्धे, तदस्मिन्नस्तीत्यणो बाधनार्थं वचनम्।

[२] मत्वन्तेन तन्नामानभिधानात्।

## मध्वादिभ्यश्च ।८५।

मध्वादिभ्यश्चातुरर्थिको मतुप्स्यात् । मधुविद्यतेऽत्र देशे मधुमान्देशः । अन्नद्यर्थ आरम्भः ।

## कुमुदनडवेतसेभ्यो ड्मतुप् ।८६।

एभ्यश्चातुरर्थिको ड्मतुप्स्यात् । कुमुद्वान् । नड्वान् । वेतस्वान् । आद्ययो झय इति, अन्त्ये मादुपधाया इति वः । ( महिषाच्चेति वक्तव्यम् ) (१) महिष्मान्देशः ।

## नडशादाड्ड्वलच् ।।८७।।

आभ्यां चातुरर्थिको ड्वलच् । नड्वलः । शाद्वलः । शादो जम्बालघासयोः ।

## शिखाया वलच् ।८८।

शिखाशब्दाच्चातुरर्थिको वलच् स्यात् । शिखावलम् ।

## उत्करादिभ्यश्छः ।८९।

उत्करादिभ्यश्चातुरर्थिकश्छः । उत्करीयः ।

## नडादीनां कुक् च ।९०।

नडादिभ्यश्चातुरर्थिकश्छः स्यात्; प्रकृतेः कुक् चागमः । नडकीयो देशः । ( क्रुञ्चाह्रस्वत्वं च ) (३) क्रुञ्चकीयः । (तक्षन्न लोपश्च) तक्षकीयः ।

---

(१) षकारसवर्णाभावादनुनासिकादेशो न ।
(२) निर्वृत्ताद्यर्थे देशे तन्नाम्नि चाणो बाधनार्थम् । मतुप्प्रकरणे तद्विधानमदेशार्थम् ।
(३) उभयत्रो षष्ठ्याः सौत्रो लुक् ।

## शेषे ।९१।

अपत्यादिचतुरर्थपर्यन्तेभ्योऽन्योऽर्थः शेषः[१] । तत्राणादयः स्युः । चक्षुषा गृह्यते चाक्षुषं रूपम् । उपनिषदा प्रतिपाद्यते औपनिषदः पुरुषः ।

## राष्ट्रावारपाराद् घखौ ।९२।

राष्ट्रावारपाराभ्यां शैषिकौ घखौ स्तः । राष्ट्रे भवो राष्ट्रियः । अवारपारीणः ( अवारपाराद्विगृहीतादपि ) अवारीणः । पारीणः । ( विपरीताच्च ) पारावारीणः । प्रकृतिविशेषोपादानमात्रेण घादयष्ठ्युस्त्युलन्ताः प्रत्यया उच्यन्ते, तेषां जातादयोऽर्थविशेषा वक्ष्यन्ते ।

## ग्रामाद्यखञौ ॥९३॥

ग्रामात् प्रातिपदिकात् शैषिकौ यखञौ स्तः । ग्राम्यः । ग्रामीणः ।

## कत्र्यादिभ्यो ढकञ् ।९४।

कत्र्यादिभ्यः शैषिको ढकञ् स्यात् । कात्रेयकः [२] ।

## कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलंकारेषु ।९

कुलकुक्षिग्रीवाभ्यः शैषिको ढकञ् स्यात् । श्वास्यलंकारेष्वभिधेयेषु । कौलेयकः श्वा चेत् । कौलोऽन्यः । कौक्षेयकोऽसिश्चेत् । कौक्षोऽन्यः । ग्रैवेयकः अलंकारश्चेत् । ग्रैवोऽन्यः ।

---

(१) अपत्यादिष्वर्थेषु घादीनां निवृत्त्यर्थमधिकारस्तस्य विकार इत्यतः प्राक् । गृह्यमाणत्वादिप्रकारकबोधनाय विधायकत्वमप्यस्येति बोध्यम् ।

(२) कुत्सितास्त्रयो यस्येति कत्रिस्तत्र जातादिः कात्रेयकः । निपातनात्कोः कदादेशः ।

## नद्यादिभ्यो ढक् ।९६।

नद्यादिभ्यः शैषिको ढक् स्यात् । नादेयम् । नद्यादिगणे पूर्वनगरी, इति पाठस्तत्र समुदायाद्विच्छिद्य च प्रत्यय इष्टः (१) पौवनगरेयम्, पौरेयम् । वनेयम् नागरेयम् ।

## दक्षिणापश्चात्पुरसस्त्यक् ।९७।

एभ्यः शैषिकस्त्यक् स्यात् । दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । दक्षिणेति(२) साहचर्यादव्ययम् ।

## कापिश्याः ष्फक् ।९८।

कापिशीप्रातिपदिकात् शैषिकः ष्फक् स्यात् । कापिशायनम् मधु । कापिशायनी द्राक्षा । ( बह्ल्युर्दिपर्दिभ्य श्चेति वक्तव्यम्(३) बाह्लायनी । और्दायनी । पार्दायनी ।

## रङ्कोरमनुष्येऽण् च ।९९।

रङ्कुप्रातिपदिकात् शैषिकोऽण् स्यात्, चात् ष्फक्; अमनुष्येभिधेये । राङ्कवायणो वा । अमनुष्ये किम् ? राङ्कवको मनुष्यः । "मनुष्यतत्स्थयो" रिति वुञ् ।

## द्युप्रागपागुदक्प्रतीचो यत् ॥१००॥

---

[१] आचार्य्येण शिष्येभ्यस्तथैवोपदिष्टत्वात् ।

[२] तेन टाबन्तस्य न ग्रहणम् ।

[३] अवृद्धादपीति वुञ् प्राप्तः, कोपधात्वादेवाणि सिद्धे कच्छादिषु रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थ इति ।

[४] द्यु इति दिव उत्वेन निर्देशो व्याख्यानात् ।

एभ्यः शैषिको यत् स्यात् । दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ।

## कन्थायाष्ठक् ।१०१।

कन्थाप्रातिपदिकात् शैषिकष्ठक् स्यात् । कान्थिकः ।

## (१) वर्णौ वुक् ।१०२।

वर्णौ या कन्था तस्याः शैषिको वुक् स्यात् । वर्णुदेशविषयार्थवाचिकन्थाशब्दादित्यर्थः । कान्थकः । यथा हि जातं हिमवत्सु कान्थकम् ।

## अव्ययात्त्यप् ।१०३।

अव्ययेभ्यश्शैषिकस्त्यप् । परिगणनं कर्तव्यम् । अमेहक्वत-(२) सित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः । (३)अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । ( इतरथा ह्यौत्तराहौपरिष्टपारतानां प्रतिषेधो वक्तव्यः स्यात् ) (४) औत्तराहः । औपरिष्टः । पारतः । ( त्यब्नेर्ध्रुवे वक्त-

---

[१] वर्णुशब्दाद् अदूरभवश्चेत्यर्थे सुवास्त्वादिभ्योऽणित्यण्, तस्य जनपदे लुबिति लुप् । वर्णुर्नदस्तत्समीपो देशोपि वर्णुः ।

[२] योऽव्ययात्त्यब्विधिः सोऽमात्त्यादिभ्य एव स्मृत इत्यर्थः ।

[३] अमाशब्दः सहार्थे सामीप्ये च वर्त्तते । तेन समीपे भवतीत्यमात्यः ।

[४] आहि च दूरे, उत्तराच्चेत्याहि प्रत्ययः । उत्तराहिभवः । उपरिष्टाद्भवः । परतोभव इत्येषु अण् । अव्ययानां भमात्र इति टिलोपः । परतःशब्दो विभाषापरावराभ्यामित्यतसुजन्तः । ध्रुवं नियतमुच्यते । निर्गतो वर्णाश्रमेभ्य इति निष्ट्यः, चाण्डालादिः । ह्रस्वात्तादौ तद्धित इति सकारस्य मूर्द्धन्यस्तकारस्य ष्टुत्वम् ।

व्यः ) नित्यः ( निसो गते ) त्यब्वक्तव्यः। निष्ट्यः। (अरण्याण्णो वक्तव्यः।[१]) आरण्याः सुमनसः। दूरादेत्यो वक्तव्यः। दूरेत्यः। (उत्तरादाहञ् वक्तव्यः) औत्तराहः। ( अव्ययात्त्यबित्यत्राविष्ट्य य छन्दस्युपसंख्यानं कर्तव्यम् ) आविष्ट्यो वर्द्धते चारुरासु।

## ऐषमोह्यःश्वसोऽन्यतरस्याम् ।१०४।

ऐषम आदिभ्यः शैषिको वा त्यप् स्यात्। ऐषमस्त्यम्। ऐषमस्तनम्। ह्यस्त्यम्। ह्यस्तनम्। श्वस्त्यम्। श्वस्तनम्। शौवस्तिकमित्यपि। श्वसस्तुट् चेति ठञ्, तुडागमश्च। पक्षे ट्युट्युलौ।

## तीररूप्योत्तरपदादञ्ञौ ।१०५।

तीररूप्योत्तरपदात् शैषिकौ अञ्ञौ यथासंख्यं स्तः। अञ्-पात्वलतीरम्। रूप्योत्तरपदात् शैवरूप्यम्। तीररूप्यान्तादित्युक्तौ त्विहापि स्यात्। बाहुरूप्यम्। इहाणेव।

## दिक्पूर्वपदादसंज्ञायां ञः[३] ।१०६।

दिक्पूर्वपदात् शैषिको ञः स्यात्; असंज्ञायां विषये। पूर्वस्यां शालायां भवः पौर्वशालः। असंज्ञायां किम्। संज्ञाभूतायाः प्रकृतेर्माभूत्, पूर्वेषुकामशम्र्यां भवः पूर्वैषुकामशमः। दिक्संख्येति समासः। "प्राचां ग्राम"-इत्युत्तरपदवृद्धिश्च।

---

[१] अणि सति ङीप् स्यादिति णो विधीयते।

[२] आविशब्दाद् वृद्धाच्छे प्राप्ते त्यब् विधिः।

[३] पदग्रहणं स्वरूपविधिनिरासार्थम्। कथं, दिशः पूर्वपदमस्मिन्निति व्यधिकरणपदबहुव्रीह्यनुगमात्। दिश इतिवाचकापेक्षषष्ठी, दिशोवाचकं पूर्वपदमस्मिन्निति तात्पर्यम्।

## मद्रेभ्यो ऽञ् ॥१०७॥ (१)

दिक्पूर्वपदात् मद्रप्रातिपदिकात् शैषिको ऽञ् स्यात् । पूर्वेषु मद्रेषु भवः पौर्वमद्रः । अमद्राणामिति प्रतिषेधादुत्तरपदवृद्धिर्न ।

## उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।१०८।

उदीच्यग्रामवाचिनः बह्वचोऽन्तोदात्तात् शैषिकोऽञ् स्यात् । शैवपुरम् (२) । उदीच्यग्रामात् किम् । माथुरम् । बह्वचः किम् ? ध्वजी-ध्वाजम् । अन्तोदात्तात् किम् ? शार्करीधानम् । लित्स्वरेण धाशब्द उदात्तः ।

## प्रस्थोत्तरपदपलद्यादिकोपधादण् ।१०९।

प्रस्थोत्तरपदात् पलद्यादिभ्यः कोपधाच्च शैषिकोऽण् स्यात् । माद्रीप्रस्थे, भवो, माद्रीप्रस्थः । पलद्यां भवः, पालदः । निलीनके भवो नैलीनकः ।

## कण्वादिभ्यो गोत्रे ॥११०।

गोत्रप्रत्ययान्तेभ्यः कण्वादिभ्यः शैषिकोऽण् स्यात् । कण्वस्येमे छात्राः काण्वाः । हलस्तद्धितस्येति यलोपः । छापवादः ।

## इञश्च ।१११॥

[१] बहुवचननिर्देशो जनपदवाचिनः परिग्रहार्थः । मद्रैकदेशे मद्रशब्दस्य वृत्तेर्दिक् शब्देन सामानाधिकरण्ये तद्धितार्थ इति समासः ।

[२] प्रस्थपुरेति वुञ् तुन, तत्र वृद्धादित्यनुवृत्तेः ।

गोत्रे य इञ् तदन्तात् प्रातिपदिकात् शैषिकोऽण् स्यात्। दाक्षेरिमे छात्रा दाक्षाः। गोत्रे किम्? सौतङ्गमेरिदं सौतङ्गमीयम् चातुरर्थिक इञ्। पारिभाषिकस्य गोत्रस्य ग्रहणादिह न-पाणिनेश्छात्राः पाणिनीयाः।

## न द्व्यचः प्राच्यभरतेषु। ११२।

प्राच्यगोत्रे भरतगोत्रे द्व्यचः परो य इञ् तदन्तात् शैषिकोऽण् न स्यात्। पूर्वापवादः। चैदेरिमे चैदीयाः। काशेरिमे काशीयाः। प्राच्यभरतेषु किम्? दाक्षाः। भरतानां प्राच्यत्वेऽपि पृथगुपादानम्, अन्यत्र प्राच्यग्रहणे भरतानामग्रहणमिति ज्ञापनार्थम्। तेन-इञः प्राचामित्यत्र भरतेभ्यो युवप्रत्ययस्य लुङ् न। औद्दालकिः पिता। औद्दालकायनः पुत्रः।

## वृद्धाच्छः। ११३।

वृद्धसंज्ञकात् प्रातिपदिकात् शैषिकश्छः स्यात्। गार्गीयः।

## (१) भवतष्ठक्छसौ ॥ ११४॥

वृद्धसंज्ञकात् भवत्प्रातिपदिकात शैषिकौ ठक्छसौ स्तः। भावत्कः। भवदीयः। वृद्धादित्यनुवृत्तेः शत्रन्तादणेव। भावतः।

## काश्यादिभ्यष्ठञ्ञिठौ। ११५।

वृद्धसंज्ञकेभ्यः काश्यादिभ्यः शैषिकौ ठञ्ञिठौ स्तः। काशिकी।

---

(१)-प्रक्रियालाघवाय ककूछसाविति तु न कृतं, स्त्रियां ङीबर्थं, तेः भावत्की, इति।

काशिका । इकार उच्चारणार्थः । ( आपदादिपूर्वपदात् कालान्तात् ) ; आपत्कालिकी । आपत्कालिका ।

## बाहीकग्रामेभ्यश्च । ११६

वृद्धसंज्ञकेभ्यः बाहीकग्रामवाचिभ्यः शैषिकौ ठञ्ञिठौ स्तः । छाऽपवादः । कास्तीरनगरे भवा कास्तीरिकी कास्तीरिका ।

## विभाषोशीनरेषु । ११७ ।

उशीनरेषु ये वाहीकग्रामा स्तेभ्यो वृद्धसंज्ञकेभ्यः शैषिको ठञ्ञिठौ वा स्तः । सुदर्शने भवा सौदर्शनिकी । सौदर्शनिका । सौदर्शनीया ।

## ओर्देशे ठञ् । ११८ ।

उवर्णान्ताद् देशवाचिनः प्रातिपदिकात शैषिकष्ठञ् स्यात । निषादकर्ष्वां भवः, नैषादकर्षुकः । दाक्षिकर्षुकः । केऽण इति ह्रस्वः । देशे किम् ? पटोश्छात्राः पाटवाः । ञिठं व्यावर्तयितुं ठञ्ग्रहणम् ।

## वृद्धात्प्राचाम् ॥ ११९ ॥

उवर्णान्तात् प्राग्देशवाचिनो वृद्धसंज्ञकात् प्रातिपदिका शैषिकष्ठञ् स्यात् । प्राग्देशवाचिनो, वृद्धादेवेतिनियमार्थम्[२] । आढ-कजम्बुकः । नेह मल्लवास्तौ भवो माल्लवास्तवः ।

---

( १ )–गणवार्तिकमिदम् ।आपदादिराकृतिगणः । और्ध्वकालिकी । और्ध्वकालिका । तात्कालिकी । तात्कालिका ।

( २ )–विपरीतनियमस्तु न प्राचामेवेति, अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याभावात् ।

## धन्वयोपधाद्वुञ् ।१२०।

धन्ववाचिनो[1] योपधाच्च वृद्धसंज्ञकात् देशवाचिनः प्रातिपदिकात् शैषिको वुञ् स्यात् । ऐरावतं धन्व तस्मिन् भव ऐरावतकः । सांकाश्ये[2] भवः, सांकाश्यकः ।

## प्रस्थपुरवहान्ताच्च ।१२१।

प्रस्थान्तात् पुरान्तात् वहान्ताच्च वृद्धसंज्ञकात् देशवाचिनः प्रातिपदिकात् शैषिको वुञ् स्यात् । छापवादः । मालाप्रस्थकः । नान्दीपुरकः । पुरान्तग्रहणमप्रागर्थम् । प्रागदेशे तूत्तरेण सिद्धः । पैलुवहकः ।

## रोपधेतोः प्राचाम् ।१२२।

वृद्धसंज्ञकात् प्राग्देशवाचिनो रोपधात्, ईवर्णान्ताच्च प्रातिपदिकात् शैषिको वुञ् स्यात् । छापवादः । पाटलिपुत्रकः । काकन्दकः ।

## जनपदतदवध्योश्च । १२३ ।

जनपदवाचिनस्तदवधिवाचिनश्च शैषिको वुञ् स्यात् । छापवादः । आदर्शकः । श्यामायनकः (३) ।

## अवृद्धादपि बहुवचनविषयात् ।१२४।

---

(१)–धन्वशब्दोमरुदेशवचनस्तद्विशेषवाचिन ऐरावतादेरित्यर्थः ॥

(२)–सांकाश्यशब्दो वुञ्छणेत्यादिना ण्यन्तः ।

(३)–सचासाववधिश्चेति कर्मधारयाजनपदरूप एवावधिर्गृह्यतेति पुनस्तदवधिग्रहणं बाधकबाधनार्थं, तेन "गर्तोत्तरपदाच्छः" इत्येतद् बाधित्वा "अवृद्धादपी" ति वुञेव त्रैगर्तक इति।

बहुवचनविषयाज्जनपदवाचिनस्तदवधिवाचिनश्च अवृद्धादपि प्रातिपदिकात् शैषिको वुञ् (१) स्यात् । अणूछयोरपवादः । आङ्गकः । वाङ्गकः । कालिङ्गकः । अवृद्धाज्जनपदावधेः आजमीढकः । दार्वकः । जाम्बवकः । वृद्धाज्जनपदावधेः—कालञ्जरकः । विषयेति किम् ? एकशेषेण बहुत्वे माभूत् । वर्तनी च ३ वर्तन्यस्तासु भवो वातनः ।

## कच्छाग्निवक्त्रगर्त्तोत्तरपदात् । १२५ ।

कच्छाद्युत्तर पदाद्देशवाचिनः प्रातिपदिकात् वृद्धादवृद्धाच्च शैषिको वुञ् स्यात् । छाणोरपवादः । दारुकच्छकः । काण्डाग्नकः । सैन्धुवक्त्रः । बाहुगर्तकः ।

## धूमादिभ्यश्च । १२६ ।

धूमादिभ्यो देशवाचिभ्यः शैषिको वुञ् स्यात् । अणादेरपवादः । धौमकः । तैर्थकः ।

## नगरात् कुत्सनप्रावीण्ययोः । १२७ ।

नगरात् प्रातिपदिकात् शैषिको वुञ् स्यात् । कुत्सनप्रावीण्ययोरभिधेययोः । नागरकश्चौरः । शिल्पी वा । अनयोः किम् ? नागराः(२) ब्राह्मणाः ।

## अरण्यान्मनुष्ये । १२८ ।

अरण्यप्रातिपदिकात् शैषिको वुञ् स्यान्मनुष्येऽभिधेये । अरण्यादण इत्यस्यापवादः । ( पथ्ययध्यायन्यायविहारमनुष्यहस्ति--

---

( १ )—अवृद्धादणो वृद्धाच्छस्यापवादः ॥

( २ )—कत्र्यादित्वाड्ढकञ् तु न, माहिष्मतीसाहचर्य्यात्तत्र संज्ञाभूतस्यैव नगरशब्दस्य ग्रहणात् ॥

(इति वक्तव्यम् )आरण्यकः पन्थाः, अध्यायो न्यायो विहारो मनुष्यो हस्ती वा । ( वा गोमयेषु ) आरण्यः, आरण्यको वा गोमयः । एतेषु किम् ? आरण्याः पशवः ।

(१)

## विभाषाकुरुयुगन्धराभ्याम् । १२९ ।

देशवाचिभ्यां कुरुयुगन्धराभ्यां शैषिको वा वुञ् स्यात् । अवृद्धादपीति नित्यः प्राप्तः । कौरवकः । कौरवो वा । यौगन्धरकः । यौगन्धरो वा ।

## मद्रवृज्योः कन् । १३० ।

मद्रवृजिभ्यां देशवाचिभ्यां शैषिकः कन् स्यात् । जनपदवुञोऽपवादः। मद्रकः । वृजिकः ।

## कोपधादण् । १३१ ।

कोपधाद्देशवाचिनः प्रातिपदिकात् शैषिकोऽण् स्यात् । जनपदवुञोऽपवादः । ऋषिकेषु जातो, भवो वा आर्षिकः । माहिषिकः । इक्ष्वाकुषु जातः, ऐक्ष्वाकः ।

## कच्छादिभ्यश्च । १३२ ।

कच्छादिभ्यो देशवाचिभ्यः शैषिकोऽण् स्यात् । वुञादेरपवादः । काच्छः । सैन्धवः ।

( १ )-कुरुशब्दः कच्छादिषु पठ्यते, तत्सामर्थ्यात्पाक्षिकेऽणि सिद्धे युगन्धरार्थं विभाषाग्रहणमिति । मनुष्यतत्स्थयोस्तु परत्वान्नित्य एव वुञ् । कौरवको मनुष्यः । कौरवकमस्य हसितं जल्पितं वा ।

## मनुष्यतत्स्थयो र्वुञ् । १३३ ।

कच्छादिभ्यो देशवाचिभ्यः प्रातिपदिकेभ्यो वुञ् स्यात् । मनुष्यतत्स्थयोरभिधेययोः । अणोऽपवादः । काच्छको मनुष्यः । काच्छकं हसितम् । अनयोः किम् । काच्छो गौः ।

(१)

## अपदातौ साल्वात् ॥ १३४ ॥

देशवाचिनः साल्वप्रातिपदिकाद्वुञ् स्यात् अपदातावभिधेये । साल्वको ब्राह्मणः ।

## गोयवाग्वाश्च । १३५ ।

देशवाचिनः साल्वप्रातिपदिकात् शैषिको वुञ् स्यात । गोयवाग्वोरभिधेययोः । कच्छाद्यणोपवादः । साल्वको गौः । साल्विका यवागूः । साल्वमन्यत ।

## गर्तोत्तरपदाच्छः । १३६ ।

देशवाचिनो गर्तोत्तरपदात् प्रातिपदिकात् शैषिकश्छः स्यात् । अणोऽपवादः । वृकगर्तीयम् । उत्तर पदग्रहणं बहुच्पूर्व निरासार्थम् । बाहुगर्त्तम् ।

## गहादिभ्यश्च ॥ १३७ ॥

देशवाचिभ्यो गहादिभ्यश्छःस्यात । गहीयः । ( मुखपा(२)र्श्वतसो र्लोपश्च ) मुखतीयम् । पार्श्वतीयम् । ( कुग जनस्य परस्य

( १ ,—कच्छादित्वाद् वुञि सिद्धे अपदातावेवेति नियमार्थं, तेन साल्वः पदातिरिह न ।

( २ - अत्र पठितानि सर्वाणि गणसूत्राणि ; गहादिषु पृथिवी मध्यस्य मध्यमभावो वक्तव्यः । पृथिवीमध्ये भवो मध्यमीयः । चरणसंबन्धेन निवासलक्षणोऽण् वक्तव्यः । त्रयः प्राच्याः ।

च ) जनकीयम् । परकीयम् ( देवस्य च ) देवकीयम् । ( वैणुकादिभ्य-श्छण् वक्तव्यः ) वैणुकीयम् । वैत्रकीयम् ।

## प्राचां कटादेः ।१३८।

प्राग्देशवाचिनः कटादेः प्रातिपदिकात् शैषिकश्छः स्यात् । अणोऽपवादः कटनगरे भवः कटनगरीयः । कटघोषीयः ।

## राज्ञः(१)क च ॥१३९।

राजन्प्रातिपदिकात् शैषिकश्छः स्यात् । ककारश्चान्तादेशः । असम्भवाद्देशो न विशेषणम् । राजकीयम् ।

## वृद्धादकेकान्तखोपधात् ॥१४०॥

वृद्धसंज्ञकात् अकेकान्ताद्देशवाचिनः खोपधाच्च प्रातिपदिकात् शैषिकश्छः स्यात् । कोपधलक्षणस्य वाहीकग्रामादिलक्षणस्य च प्रत्ययस्यापवादः । ब्राह्मणको नाम जनपदः, तत्रभवो ब्राह्मणकी-

---

त्रय औदीच्याः । त्रयो माध्यमाः । सर्वे निवासलक्षणाः । एतदपि भाष्यं, मध्यो मध्यमं चाण् चरणइति गणपाठं विशेषेऽवस्थापयितुम् । स्वकीयमिति तु स्वार्थिककन्नन्तात् स्वशब्दाद् गहादेराकृतिगणत्वाच्छे सेत्स्यतीति तत्वबोधिनी, अत्र प्रमाणञ्चलुव्योगेति सूत्रे स्वकीयस्यैव प्रत्याख्यानमिति न्यासकारोक्तिरिति । केवलस्य स्वशब्दस्य सौवमिति । एतच्च द्वारादीनाञ्चेत्यत्र भाष्ये । स्वीयमित्यत्र तु प्राक्क्रीताच्छः । अन्तरशब्दाद् गहादित्वाच्छे तदन्तेन नशब्दस्य समासे स्वार्थे कनि च नान्तरीयकमिति, अविनाभूत इत्यर्थः ।

(१) अदेशमात्रेविधानार्थमेतत्, छस्तु वृद्धाच्छ इत्येव ।

यः । शाल्मलिकीयः । आयोमुखीयः (१) । ( अकेकान्त (२) ग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ) सौसुकीयः ।

## कन्थापलदनगरग्रामह्रदोत्तरपदात् ।१४१।

कन्थाद्युत्तरपदाद्देशवाचिनः प्रातिपदिकात् शैषिकश्छः स्यात् । दाक्षिकन्थीयम् । दाक्षिपलदीयम् । दाक्षिनगरीयम् । दाक्षिग्रामीयम् । दाक्षिह्रदीयम् । वाहीकग्रामेभ्यश्चेत्यस्यापवादः ।

## पर्वताच्च ।१४२।

पर्वतप्रातिपदिकात् शैषिकश्छः स्यात् । अणोऽपवादः । पर्वतीयो राजा ।

## विभाषाऽमनुष्ये ॥१४३॥

पर्वतप्रातिपदिकात् शैषिकश्छः स्यात्, अमनुष्येऽभिधेये । पर्वतीयानि पार्वतानि वा फलानि । मनुष्ये तु पर्वतीयः ।

## कृकणपर्णाद् भारद्वाजे ।१४४।

भारद्वाजदेशवाचिभ्यां कृकणपर्णाभ्यां शैषिकश्छः स्यात् । कृकणीयम् । पर्णीयम् । भारद्वाजे किम् । कार्कणम् । पार्णम् ।

## समाप्तोयं पादः ।

(१) वाहीकग्रामलक्षणौ ठञ्ञिठौ प्राप्तौ ॥
(२) अकेकान्तग्रहणमपनीय व्यापकत्वात्कोपधग्रहणं कर्त्तव्यमित्यर्थः ॥

# अथ चतुर्थाध्यायस्य तृतीयः पादः।

(१)
## युष्मदस्मदो रन्यतरस्यां खञ्च ।१।

युष्मदस्मद्भ्यां शैषिकौ वा खञ्छौ पक्षे ऽण् । यौष्माकीणः । आस्माकीनः । युष्मदीयः । अस्मदीयः । यौष्माकः । आस्माकः ।

## तस्मिन्नणि च युष्माकास्माकौ ।२।

खञि अणि च परे युष्मदस्मदो युष्माकास्माकावादेशौ स्तः । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः । तस्मिन्नणि च किम् । युष्मदीयः । अस्मदीयः ।

(२)
## तवकममकावेकवचने ।३।

एकार्थवाचिनो युष्मदस्मदोस्तवकममकौ स्तः, खञि अणि च परे । तवेदं तावकीनम् । मामकीनम् । तावकम् । मामकम् । तस्मिन्नणि च किम् । त्वदीयम्(३) । मदीयम् ।

## अर्धाद्यत् ।४।

---

(१) भाष्ये यथासंख्यनिवारणाय योगविभागो दर्शितः । एवमुत्तरसूत्रेऽपि, तेनादेशयोः खञनभ्यां यथासंख्यं न । वैषम्याद्यथासंख्यं नेति केचित् ॥

(२) उच्यते तद्वचनम्, कर्मणि ल्युट्, एकार्थस्य वचनम्, एकार्थवचनम्, वाच्यवाचकसंबन्धे षष्ठी, ततः षष्ठीति समासः । एकार्थाभिधानाय ये उच्येते युष्मदस्मदी तयोरादेश इत्यर्थः, तेनैकवचन इति षष्ठ्यर्थे प्रथमाद्विवचनम् ( कै० )

(३) प्रत्ययोत्तरपदेति त्वमादेशौ ।

अर्धप्रातिपदिकाच्छैषिको यत् स्यात् । अर्द्ध्यम् । अर्धाग्रद्विधाने सपूर्वाट् ठञ् वक्तव्यः । गौतमार्द्धिकम् ।

## परावराधमोत्तमपूर्वाच्च ।५।

परादिपूर्वादर्धशब्दाच्छैषिको यत् स्यात् । परार्द्ध्यम् । अवरार्द्ध्यम् । अधमार्द्ध्यम् । उत्तमार्द्ध्यम् । परावराधमोत्तमेभ्य इत्येव सिद्धे पूर्व-ग्रहणं पूर्वविप्रतिषेधज्ञापनार्थम्, तेन दिग्वाचिनोः परावरयोरर्द्धेन समासे उत्तरसूत्रेण ठञ्यतौ प्राप्तौ, यदेव भवति ।

## दिक्पूर्वपदाट्ठञ् च ।६।

दिक्पूर्वपदादर्धान्तात् प्रातिपदिकात् शैषिकष्ठञ् स्याच्चाद्यत् । अणोऽपवादः । पूर्वार्द्धे भवं पौर्वार्द्धिकम् । पूर्वार्द्ध्यम् । दाक्षिणार्द्धिकम् । दक्षिणार्द्ध्यम् । पदग्रहणं स्वरूपविधिनिरासार्थम् ।

## ग्रामजनपदैकदेशादञ्ठञौ ।७।

दिक्पूर्वपदाद् ग्रामैकदेशवाचिनो जनपदैकदेशवाचिन श्चार्द्धान्तात् प्रातिपदिकात् शैषिकौ अञ्ठञौ स्तः । इमे खल्वस्माकं ग्रामस्य जन-पदस्य वा पौर्वार्द्धाः । पौर्वार्धिकाः । ग्रामस्य(१) पूर्वस्मिन्नर्द्धे भवा इति तद्धितार्थे समासः ।

## मध्यान्मः ।८।

मध्यप्रातिपदिकात् शैषिको मः स्यात् । मध्यमः ।

(१) पूर्वस्य ग्रामापेक्षत्वेऽपि, नित्यसापेक्षत्वात्समासः ।

## अ साम्प्रतिके । ९ ।

मध्यप्रातिपदिकात् शैषिको अः स्यात्, असाम्प्रतिकेऽर्थे । साम्प्रतिकं न्याय्यं युक्तमुचितं समुच्यते । मध्यं काष्ठम् । नातिह्रस्वं नातिदीर्घमित्यर्थः ।

## (१) द्वीपादनुसमुद्रं यञ् । १०

समुद्रसमीपे यो द्वीपस्तद्विषयाद् द्वीपशब्दाच् छैषिको यञ् स्यात् द्वैप्यम् । कच्छादेरणोर्मनुष्यवुञश्चापवादः । अनुसमुद्रं किम् । द्वैपको मनुष्यः । द्वैपम् ।

## (२) कालाट् ठञ् । ११ ।

कालवाचिनः (३) प्रातिपदिकात् शैषिकष्ठञ् स्यात् । मासिकः । आर्द्धमासिकः । साम्वत्सरिकः । अणोऽपवादः । वृद्धात्तु छं परत्वात् बाधते ।

यथा कथञ्चिद् गुणवृत्त्यापि काले वर्तमानात् प्रत्यय इष्यते । कादम्बपुष्पिकम् (४) ।

---

(१)–समुद्रं समया अनुसमुद्रम्, सप्तम्यन्तमेतत् ।

(२)–कालादित्यधिकारः, तत्र जात इति यावत् ॥

(३)–स्वरूपस्यैव न ग्रहणं, उत्तरसूत्रेण सन्धिवेला–त्रयोदशी–चतुर्दशीप्रभृतिभ्यो अण्विधानात् । तच्च ठञ्बाधनायैव अवृद्धत्वाच्छोऽप्राप्तेः; किन्तु कालप्रतिपादकस्य, तेन कालिकः सम्बन्धः, कालिकी व्याप्तिः, इत्यादि प्रयोगाः सङ्गच्छन्ते इति । अत्र गौणमुख्यन्यायस्तु न, तेन कदम्बपुष्पसाहचर्यात्कालोपि कदम्ब पुष्पः तत्र भवं, कादम्बपुष्पिकम् इत्यादिसिद्धिः ।

(४)–अनुदितौषसरागा (अनुदित्त औषसरागो यस्यां) शार्वरस्य तमसो निवृत्तये' इत्यादयः प्रयोगाःकथमिति चेत्कवीनां ( निरङ्कुशत्वात् प्रामाणिकानां त्वपभ्रष्टा एव। इत्थं समानकालीनादिष्वप्यवबोद्धव्यम् ।

## श्राद्धे शरदः । १२ ।

कालवाचिनश्शरत्प्रातिपदिकात् शैषिकष्ठञ् स्यात्, श्राद्धेऽभिधेये। ऋत्वणोऽपवादः। श्राद्ध इति कर्म गृह्यते, न श्रद्धावान् पुरुषो (१) ऽनभिधानात्। शरदि भवं शारदिकं श्राद्धम् (१)। शारदमन्यत्र।

## विभाषा रोगाऽऽतपयोः । १३।

कालवाचिनश्शरत्प्रातिपदिकात् शैषिकष्ठञ् स्यात; रोगातपयोरभिधेययोः। शारदिकः शारदो वा रोगः, आतपो वा। ऋत्वणोऽपवादः। रोगातपयोः किम्। शारदं दधि।

## निशाप्रदोषाभ्याञ्च । १४ ।

कालवाचिभ्यां निशाप्रदोषाभ्यां शैषिकष्ठञ् वा स्यात। नैशम्। नैशिकम्। प्रदोषे भवं प्रादोषिकम्, प्रादोषम् वा। कालाट्ठञिति नित्ये ठञि प्राप्ते विकल्प उच्यते।

## श्वसस्तुट् च ॥ १५ ॥

कालवाचिनः श्वःप्रातिपदिकाच्छैषिकष्ठञ् वा स्यात्, तुडागमश्च। (२) शौवस्तिकः। श्वस्त्यः। श्वस्तनम्। द्वारादीनामित्यैजागमः।

---

(१)-प्रज्ञाश्रद्धेति मत्वर्थीयेनाणापि व्युत्पादितः श्राद्धशब्दः।

(२)-स च ठञो न तु श्वःशब्दस्य वुञोविधेयत्वेन प्राधान्यात् कृते चैकादेशे तुडागमः, नचाङ्गसंज्ञानिमित्तत्वेनैकादेशस्य बहिरङ्गत्वात्ततः प्राक् तुट्प्रवृत्तेः प्रत्ययादेष्ठस्येकविधानात्कर्मठवदत्रापीकादेशो प्रवर्त्तेतेति वाच्यं, वुञ्छणादिषु* ठचश्चित्करणेनान्तरङ्गेभ्योपीकादेशस्य पूर्वभावित्वस्य ज्ञापितत्वादिति हरदत्तः।

---

*-प्रत्ययसंज्ञासन्नियोगविशिष्टे प्रत्ययस्वरे कृते तत इकादेश इत्यन्तोदात्तत्वं सिद्धम्।

त्यपप्रत्यययोप्यतो विहित ऐषमोह्यः श्वसोऽन्यतरस्यामिति, एताभ्यां मुक्ते ट्युट्युलावपि भवतः ।

## सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ॥१६॥

कालवाचिभ्यः सन्धिवेलाद्य तुनक्षत्रेभ्यः शैषिकोऽण् स्यात् । ठञोपवादः अण्ग्रहणम्(१) वृद्धाच्छस्य बाधनार्थम् । सन्धिवेलायां जातः सान्धिवेलम् । ग्रीष्मे भवं ग्रैष्मम् । तैषम्(२) ।

## प्रावृष एण्यः ॥१७॥

कालवाचिनः प्रावृट्शब्दात् शैषिक एण्यः स्यात् । ऋत्वणोपवादः । प्रावृषेण्यो बलाहकः(३) ।

## वर्षाभ्यष्ठक् ।१८।

कालवाचिनो वर्षाप्रातिपदिकात् शैषिकष्ठक् स्यात ऋत्वणोपवादः । वार्षिकं वासः । वार्षिकमनुलेपनम् । वर्षासु साधु इत्यर्थः ।

## छन्दसि ठञ् ।१९।

कालवाचिनो वर्षाप्रातिपदिकाच्छन्दसि विषये शैषिकष्ठञ् स्यात्, ठकोपवादः, स्वरे भेदः । नभश्च नभस्यश्च वार्षिकावृतु ।

---

(१) यथाविहितं प्रत्ययाः स्यु रित्युक्ते तु सन्धिवेलादिषु पठितात्पौर्णमासीशब्दाद् वृद्धाच्छस्स्यात् । वचनन्तु ठञोबाधनार्थं स्यादिति भावः ।

(२) तिष्याद्भवादावण् । जातार्थे तु श्रविष्ठेति लुक् स्यात्, सूर्यतिष्य इत्यत्र तिष्यपुष्ययोर्नक्षत्राणि इतिवचनाद् यलोपः ।

(३) रषाभ्यामिति सिद्धे णकारोच्चारणं प्रावृषेण्यमाचष्टे प्रावृषेण्यायते क्विप् णिलोपः (लोपो व्योर्वलीति यलोपः ) प्रावृष्येणित्यत्र णत्वार्थेनान्यथा पदान्तस्येति प्रतिषेधः स्यात् ।

## वसन्ताच्च ॥२०॥

कालवाचिनो वसन्तप्रातिपदिकाच्छन्दसि विषये शैषिकष्ठञ् स्यात्। मधुश्च माधवश्च वासन्तिकावृतू।

## हेमन्ताच्च ।२१।

कालवाचिनो हेमन्तप्रातिपदिकाच्छन्दसि विषये शैषिकष्ठञ् स्यात्। ऋत्वणोऽपवादः। सहश्च सहस्यश्च हैमन्तिकावृतू। योगविभाग उत्तरार्थः।

## (१) सर्वत्राण् च तलोपश्च ।२२।

कालवाचिनो हेमन्तप्रातिपदिकाल्लोकवेदयोः शैषिकोऽण् स्यात्, तलोपश्च। हेमन्ते जातं हैमन्तिकम्। हैमन्तम्। हैमनम्। इदं सूत्रं त्यक्तुं शक्यम्। हेमन्शब्दस्य प्रकृत्यन्तरत्वात्। हेमनहेमन्तशब्दाभ्यां सन्धिवेलेत्यणि कृते हैमन्तम्, हैमनमिति च सिद्धम्। हेमन्ताच्चेत्यनेन ठञि हैमन्तिकमिति। सर्वे विधयश्छन्दसि विकल्प्यन्ते इति हैमन्तम्, हैमनमित्येते भविष्यतः। छन्दसो निवृत्त्यैव सिद्धे सर्वत्रग्रहणं पूर्वसूत्रेऽपि सम्बन्धार्थम्। तेन लोकेऽपि हैमन्तिकमिति काशिका॥

## सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।२३।

(१) छन्दसीत्यस्य निवृत्त्यैव सिद्धे सर्वत्रग्रहणं विस्पष्टार्थम्।

(२) अथवा चेन संनियोगः करिष्यते। तुट् च। किञ्चान्यत्प्राप्नोति। आदेशः। इति भाष्योक्तेर्योः रनादेशः, अन्यथा यदागमपरिभाषया ल्युशब्दस्याङ्गनिमित्तत्वेन युशब्दस्य तदभावात्स न स्यात्, वस्तुतस्तु यदागमपरिभाषया यग्रहणेन ल्योर्ग्रहणेऽपि निर्दिश्यमानपरिभाषया योरेव भविष्यति, इति ना०। प्राह्णेप्रगयोरेदन्तत्वं निपात्यते, प्राह्णः सोढोऽस्येति प्राह्णेतन इत्याद्यर्थम्। सप्तम्यान्तु घकालतनेत्येवाऽलुका भाव्यम्।

सायमादिभ्योऽव्ययेभ्यश्च कालवाचिभ्यः शैषिकौ ट्यु ट्युलौ स्तस्तुडागमश्च । सायन्तनम् । चिरन्तनम् । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् । दिवातनम् । ( चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ) चिरत्नम् । परुत्नम् । परारित्नम् । ( अग्रादिपश्चाड्डिमज् वक्तव्यः ) अग्रिमम् । आदिमम् । पश्चिमम् । ( प्रगस्य छन्दसि गलोपश्च त्नश्च वक्तव्यः ) प्रत्नमात्मानम् । ( अन्ताच्चेति वक्तव्यम् ) अन्तिमः ।

## विभाषापूर्वाह्णापराह्णाभ्याम् ॥२४॥

कालवाचिभ्यां पूर्वाह्णापराह्णाभ्यां शैषिकौ ट्यु ट्युलौ वा स्तः, तुडागमश्च । पूर्वाह्णेतनम् । अपराह्णेतनम् । घकालतनेष्विति सप्तम्या अलुक् । पौर्वाह्णिकम् । आपराह्णिकम् । पूर्वाह्णः सोढोऽस्येति विग्रहे तु पूर्वाह्णतनः ।

## तत्र जातः (१) ।२५।

सप्तमीसमर्थाज्जातेऽर्थे यथाविहितं स्यात् । अणादयो घादयश्च प्रकृतास्तेषामर्थाः समर्थविभक्तयश्च प्रदर्श्यन्ते । मथुरायां जातः माथुरः । राष्ट्रे जातो राष्ट्रियः ।

## प्रावृषष्ठप् ।२६।

सप्तमीसमर्थात्प्रावृट्प्रातिपदिकात् जातेऽर्थे ठप् स्यात्, एण्यापवादः । पकारः स्वरार्थः । प्रावृषिकः ।

## संज्ञायां शरदो वुञ् ॥२७॥

सप्तमीसमर्थाच्छरत्प्रातिपदिकाज्जातेऽर्थे वुञ् स्यात् । संज्ञा-

---

( १ ) तत्र जात इत्याद्यर्थनिर्देशः, प्रावृषष्ठवित्याद्यपवादार्थः ।

यां गम्यमानायाम्[१] । शारदका दर्भाः । मुद्गा वा । संज्ञायां किम् ? शारदं सस्यम् ।

## पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ।२८।

सप्तमीसमर्थेभ्यः पूर्वाह्णादिभ्यो जातेऽर्थे वुन् स्यात् । पूर्वाह्णकः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः । विभाषापूर्वाह्णापराह्णाभ्यामित्यस्यापवादः । नक्षत्राणोऽपवादः । निशाप्रदोषाभ्याञ्चेत्यस्याऽपवादः । औत्सर्गिकस्याणोऽपवादश्च यथायथ बोध्यः । असंज्ञायां तु यथाप्राप्तं ठञादय एव भवन्ति ।

## पथः पन्थ च ।२९।

सप्तमीसमर्थात्पथिन् प्रातिपदिकाज्जातेऽर्थे वुन् स्यात् । पथः पन्थेत्ययमादेशश्च । अणोऽपवादः । पथि जातः पन्थकः ।

## अमावास्याया वा ।३०।

सप्तमीसमर्थादमावस्याप्रातिपदिकाज्जातेऽर्थे वा वुन् स्यात् । अमावास्यायां जातः आमा(२) वास्यकः । आमावास्यः । पक्षे सन्धिवेलेति अण् ।

## अ च ।३१।

सप्तमीसमर्थादमावस्याप्रातिपदिकाज्जातेऽर्थेऽच् स्यात् । अमावास्यः । अमावास्यकः । आमावास्यः ।

---

(१) समुदायेन चेत्संज्ञा गम्यत इत्यर्थः संज्ञायामित्येतत्कृतलब्धेति यावत्केचिदनुवर्त्तयन्ति ।

(२) एकदेशविकृतस्यानन्यत्वादमावस्यशब्दादपि, एवम्परत्रेति काशिका ।

## सिन्ध्वपकराभ्यां कन्। ३२।

सप्तमीसमर्थाभ्यां सिन्ध्वपकराभ्यां जातेऽर्थे कन् स्यात्। सिन्धुकः। अपकरकः। सिन्धुशब्दः कच्छादिस्ततोऽणि मनुष्यवुञि च प्राप्ते विधानम्। अपकरशब्दादप्यौत्सर्गिकेऽणि।

## (१) अणञौ च। ३३।

सप्तमीसमर्थाभ्यां सिन्ध्वपकराभ्यां जातेऽर्थेऽणञौ स्तः। सैन्धवः। आपकरः। पूर्वेण कनि प्राप्ते वचनम्।

## श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त-(२)विशाखाऽऽषाढाबहुलाल्लुक्॥३४॥

श्रविष्ठादिभ्यः परस्य जातार्थस्य प्रत्ययस्य लुक् स्यात्। श्रविष्ठायां जातः श्रविष्ठः। फल्गुनः। अनुराधः; इत्यादि। लुक् तद्धितलुकीति स्त्रीप्रत्ययस्य लुक्, (लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्) चित्रायां जाता, चित्रा। रेवती। रोहिणी। स्त्रीप्रत्ययस्य लुकि कृते गौरादित्वान्ङीष्। (फल्गुन्यषाढाभ्यां टानौ (३)-वक्तव्यौ) फल्गुनी। आषाढा। (श्रविष्ठाषाढाभ्यां छणपि वक्तव्यः) श्राविष्ठीयः। आषाढीयः।

---

(१)–योगविभागो यथासंख्यार्थः।

(२)–कृत्तिकापर्यायस्य बहुलाशब्दस्यात्र द्वन्द्वैकवद्भावेन नपुंसकह्रस्वत्वेन निर्देशः। न बह्वर्थादाननिमित्तस्य बहुलाशब्दस्य, श्रविष्ठादिभिः साहचर्यात्।

(३)–विधानसामर्थ्यादनयोर्ङीन भवति।

(१)

## स्थानान्तगोशालखरशालाच्च ।३५।

स्थानान्तादिभ्यः परस्य जातार्थप्रत्ययस्य लुक् स्यात् । गोस्थानः । गोशालः । खरशालः ।

## वत्सशालाभिजिद श्वयुक्छतभिषजो वा ।३६।

वत्सशालादिभ्यः परस्य जातार्थप्रत्ययस्य वा लुक् स्यात् । वत्सशालः । वात्सशालः । अभिजित् । आभिजितः । अश्वयुक् । आश्वयुजः । शतभिषक् । शातभिषजः (२) । नक्षत्राणो लुक् ।

## नक्षत्रेभ्यो बहुलम् ।३७।

नक्षत्रवाचिभ्यः परस्य जातार्थप्रत्यस्य बहुलं लुक् स्यात् । रोहिण्यां जातो रौहिणः । रोहिणः । मार्गशीर्षः । मृगशिराः । वाग्रहणानुवृत्ते व्यवस्थितविभाषाश्रयणाच्च लुग्व्यवस्थायां सिद्धायां बहुलवचनं क्वचिदन्य-देवेत्येतदर्थम् । तेन टानौ वक्तव्यावित्यादि सिद्धम् ।

## कृतलब्धक्रीतकुशलाः ।३८।

सप्तमीसमर्थात् प्रातिपदिकात् कृतादिष्वर्थेषु यथाविहितं स्यात् । मथुरायां कृतः, लब्धः, क्रीतः, कुशलो या माथुरः ।

---

(१) विभाषासेनेति नपुंसकत्वे ह्रस्वत्वं तत्साहचर्य्यात् खरशालस्यापि नपुँसकस्य ग्रहणं नतु द्वन्द्वैकवद्भावेन ह्रस्वत्वम्, एकादेशस्य पूर्वभ्प्रत्यन्तवद्भावाल्लिङ्गविशिष्टपरिभाषया स्त्रीलिङ्गाभ्यामपि लुग् भवत्येव, यद्यपि टाबन्तयोरपि पाठे एकदेशविकृतस्यानन्यत्वान्नपुँसकाभ्यामपि लुक् सिद्ध्यति, लाघवार्थं तु ह्रस्वस्य पाठः ।

(२) [ जातार्थे प्रतिप्रसूतोऽण् वा डिद्वक्तव्यः ) शातभिषः । कौ० ।

## प्रायभवः ।३९।

सप्तमीसमर्थात् प्रातिपदिकात् प्रायभवेऽर्थे यथाविहितं स्यात्। मथुरायां प्रायेण भवति इति माथुरः। राष्ट्रियः। प्रायग्रहणमनर्थकम् तत्र भवेन कृतत्वा(१) त् । अ(२) नित्यभवः प्रायभव इति चेत् मु(३) क्तसंशयेन तुल्यम्।

## उपजानूपकर्णोपनीवेष्ठक् ।४०।

सप्तमीसमर्थेभ्यः उपजानूपकर्णोपनीवेभ्यः प्रायभवेऽर्थे ठक् स्यात्। अणोऽपवादः। उपजानुप्रायेण(४) भव औपजानुकः। औपकर्णिकः। औपनीविकः।

## सम्भूते ।४१।

सप्तमीसमर्थात् प्रातिपदिकात् सम्भूतेऽर्थे यथाविहितं स्यात्। अत्र सम्भावनाऽऽधारपरिमाणादाधेयस्यानतिरेकश्चेत्यर्थद्वयं तन्त्रादिना गृह्यते, नोत्पत्तिः सत्ता वा, जात भवाभ्यां गताथत्वात्। स्रुघ्ने सम्भवति स्रौघ्नः।

---

(१) यत्प्रायभव इत्यस्य साध्यं तस्य तत्र भव इत्यनेनैव साधितत्वादित्यर्थः। योहि राष्ट्रे प्रायेण भवति तत्रैवासौ भवतीति तत्रभव इत्येव सिद्धम्।

(२) यस्तत्रकदाचिद् भवति कदाचिन्न भवति स प्रायभवः, यस्य तु नियत आधाराधेयभावस्य तत्र भव इति पृथगुपादानसामर्थ्याद् भेद आश्रीयते इति यद्युच्येतेत्यर्थः।

(३) यं भवान्मुक्तसंशयं न्याय्यं तत्र भव उदाहरणं मन्यते, स्रौघ्नो देवदत्त इति तेनैव तुल्य, सोऽपिही कदाचित्तस्मादुदकदेशाद्यभिनिष्क्रामति तत्र चेद्युक्ता तत्र भवता, इहापि युक्ता दृश्यताम्॥

(४) उपजान्वादयः सामीप्येऽव्ययीभावाः।

## कोशाड्ढञ् ।४२।

सप्तमीसमर्थात् कोशप्रातिपदिकात् सम्भूतेऽर्थे ढञ् स्यात् । कौशेयं वस्त्रम् । ( विकारे कोशाड्ढञ् वक्तव्यः ) सम्भूत इत्युच्यमानेऽर्थस्यानुपपत्तिः स्यात् ।

## कालात्साधुपुष्प्यत्पच्यमानेषु ।४३।

सप्तमीसमर्थेभ्यः कालवाचिभ्यः एष्वर्थेषु यथाविहितं स्यात् । हेमन्ते[१] साधुः हैमन्तः प्राकारः । वसन्ते पुष्प्यन्ति इति वासन्त्यः, कुन्दलताः । शरदि पच्यन्ते शारदाः शालयः ।

## उप्ते च ।४४।

सप्तमीसमर्थात्कालवाचिप्रातिपदिकादुप्तेऽर्थे यथाविहितं स्यात् । हेमन्ते उप्यन्ते हैमन्ता यवाः । योगविभाग उत्तरार्थः ।

## आश्वयुज्या वुञ्[३] ।४५।

सप्तमीसमर्थादाश्वयुजीप्रातिपदिकादुप्तेऽर्थे वुञ् स्यात् । आश्वयुज्यामुप्ता आश्वयुजका यवाः ।

---

(१) स्वरूपग्रहणन्तु न भवति, उत्तरत्राश्वयुज्यादीनामनेन कालशब्देन विशेषणात् ।

(२) उत्तरयोगयोरुप्त एव प्रत्ययो यथास्यात्साध्वादिषु माभूत् ।

(३) वुञो अकारस्वरार्थं उत्तरत्र वृद्ध्यर्थश्च ।

# ग्रीष्मवसन्तादन्यतरस्याम् ॥४६॥

सप्तमीसमर्थाभ्यां ग्रीष्मवसन्ताभ्यामुप्तेऽर्थे वा वुञ् स्यात्। ऋत्वणपवादः। ग्रीष्मे वसन्ते च उप्तं, ग्रैष्मकम्। ग्रैष्मम् वा। वासन्तकम्। वासन्तम् वा सस्यम्।

# देयमृणे ।४७।

सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकाद् देयमृणमित्यर्थे यथाविहितं स्यात्। मासे देयमृणम्मासिकम्। आर्द्धमासिकम्। ऋणे किम्। मासे देया भिक्षा।

# कलाप्यश्वत्थयवबुसाद्वुन् ।४८।

सप्तमीसमर्थेभ्यः कालवाचिभ्यः कलाप्यश्वत्थयवबुसेभ्यो देयमृणमित्यर्थे वुन् स्यात्। यस्मिन्काले[१] मयूराः कलापिनो भवन्ति स उपचारात् कलापी कालः। तस्मिन्देयमृणम् कलापकम्। अश्वत्थस्य फलं अश्वत्थः। फले लुक्। तद्युक्तः कालोऽप्युपचारादश्वत्थः। तत्रदेयमृणम्–अश्वत्थकम्। यस्मिन् काले यवबुसं समुत्पद्यते तद्युक्तः कालोऽप्युपचाराद्यवबुसस्तत्रदेयमृणम्, यवबुसकम्।

# ग्रीष्मावरसमाद् वुञ् ।४९।

सप्तमीसमर्थाभ्यां ग्रीष्मावरसमाभ्यां देयमृणमित्यर्थे वुञ् स्यात्। अणठञोरपवादः। ग्रीष्मे देयमृणं ग्रैष्मकम्। आवरसमकम्[२]।

---

(१) मयूरादिषु प्रसिद्धानां कलाप्यादीनां शब्दानां काले वृत्तिर्न सम्भवति तत्कथं कालवाचिभ्य इत्याह–"यस्मिन् काले" इति।

(२) विशेषणसमासः, नात्रावरशब्दो दिग्वाची, येन दिक्संख्ये संज्ञायामिति समासः स्यात्। आगामिनां संवत्सराणां मध्ये वत्सरे देयमित्यर्थः। अपर आह, अतीते वत्सरे देयं यद्द्यापि न दत्तं तदाऽऽवरसमकमिति।

## सम्वत्सराग्रहायणीभ्यां ठञ् च ॥५०॥

सप्तमीसमर्थाभ्यां सम्वत्सराग्रहायणीभ्यां देयमृणमित्यर्थे ठञ् स्यात् । चाद् वुञ् । साम्वत्सरिकम् । आग्रहायणिकम् । साम्वत्सरकम् । आग्रहायणकम् ।

## व्याहरति मृगः ।५१।

सप्तमीसमर्थात् कालवाचिनः प्रातिपदिकात् व्याहरति मृग इत्यर्थे यथाविहितं स्यात् । निशायां व्याहरति( १ ) इति नैशिको नैशो वा मृगः। मृगः किम् । निशायां व्याहरति उलूकः ।

## तदस्य सोढम् ।५२।[२]

सोढ समानाधिकरणात् प्रथमासमर्थात्कालवाचिनः प्रातिपदिकात् षष्ठ्यर्थे यथाविहितं स्यात् । निशासहचरितमध्ययनं(३) निशा, तत्सोढमस्य नैशः । नैशिको वा छात्रः ।

## तत्र भवः ।५३।

सप्तमीसमर्थात् प्रातिपदिकात् भव इत्यर्थे यथाविहितं स्यात् । स्रौघ्नः । राष्ट्रियः ।

## दिगादिभ्यो यत् ।५४।

---

[१] व्याहरति शब्दायत इत्यर्थः ।

[२] अस्येति नेयं सोढापेक्षया कर्त्तरि षष्ठी, न लोकाव्ययेति प्रतिषेधात् । किन्तर्हि, कर्तुरेव सम्बन्धित्वमात्रविवक्षया शेषलक्षणा षष्ठी ।

[३] कालस्य स्वरूपेणासोढत्वात्तत्सहचरितवृत्ते रत्र सूत्रे ग्रहणम् ।

सप्तमीसमर्थेभ्यो दिगादिभ्यो भव इत्यर्थे यत् स्यात्। दिशि भवं दिश्यम्। वंश्यः।

## शरीरावयवाच्च ।५५।

सप्तमीसमर्थात् शरीरावयववाचिनः(१) प्रातिपदिकात् भवार्थे यत्स्यात्। दन्ते भवं दन्त्यम्। आस्यम्। हलो यमां यमीति यलोपः।

## दृतिकुक्षिकलशिवस्त्यस्त्यहे ढञ्(२) ।५६।

दृत्यादिभ्यः सप्तमीसमर्थेभ्यो भव इत्यर्थे ढञ् स्यात्। दार्तेयम्। कौक्षेयम्। कालशेयम्। वास्तेयम्। आस्तेयम्(३)। आहेयम्(४)।

## ग्रीवाभ्योऽण् च ॥५७॥

सप्तमीसमर्थात् ग्रीवाप्रातिपदिकात भवार्थेऽण् स्यात चाड् ढञ्। ग्रैवेयम्। ग्रैवम्। ग्रीवाशब्दो धमनीवचनस्तासां बहुत्वात् बहुवचनम्।

## गम्भीराञ् ञ्यः ।५८।

सप्तमीसमर्थात् गम्भीरप्रातिपदिकाद् भवार्थे ञ्यः स्यात्। गम्भीरे भवं गाम्भीर्य्यम्।

---

[१] शरीरं प्राणिकायः।

[२] अस्तीति तिङन्तप्रतिरूपको निपातः, स चास्तिक्षीरेत्यादौ तिङन्तेन समानार्थः, अस्तिमान् इत्यादौ धनार्थकः।

[३] दृतिश्चर्मविकारः, शरीरावयवश्च, बस्तिर्नाभेरधश्शरीरावयवः।

[४] आहेयं विषादि।

## अव्ययीभावाच्च ।५६।

सप्तमीसमर्थादव्ययीभावसंज्ञकात् प्रातिपदिकाद् भवार्थे ञ्यः स्यात् । ( ञ्यप्रकरणे परिमुखादीनामुपसंख्यानम् ) परिमुखं भवं पारिमुख्यम् । ( अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः ) औपकूलः ।

## अन्तःपूर्वपदाट् ठञ् ।६०।

सप्तमीसमर्थादन्तः पूर्वपदादव्ययीभावसंज्ञकात् प्रातिपदिकात् भवार्थे ठञ् स्यात् । आन्तर्वेश्मिकम्[१] । आन्तर्गेहिकम् । ( समानस्य तदादेश्च ) समानस्य–सामानिकः । तदादेः–सामानग्रामिकः । सामानदेशिकः । ( अध्यात्मादिषु चेष्यते ) आध्यात्मिकम् । आधिदैविकम् । आधिभौतिकम् (२) । ( ऊर्ध्वं दमाच्च देहाच्च ठञ् वक्तव्यः ) और्ध्वदमिकम् । और्ध्वदेहिकम् । ( लोकोत्तरपदस्य च ठञ् वक्तव्यः ) ऐहलौकिकम् । पारलौकिकम् । ( मुखपार्श्वतसोरीयः ) मुखतीयः (३) । पार्श्वतीयः । ( कुग् जनस्य परस्य च ) ईयो वक्तव्यः । कुक्चागमः । जनकीयः । परकीयः । ( ईयः कार्य्योथ मध्यस्य ) मध्यीयः । ( मण्मीयौ प्रत्ययौ च वक्तव्यौ ) माध्यमः । मध्यमीयः । ( मध्यशब्दोऽयं मध्यभावमापद्यते, दिनण् चास्मात्प्रत्ययो भवति इति वक्तव्यम् ) ।

---

( १ ) वेश्मनि इति अन्तर्वेश्मम्, तत्र भव इत्यर्थः ।

( २ ) अनुशतिकादीनां चेत्युभयपदवृद्धिः ।

( ३ ) मुखपार्श्वशब्दाभ्यां सप्तम्यन्ताभ्यामाद्यादित्वात्तसिः, तत ईयः, अव्ययानामिति टिलोपः अयं गहादिपाठस्यैव प्रपञ्चः ।

माध्यं उपगायति । ( स्थाम्नो लुगजिनात्तथा ) ( लुक् स्थाम्नो वक्तव्यः ) अश्वत्थामा[१] । ( अजिनान्ताच्च लुग्वक्तव्यः ) कृष्णाजिनः । उष्ट्राजिनः । सिंहाजिनः । व्याघ्राजिनः । ( बाह्यो दैव्यः पाञ्चजन्योथ गम्भीराञ्ज्य इष्यते ) बहिर्भवो बाह्य इत्यादि ।

## ग्रामात् पर्य्यनुपूर्वात् ॥६१॥

सप्तमीसमर्थात् पर्य्यनुपूर्वाद् ग्रामप्रातिपदिकात् भवार्थे ठञ् स्यात् । पारिग्रामिकः । आनुग्रामिकः ।

## जिह्वामूलाङ्गुलेश्छः ।६२।

सप्तमीसमर्थाज्जिह्वामूलादङ्गुलेश्च प्रातिपदिकात् भवार्थे छः स्यात् । यतोऽपवादः । जिह्वामूलीयम् । अङ्गुलीयम् ।

## वर्गान्ताच्च ।६३।

सप्तमीसमर्थाद् वर्गान्तात् प्रातिपदिकाद्भवेर्थे छः स्यात् । कवर्गीयम् । पवर्गीयम् ।

## अशब्दे यत्खावन्यतरस्याम् ।६४।

अशब्देऽर्थे वर्त्तमानाद् वर्गान्तात् प्रातिपदिकाद्भवेर्थे यत्खौ वा

---

( १ ) अश्वस्येव स्थाम बलमस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, ततो भवार्थे स्थाम्नोऽकार इत्यकार स्तस्यानेन लुक् ।

( २ ) गम्भीराञ्ज्य इत्यत्रेदं वक्तव्यमित्यर्थः ।

( ३ ) वृद्धाच्छ इत्यस्य परत्वाद्यत्खौ बाधकाविति वृद्धादप्यनेन छ एषितव्यः, वासुदेववर्गीयः ।

स्तः देवदत्तवर्ग्यः । देवदत्तवर्गीणा वा । देवदत्तवर्गीयः ( १ ) । अशब्दे किम् । कवर्गीयो वर्णः ।

## कर्णललाटात् कनलङ्कारे । ६५ ।

सप्तमीसमर्थाभ्यां कर्णललाटप्रातिपदिकाभ्यां भवेऽर्थे कन् स्यादलङ्कारेऽभिधेये । कर्णिका । ललाटिका । स्त्रीत्वं लोकात् । अलङ्कारे किम् । कर्ण्यम् । ललाट्यम् ।

## तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।६६।

षष्ठीसप्तमीसमर्थात् व्याख्यातव्यनाम्नः प्रातिपदिकात् भवव्याख्यानयोरर्थयोर्यथाविहितं स्यात् । अपवादविधानार्थोऽयं भवव्याख्यानयोर्युगपदधिकारः । सुपां व्याख्यानं सौपो ग्रन्थः । सुप्सु भवं सौपम् । व्याख्यातव्यनाम्नः किम् । पाटलिपुत्रस्य व्याख्यानी सुकोसला ( १ ) ।

(२)

## बह्वचोन्तोदात्ताट्ठञ् ॥ ६७ ॥

षष्ठीसप्तमीसमर्थाद् व्याख्यातव्यनाम्नो बह्वचोऽन्तोदात्तात् प्रातिपदिकात् भवव्याख्यानयोरर्थयोष्ठञ् स्यात् । षत्वञ्च णत्वञ्च षत्वणत्वे, तत्र भवं षात्वणत्विकम् । समासस्येत्यन्तोदात्तः । षत्वस्य णत्वस्य च विधायकं शास्त्रं षत्वणत्वम्, तस्य व्याख्यानो ग्रन्थः षात्वणत्विकः ।

## क्रतुयज्ञेभ्यश्च । ६८ ।

---

( १ )--स तथा व्याख्याने एवं सन्निवेश इति न पाटलिपुत्रो व्याख्यातव्यनाम ।
( २ )--अणोऽपवादः, वृद्धाच्छं तु परत्वाद् बाधते ।

षष्ठीसप्तमीसमर्थेभ्यो व्याख्यातव्यनामभ्यः ऋतुयज्ञेभ्यः प्रातिपदिकेभ्यो भवव्याख्यानयोरर्थयोष्ठञ् स्यात् । अग्निष्टोमस्य व्याख्यानस्तत्र भवो वा–आग्निष्टोमिकः । यज्ञस्य[1] पञ्चौदनस्य व्याख्यानस्तत्र भवो वा पाञ्चौदनिकः । बहुवचनं स्वरूपविधिनिरासार्थम् ।

## अध्यायेष्वेवर्षेः । ६९ ।

षष्ठीसप्तमीसमर्थात् व्याख्यातव्यनाम्नः ऋषिवाचिप्रातिपदिकात् भवव्याख्यानयोरर्थयो ष्ठञ स्यात् अध्यायेष्वेवाभिधेयेषु । वसिष्ठेन दृष्टो मन्त्रो वसिष्ठस्तस्य व्याख्यानस्तत्र भवो वा वासिष्ठिकोऽध्यायः । अध्यायेष्विति किम् । वासिष्ठीऋक् । वसिष्ठे भवेति ।

## पौरोडाशपुरोडाशात् ष्ठन् । ७० ।

षष्ठीसप्तमीसमर्थाभ्यां पौरोडाशपुरोडाशाभ्यां भवव्याख्यानयोरर्थयोष्ठन् स्यात् । पुरोडाशसहचरितो[2] मन्त्रः पुरोडाशः, स एव पौरोडाशः । तस्य व्याख्यानस्तत्र भवो वा पौरोडाशिकः । पुरोडाशिकः ।

(३)

## छन्दसो यदणौ ॥ ७१ ॥

( १ )–यज्ञग्रहणमसोमयागेभ्योऽपि यथास्यादिति ।

( २ )–पुरोडाशाः पिष्टपिण्डाः । दाशृदाने, कर्मणि घञ, पुरो दाश्यन्ते दीयन्त इति पुरोडाशाः, "पृषोदरादित्वात्समासः, दकारस्य डकारः । मन्त्र एव हि व्याख्यातव्यो न पुरोडाशाः, इत्याह "पुरोडाशसहेति"

( ३ ) अत्र भवव्याख्यानो द्वावर्थौ, यदणौ प्रत्ययावपि द्वावेव, तथापि, यथासंख्यं न भवतः, तस्य व्याख्यान इति यदणौ भवतः, तत्र भव इति चेत्येवं समुच्चयात् ।

षष्ठीसप्तमीसमर्थात् व्याख्यातव्यनाम्नश्छन्दःप्रातिपदिकात भवव्याख्यानयो रर्थयोर्यदणौ स्तः। छन्दसो व्याख्यानस्तत्र भवो वा छन्दस्यः। छान्दसो वा।

## द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट् ठक् ।७२।

षष्ठसप्तमीसमर्थेभ्यो व्याख्यातव्यनामभ्यः द्व्यजादिभ्यो भवव्याख्यानयोरर्थयो ष्ठक् स्यात्। ऐष्टिकः। चातुर्होतृकः। ब्राह्मणिकः। आर्चिकः। प्राथमिकः। आध्वरिकः। पौरश्चरणिकः। नामाख्यातग्रहणम्, सङ्घातविगृहीतार्थं द्रष्टव्यम्। नामाख्यातिकः। नामिकः। आख्यातिकः।

## अण् ऋगयनादिभ्यः ।७३।

षष्ठीसप्तमीसमर्थेभ्यो व्याख्यातव्यनामभ्यः ऋगयनादिभ्यो भवव्याख्यानयोरर्थयो रण स्यात्। आर्गयनः। औपनिषदः। ठञादेरपवादः।

## तत आगतः ।७४।

पञ्चमीसमर्थादागतेर्थे यथाविहितं प्रत्ययः स्यात्। मथुराया आगतः, माथुरः।

## ठगायस्थानेभ्यः ।७५।

पञ्चमीसमर्थेभ्य आयस्थानवाचिभ्य आगतेऽर्थे ठक् स्यात। आय इति स्वामिग्राह्यो भाग उच्यते, स यस्मिन्नुत्पद्यते तदायस्थानम्; अणोऽपवादः। शुल्कशालाया आगतः शौल्कशालिकः। स्वरूपविधिनिरासार्थं बहुवचनम्।

## शुण्डिकादिभ्योऽण् ।७६।

पञ्चमीसमर्थेभ्यः शुण्डिकादिभ्यः प्रातिपदिकेभ्य आगतेऽर्थे ऽण् स्यात्। आयस्थानठकोऽपवादः। अणग्रहणं बाधक बाधनार्थम्। औदपादः। शुण्डिकादागतः शौण्डिकः।

## विद्यायोनिसम्बन्धेभ्यो वुञ्। ७७।

पञ्चमीसमर्थात् विद्यायोनिसम्बन्धिनो योनिसम्बन्धिनः प्रातिपदिकादागतेऽर्थे वुञ् स्यात्। उपाध्यायादागतमौपाध्यायकम्। शैष्यकम्। मातुलकम्

## ऋतष्ठञ्। ७८।

पञ्चमीसमर्थात विद्यायोनिसम्बन्धवाचिऋकारान्तात् प्रातिपदिकात् आगतेऽर्थे ठञ् स्यात्। वुञोऽपवादः। होतुरागतं हौतृकम्। भ्रातृकम्। विद्यायोनिभ्यामन्यत्र तु सावित्रम्।

## पितुर्यच्च। ७९।

पञ्चमीसमर्थात् पितृप्रातिपदिकादागतेऽर्थे यत् स्यात् चाट्ठञ्। पित्र्यम्। पैतृकम्।

## गोत्रादङ्कवत्। ८०।

पञ्चमीसमर्थाद्गोत्रप्रत्ययान्तात् प्रातिपदिकादागतेऽर्थे ऽङ्कवत् प्रत्ययाः स्युः। अङ्कग्रहणेन त येदमर्थसामान्यं लक्ष्यते। विदेभ्य आगतं बैदम। गार्गम्। दाक्षम्। औपगवकम्। सङ्घाङ्कलक्षणेष्वञ्यञिञामणित्यण्।

## हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः। ८१।

पञ्चमीसमर्थेभ्यो हेतुवाचिभ्यो मनुष्यवाचिभ्यश्च प्रातिपदिकेभ्यः

आगतेऽर्थे वा रूप्यः स्यात्। मनुष्यग्रहणमहेत्वर्थम् । समादागतं[1] समरूप्यम्। समीयं वा । गहादित्वाच्छः। देवदत्तरूप्यम्। दैवदत्तं वा। बहुवचनं सरूपविधिनिरासार्थम्।

## मयट् च।८२।

पञ्चमीसमर्थेभ्यो हेतुवाचिभ्यो मनुष्यवाचिभ्यश्च प्रातिपदिकेभ्य आगतेऽर्थे मयट् स्यात्। सममयम्। देवदत्तमयम्। टकारो ङीबर्थः। योगविभागो यथासंख्यनिरासार्थः।

## प्रभवति।८३।

पञ्चमीसमर्थात् प्रातिपदिकात प्रभवतीत्यर्थे यथाविहितं स्यात्। हिमवतः प्रभवति[2] हैमवती, गङ्गा।

## विदूराञ्ञ्यः।८४।

पञ्चमीसमर्थाद्विदूरप्रातिपदिकात् प्रभवतीत्यर्थे ञ्यः प्रत्ययः स्यात्। विदूरात्प्रभवति वैदूर्यो मणिः।

बालवायो विदूरश्च प्रकृत्यन्तरमेव वा।
न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत्॥

## तद्गच्छति पथिदूतयोः।८५।

द्वितीयासमर्थात् प्रातिपदिकात् गच्छतीत्यर्थे यथाविहितं स्यात्, पथिदूतयोरभिधेययोः। स्रुघ्नं गच्छति स्रौघ्नः पन्थाः, दूतो वा।

---

(१)—समाद्धेतोरित्यर्थः।
(२)—उत्पत्तिवचनस्तु प्रभवति न गृह्यते, तत्र जात इत्येन गतार्थत्वात्।

तत्स्थेषु[1] गच्छत्सु पन्था गच्छतीत्युच्यते।

## अभिनिष्क्रामति द्वारम् ।८६।

द्वितीयासमर्थात् प्रातिपदिकादभिनिष्क्रामतीत्यर्थे यथाविहितं स्यात्, द्वारश्चेत्तद्भवति। स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम्। स्रुघ्नाभिमुखनिष्क्रमणे करणीभूतमित्यर्थः।

## अधिकृत्य कृते ग्रन्थे ।८७।

द्वितीयासमर्थात् प्रातिपदिकात् अधिकृत्य कृते ग्रन्थ इत्यर्थे यथाविहितं स्यात्। ययातिमधिकृत्य कृतो ग्रन्थः यायातः। (लुबाख्यायि-[2] काभ्यो बहुलम्) तादर्थ्ये चतुर्थी। वासवदत्तामधिकृत्य कृताऽऽख्यायिका वासवदत्ता। अणो लुप्। न च भवति। भैमरथी। ग्रन्थ इति किम्। सुभद्रामधिकृत्य कृतः प्रासादः।

## शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।८८।

द्वितीयासमर्थेभ्यः शिशुक्रन्दादिभ्योऽधिकृत्य कृते ग्रन्थ इत्यर्थे छः स्यात्। शिशुक्रन्दमधिकृत्य कृतो ग्रन्थः शिशुक्रन्दीयः। यमसभीयः। द्वन्द्वे—वाक्पदीयः। इन्द्रजननीयम्। प्रद्युम्नगमनीयम्। इन्द्रजननादिराकृतिगणः। (द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः)। दैवासुरम्।

३

## सोऽस्य निवासः ।८९।

---

(१)—प्राप्तिफले परिस्पन्दे गमिर्वर्त्तते नच पथः परिस्पन्दोऽस्ति, तस्मात् पुरुषवर्त्तिगमनं पथ्युपचयत, इत्याह तत्स्थेष्विति।

(२)—तादर्थ्ये चतुर्थी। आख्यायिका गद्यग्रन्थभेदः। तल्लक्षणं तु साहित्यदर्पणे ऽवलोकनीयम्। (२)—तादर्थ्ये चतुर्थी। नचेदं वक्तव्यं, अभेदोपचारेण तदभिधानाय यः प्रत्यय उत्पन्नस्तस्य बहुलं लुब् भवतीत्यर्थः। ताच्छब्द्यलाभादभिधानलक्षणत्वाच्च क्वचित्तद्धित उत्पद्यते क्वचिन्न।

(३)—तत्र भव इति सिद्धे शब्दार्थभेदात्पृथगुपादानम्।

निवाससमानाधिकरणात् प्रथमासमर्थात् प्रातिपदिकात् षष्ठ्यर्थे यथाविहितं स्यात् । निवासो नाम यत्र सम्प्रत्युष्यते । अभिजनो नाम यत्र पूर्वैरुषितम् । मथुरा निवासोऽस्य माथुरः ।

## अभिजनश्च ।९०।

अभिजनसमानाधिकरणात् प्रथमासमर्थात् प्रातिपदिकात् षष्ठयर्थे यथाविहितं स्यात् । स्रुघ्नोऽभिजनोऽस्य स्रौघ्नः । योगविभाग उत्तरार्थः ।

## (१) आयुधजीविभ्यश्छः पर्वते ।९१।

प्रथमासमर्थात् पर्वतवाचिनः प्रातिपदिकात् अभिजनसमानाधिकरणात् षष्ठयर्थे छः स्यात् । आयुधजीविष्वभिधेयेषु । हृद्गोलः पर्वतोऽभिजनो येषां हृद्गोलीयाः, आयुधजीविनः । आयुधजीविभ्यः किम् । ऋक्षोदः पर्वतोऽभिजनो येषां ते आर्क्षोदाः द्विजाः । पर्वते किम् । सांकाश्यका आयुधजीविनः ।

## शण्डिकादिभ्यो ञ्यः ।९२।

प्रथमासमर्थेभ्योऽभिजनसमानाधिकरणेभ्यः शण्डिकादिभ्यः षष्ठयर्थे ञ्यः स्यात् । शाण्डिक्यः । सार्वसेन्यः । अणादेरपवादः(२) ।

---

(१) आयुधजीविभ्य इति तादर्थ्ये चतुर्थी । यदि त्वायुधजीविभ्य इति पञ्चमी स्यात्पर्वतादिति ल्यब्लोपे पञ्चमी व्याख्येया स्यात्ततश्चायमर्थः स्यादायुधजीविभ्यः पर्वतमुद्दिश्य पर्वतेऽभिधेये छो भवतीति तत्र सोऽभिजन इत्यधिकारो बाध्येत ।

(२) आदिशब्देन छादेः । तत्र यदि शण्डिकादयः पर्वतशब्दास्तर्हि पूर्वेण छः प्राप्तः, अथ जनपदशब्दास्ततो वृद्धादपि बहुवचनविषयादिति वुञ् । शण्डिकाशब्दात्कोपधादण् प्राप्तः ।

## सिन्धुतक्षशिलादिभ्यो ऽणञौ ।९३।

अभिजनसमानाधिकरणेभ्यः प्रथमासमर्थेभ्यः सिन्ध्वादिभ्यस्तक्षशिलादिभ्यश्च यथाक्रमं षष्ठ्यर्थे ऽणञौ स्तः। सिन्धुरभिजनोऽस्य सैन्धवः। ताक्षशिलः।

## तूदीशलातुरवर्म्मतीकूचवाराड्ढक्छण्ढञ्यकः ॥९४॥

अभिजनसमानाधिकरणेभ्यः प्रथमासमर्थेभ्यस्तूद्यादिभ्यः षष्ठ्यर्थे ढक्छण्ढञ्यकाः स्युः। तौदेयः। शालातुरीयः। वार्मतेयः। कौचवार्य्यः।

## भक्तिः ।९५।

भक्तिसमानाधिकरणात प्रथमासमर्थात् षष्ठ्यर्थे यथाविहितं स्यात्। स्रुघ्नो भक्तिरस्य स्रौघ्नः। अपूपा भक्तिरस्य आपूपिकः।

## अचित्तादेशकालाट्ठक् ।९६।

भक्तिसमानाधिकरणात् प्रथमासमर्थात् देशकालभिन्नादचित्तात् षष्ठ्यर्थे ठक् स्यात्। पायसो भक्तिरस्य पायसिकः[1]। अचित्तादिति किम्। दैवदत्तः। अदेशकालात् किम्। स्रौघ्नः। ग्रैष्मः।

## महाराजाट् ठञ् ।९७।

भक्तिसमानाधिकरणात् प्रथमासमर्थात् महाराजात् षष्ठ्यर्थे ठञ् स्यात्। माहाराजिकः।

---

(१) स्वरूपग्रहणं तु न भवति, देशकालप्रतिषेधात्, तत्साहचर्याद्देशकालयोरपि स्वरूपग्रहणं न भवति।

## वासुदेवार्जुनाभ्यां वुन् ।९८।

भक्तिसमानाधिकरणाभ्यां प्रथमासमर्थाभ्यां वासुदेवार्जुनाभ्यां षष्ठ्यर्थे वुन् स्यात् । वासुदेवकः । अर्जुनकः । अजाद्यदन्तस्यार्जुनशब्दस्य पूर्वनिपातमकुर्वन् ज्ञापयत्याचार्य्योऽभ्यर्हितं पूर्वं निपततीति।

## गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥९९॥

भक्ति समानाधिकरणेभ्यः प्रथमासमर्थेभ्यो गोत्राख्येभ्यः क्षत्रियाख्येभ्यश्च षष्ठ्यर्थे बहुलं वुञ् स्यात् । ग्लुचुकायनि भक्तिरस्य ग्लौचुकायनकः । नाकुलकः । बहुलग्रहणात् क्वचिन्न । पाणिनो भक्तिरस्य पाणिनीयः। पौरवीयः ।

## जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ।१००।

बहुवचने जनपदेन समानशब्दानाञ्जनपदिन सर्वं[२] जनपदवत्कार्य्यं स्यात् । जनपदतदवध्योश्चेति प्रकरणे ये प्रत्यया उक्तास्तेऽतदिश्यन्ते । अङ्गा जनपदो भक्तिरस्य आङ्गकः । अङ्गा क्षत्रिया भक्तिरस्य आङ्गकाः । जनपदिनां किम् । पञ्चालाः ब्राह्मणा भक्तिरस्येति पाञ्चालः । जनपदेनेति किम् । पौरवो राजा भक्तिरस्य पौरवीयः पुरुशब्दो जनपदवाची ।

## तेन प्रोक्तम् ॥१०१॥

तृतीयासमर्थात् प्रोक्तेऽर्थे यथाविहितं स्यात् । पाणिनिना प्रोक्तं

---

( १ )–आङ्पूर्वात् ख्यातेर्मूलविभुजादित्वात् कः ।
( २ )–प्रत्ययः प्रकृतिश्च ।

पाणिनीयम् । प्रकर्षेणोक्तं(१) प्रोक्तं नतु कृतम्(२) । कृते ग्रन्थ इत्यनेन गतार्थत्वात् ।

## तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।१०२।

तृतीयासमर्थेभ्यस्तित्तिर्यादिभ्यः प्रोक्तेऽर्थे छण् स्यात् । तित्तिरिणा प्रोक्तमधीयते तैत्तिरीयाः वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः ।

## काश्यपकौशिकाभ्यामृषिभ्यां णिनिः (३) ।१०३।

तृतीयासमर्थाभ्यां काश्यपकौशिकाभ्यां प्रोक्तेऽर्थे णिनिः स्यात् । काश्यपेन प्रोक्तमधीयते काश्यपिनः । कौशिकिनः । ऋषिभ्यामिति किम् । इदानींतनेन गोत्रकाश्यपेन प्रोक्तं काश्यपीयम् ।

## कलापिवैशम्पायनान्तेवासिभ्यश्च ।१०४।

तृतीयासमर्थेभ्यः कलापिवैशम्पायनान्तेवासिभ्यः प्रोक्तेर्थे णिनिः स्यात् । हरिद्रुणा प्रोक्तमधीयत इति हारिद्रविणः । कलापिनः शिष्यो हरिद्रुः । आलम्बिना प्रोक्तमधीयत इति आलम्बिनः । वैशम्पायनान्तेवासी आलम्बी ।

## पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥१-५॥

तृतीयासमर्थात् प्रोक्तेर्थे णिनिः स्यात्, यत्प्रोक्तं पुराणप्रोक्ता-

---

(१) प्रकर्षेणेति वचनाद् ग्रामे ग्रामे यद्यपि काठकादिकं देवदत्तादिभिः प्रोच्यते, तथापि तेभ्यः प्रत्ययो न भवति ।

(२) प्रपूर्वो वचिः करणेपि वर्त्तत इति भावः ।

(३) अणोपवादः । छं तु परत्वाद्बाधते ।

(४) पुराणेन चिरन्तनेन मुनिना प्रोक्ता इति ।

च्छेद् ब्राह्मणकल्पास्ते स्युः। ब्राह्मणेषु–शाट्यायनेन प्रोक्तमधीयते शाट्यायनिनः। भल्लुना प्रोक्तमधीयते भाल्लविनः। पिङ्गेन प्रोक्तः–पैङ्गीकल्पः। पुराणप्रोक्तेषु किम्। याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि। अणि आपत्यस्येति यलोपः। भाष्येतु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वादित्युक्त्वा याज्ञवल्क्यानि ब्राह्मणानीति पठितम्।

## शौनकादिभ्यश्छन्दसि। १०६।

तृतीयासमर्थेभ्यः शौनकादिभ्यः प्रोक्तेऽर्थे णिनिः स्यात्, छन्दसि विषये। शौनकेन प्रोक्तमधीयते इति शौनकिनः। छन्दसि किम्। शौनकीया शिक्षा।

## कठचरकाल्लुक्। १०७।

तृतीयासमर्थाभ्यां कठचरकाभ्यां प्रोक्तेऽर्थे विहितस्य प्रत्ययस्य लुक् स्यात्[१]। कठेन प्रोक्तमधीयते कठाः। वैशम्पायनान्तेवासित्वाण्णिनिः। तस्याऽनेन लुक्। चरकाः। अणोलुक्।

## कलापिनोऽण्[२]। १०८।

तृतीयासमर्थात् कलापिप्रातिपदिकात् प्रोक्तेऽर्थे ऽण् स्यात्। कलापिना प्रोक्तमधीयते कालापाः। सब्रह्मचारीत्यादिना टिलोपः।

## छगलिनो ढिनुक्। १०९।

( १ )–छन्दसीत्येव चारका श्लोकाः।
( २ )–वैशम्पायनान्तेवासित्वात्प्राप्तस्य णिने रपवादः।

तृतीयासमर्थाच्छगलिन् प्रातिपदिकात् प्रोक्तेऽर्थे ढिनुक् स्यात्। छागलेयिनः। छगली कलाप्यन्तेवासी (१)।

## पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः। ११०।

तृतीयासमर्थाभ्यां पाराशर्यशिलालिभ्यां प्रोक्तेऽर्थे ढिनुक् स्यात्, भिक्षुनटसूत्रयोः। पाराशर्य्येण प्रोक्तम्भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः। शैलालिनो नटाः। तद्विषयता चात्र विज्ञायते। तदर्थं छन्दोग्रहणमनुवर्त्यम्। सूत्रयोश्छन्दस्त्वन्तु गौण्या वृत्त्या। भिक्षुनटसूत्रयोरिति किम्। पाराशरम्। शैलालम्।

## कर्मन्दकृशाश्वादिनिः। १११।

तृतीयासमर्थाभ्यां कर्म्मन्दकृशाश्वाभ्यां प्रोक्तेऽर्थे इनिः स्यात्, भिक्षुनटसूत्रयोः। कर्म्मन्देन प्रोक्तमधीयते कर्म्मन्दिनो भिक्षवः। कृशाश्विनो नटाः। अत्रापि पूर्ववत्तद्विषयिता। भिक्षुनटसूत्रयोरिति किम्। कार्मन्दम्। कार्शाश्वम्।

## तेनैकदिक्। ११२।

तृतीयासमर्थात् प्रातिपदिकादेकदिगित्यर्थे यथाविहितं प्रत्ययः स्यात्। हिमवता एक (२)दिक् हैमवती। तेनेत्यनुवर्त्तमाने पुनर्ग्रहणं छन्दोनिवृत्त्यर्थम्।

## तसिश्च। ११३।

तृतीयासमर्थात् प्रातिपदिकात् एकदिगित्यर्थे तसिः स्यात्।

---

(१)—कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः।

(२)—समाना दिगित्यर्थः।

पीलुमूलेनैकदिक् पीलुमूलतः(१)।

## उरसो यच्च ।११४।

तृतीयासमर्थादुरस्प्रातिपदिकात् एकदिगित्यर्थे यत् स्यात् चात्तसिः। अणोपवादः। उरसा एकदिक्, उरस्यः। उरस्तः।

## उपज्ञाते ।११५।

तृतीयासमर्थात् उपज्ञातेऽर्थे यथाविहितं स्यात्। विनोपदेशेन ज्ञातमुपज्ञातम्(२)। पाणिनिना उपज्ञातं पाणिनीयम्।

## कृते ग्रन्थे ॥११६॥

तृतीयासमर्थात् कृतेऽर्थे यथाविहितं प्रत्ययः स्यात् कृतो ग्रन्थश्चेत्। वररुचिना कृतो ग्रन्थः वाररुचो ग्रन्थः। कृतमुत्पादितम्। विद्यमानमेव ज्ञातमुपज्ञातमित्यनयोर्विशेषः।

## संज्ञायां कुलालादिभ्यो वुञ् ।११७।

तृतीयासमर्थेभ्यः कुलालादिभ्यः कृतेऽर्थे यथाविहितं स्यात्, संज्ञायां गम्यमानायाम्। योगविभागोऽत्र भाष्यकृतः। मक्षिकाभिः कृतं माक्षिकं मधु। कुलालेन कृतः कौलालको घटः।

## क्षुद्राभ्रमरवटरपादपादञ् ११८।

तृतीयासमर्थेभ्यः क्षुद्रादिभ्यः कृतेऽर्थेऽञ् स्यात, संज्ञायां गम्यमानायाम्। क्षुद्राभिः कृतं क्षौद्रम्। भ्रामरम्। वाटरम्। पादपम्(३)। स्वरे भेदः।

---

[१] तस्मिन्नेवार्थे विधीयमानस्याप्यस्य लिङ्गसंख्यानुपादानं स्वाभाविकं वेदितव्यम्।

[२] उपपूर्वो जानातिरत्र प्रसिद्ध इत्यर्थः।

[३] अन्ये तु पादपशब्दस्य स्थाने पदशब्दं पठन्ति।

(१)
## तस्येदम् ॥११९॥

षष्ठीसमर्थात् प्रातिपदिकादिदमित्यर्थे यथाविहितं प्रत्ययः स्यात्। उपगोरिदमौपगवम्। राष्ट्रियम्। देवदत्तस्यानन्तरमित्यादिष्वनभिधानान्न भवति। (वहेस्त्रन्तादण् चेट् च वक्तव्यः) संवोढुः स्व सांवहित्रम्। (अग्नीधः शरणे रण् भश्च। अग्नीधः शरणमाग्नीधम्। (समिधामाधाने षेण्यण् वक्तव्यः) समिधानो मन्त्रः सामिधेन्यो मन्त्रः। सामिधेनी ऋक्।

## रथाद्यत् ।१२०।

षष्ठीसमर्थाद् रथप्रातिपदिकादिदमर्थे यत् स्यात्। रथस्येदं रथ्यं चक्रम्। युगं वा। रथाङ्ग एवेष्यते। रथसीतेत्यादिना तदन्तविधिः। तस्मिंश्च परमरथ्यम्।

(२)
## पत्रपूर्वादञ् ।१२१।

षष्ठीसमर्थात पत्रपूर्वाद्रथान्तात् प्रातिपदिकादिदमर्थे ऽञ् स्यात्। पूर्वापवादः। अश्वरथस्येदं आश्वारथम्। औष्ट्ररथं चक्रम्।

## पत्राध्वर्युपरिषदश्च ।१२२।

षष्ठीसमर्थेभ्यः पत्रादिभ्यः (३) प्रातिपदिकेभ्य इदमर्थेऽञ् स्यात्। अणोपवादः। (पत्राद्वाह्ये) अश्वस्येदं वहनीयं आश्वम्। अध्वर्योरिदं

---

(१) अत्रेदमित्यनेन शेषभूतसर्वविशेषणानां सामान्यविशेषरूपेण प्रत्ययार्थत्वं बोधयति।

(२) पत्रे त्वर्थग्रहणमितरयोः स्वरूपग्रहणं व्याख्यानमेवात्र शरणम्।

(३) पत्रवाचिस्ताभ्यां चेत्यर्थः। यत्रं वाहनम्।

आध्वर्यम् । परिषद इदं पारिषदम् ।

## हलसीराट्ठक् ॥१२३॥

षष्ठीसमर्थाभ्यां हलसीराभ्यामिदमर्थे ठक् स्यात् । हालिकम् । सैरिकम् ।

(१)

## द्वन्द्वाद्वुन् वैरमैथुनिकयोः ।१२४।

षष्ठीसमर्थाद् द्वन्द्व संज्ञकात् प्रातिपदिकादिदमर्थे वुन् स्याद्वैरमैथुनिकयोरभिधेययोः । काकोलूकस्येदं वैरम् इति काकोलूकिका । स्त्रीत्वं लोकात् । कुत्सकुशिकयोर्मैथुनिका कुत्सकुशिकिका । ( वैरे देवासुरादिभ्यः प्रतिषेधः ) दैवासुरम् । रक्षोऽसुरम् ।

(२)

## गोत्रचरणाद्वुञ् ।१२५।

षष्ठीसमर्थेभ्यो गोत्रवाचिभ्यश्चरणवाचिभ्यश्चेदमर्थे वुञ् स्यात् । ग्लुचुकायनस्येदं ग्लौचुकायनकम् । । चरणाद्धर्माम्नाययोरिष्यते इति काशिकायाम् । कठस्य धर्म्मं आम्नायो वा काठकम् । कालापकम् ।

## सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।१२६।

षष्ठीसमर्थादञन्तात्यञन्तादिञन्ताच्च प्रातिपदिकादिदमर्थे ऽण् स्यात्, सङ्घाङ्कलक्षणेश्वभिधेयेषु । पूर्वापवादः । ( सङ्घादिषु घोषग्रहणं

---

( १ ) वैरं विरोधः । वारीणामिदमिति कृत्वा ।

( २ ) वुनि प्रकृते वुञो विधानमवृद्धेषु वृद्धयर्थं वृद्धेषु वुञि वुनि च विशेषो नास्ति तदवे रूपं स एव स्वरः । पुंवद्भावप्रतिषेधोऽपि, न कोपभाया इत्युभयोरस्ति ।

कर्त्तव्यम् ) विदानां संघोऽङ्को लक्षणङ्घोषो वा बैदः । गार्गः । दात्तः । णित्करणन्तु ङीबर्थं, पुंवद्भावप्रतिषेधार्थञ्च । बैदी । बैदीस्थूणाऽस्य स बैदीस्थूणः ।

## शाकलाद्वा ।१२७।

षष्ठीसमर्थात् शाकलप्रातिपदिकादिदमर्थेऽण् वा स्यात् । सङ्घाङ्कलक्षणेष्वभिधेयेषु । शाकलेन प्रोक्तमधीयते शाकलाः । शाकलानां सङ्घादिः शाकलः । शाकलकः ।

## छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥१२८॥

षष्ठीसमर्थेभ्यश्छन्दोगादिभ्य इदमर्थे ञ्यः स्यात् । छन्दोगानामयं धर्म्म आम्नायो वा छान्दोग्यम् । औक्थिक्यम् । याज्ञिक्यम् । बाह्वृच्यम् । नाट्यम् । धर्म्माम्नायाभ्यामन्यत्र तु छान्दोगं कुलम् । नटादपि धर्म्माम्नाययोरेव ।

## न दण्डमाणवान्तेवासिषु ।१२९।

दण्डमाणवान्तेवासिष्वभिधेयेष्विदमर्थे वुञ् न स्यात् । दण्डप्रधाना माणवा दण्डमाणवाः । दाक्षेरिमे दाक्षाः । दण्डमाणवा अन्तेवासिनो वा ।

## रैवतिकादिभ्यश्छः ॥१३०॥

षष्ठीसमर्थेभ्यो रैवतिकादिभ्य श्छ स्यादिदमर्थे । वुञोऽपवादः । रैवतिकीयः । ( कौपिञ्जलहास्तिपदादण्[1] ) कौपिञ्जलः । हास्ति-

---

( १ ) कपिञ्जलस्यापत्यम्, अस्मादेव निपातनादण्, तदन्तात्पुनरण् । हस्तिन इव पादावस्य हस्तिपादस्तस्यापत्यमित्यस्मादेव निपातनादण् पद्भावश्चेति हरदत्तः ।

पदः । ( आथर्वणिकस्येकलोपश्च ) । आथर्वणिकस्य धर्म्म आम्नायो वा, आथर्वणः ।

## तस्य विकारः ।१३१।[1]

षष्ठीसमर्थाद् विकारेऽर्थे यथाविहितं स्यात् । अश्मनो विकार आश्मनः । आश्मो वा । अश्मनो विकार इति टिलोपः पाक्षिकः । मृत्तिकायाः विकारः मार्त्तिकः । तस्य प्रकरणे पुनस्तस्य ग्रहणं शैषिकनिवृत्त्यर्थम् । तेन विकारावयवो घादयो न भवन्ति । हालः । सैरः ।

## अवयवे च प्राण्योषधिवृक्षेभ्यः ।१३२।

इत उत्तरं षष्ठीसमर्थेभ्योः प्राण्योषधिवृक्षेभ्यो ऽवयवविकारयोरर्थयोर्यथाविहितं प्रत्ययाः स्युः । प्राणिभ्यः-कपोतस्य विकारः कापोतः । ओषधिभ्यः-मुर्व्या अवयवो विकारो वा मौर्वम् (२) । वृक्षेभ्यः करीरस्य विकारोऽवयवो वा कारीरम् ।

## बिल्वादिभ्योऽण् ।।१३३।।

षष्ठीसमर्थेभ्यो बिल्वादिभ्योऽवयवविकारयोरर्थयो रण् स्यात् । अञ्मयटोरपवादः । बिल्वस्य विकारोऽवयवो वा बैल्वम् ।

## कोपधाच्च ॥ १३४ ॥

षष्ठीसमर्थात् कोपधप्रातिपदिकादवयवविकारयोरर्थयो रण्।

---

( १ ) घादिसम्बन्धस्य तस्य ग्रहणस्य निवृत्तये पुनस्तस्येत्युक्तम् ।

( २ ) मूर्वाशब्दः "तृणधान्यानां च द्व्यचाम्" इत्याद्युदात्तः ।

स्यात्। अणोऽपवादः। तर्कोरवयवो विकारो वा तार्कवम्।

## त्रपुजतुनोः षुक् ।१३५।

षष्ठीसमर्थाभ्यां त्रपुजतुभ्यां प्रातिपदिकाभ्यां विकारेऽर्थे ऽण् स्यात् षुगागमश्च। त्रपुणो विकारस्त्रापुषम्। जातुषम्। अकारादित्वान्नावयवे।

## ओरञ् ।१३६।

षष्ठीसमर्थादुवर्णान्तात प्रातिपदिकादवयवविकारयोरर्थयो रञ् स्यात्। देवदारु–दैवदारवम्।

## अनुदात्तादेश्च ।१३७।

षष्ठीसमर्थादनुदात्तादेः प्रातिपदिकादवयवविकारयो रञ् स्यात्। कापित्थम्। दाधित्थम्[1]।

## पलाशादिभ्यो वा ।१३८। (२)

षष्ठीसमर्थेभ्यः पलाशादिभ्योऽवयवविकारयो रर्थयो रञ् वा स्यात्। पालाशम्। स्वरे विशेषः।

## शम्याष्ट्लञ् ।१३९।

षष्ठीसमर्थात् शमीप्रातिपदिकादवयवविकारयोरर्थयोष्ट्लञ् स्यात्। शामीलं भस्म। शामीली स्रुक्(३)। टित्वान् ङीप्।

---

[१] दधनि तिष्ठतीति सुपि स्थः। उपपदसमासः। पृषोदरादित्वात्सकारस्य तकारः। कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्।

[२] उभयत्र विभाषेयम्। पलाशशब्दो घृतादित्वादन्तोदात्तः।

[३] चातुर्मास्ये वरुणप्रवासेषु शमीतय्यः स्रुचो भवन्तीति श्रुतम्।

( १ )

## मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः । १४० ।

षष्ठीसमर्थात् प्रातिपदिकाद्भक्ष्याच्छादनवर्जितयो विकारावयवयोरर्थयोर्वा मयट् स्याद्भाषायाम् । अश्मनो विकारो ऽवयवो वा अश्ममयम्, आश्मनम् वा । अभक्ष्याच्छादनयोः किम् । मौद्गः सूपः । कार्पासमाच्छादनम् ।

## नित्यं वृद्धशरादिभ्यः । १४१ ॥

षष्ठीसमर्थेभ्यो वृद्धसंज्ञकेभ्यः शरादिभ्यश्च प्रातिपदिकेभ्यो भक्ष्याच्छादनवर्जितयो विकारावयवयोरर्थयो नित्यं मयट् स्याद् भाषायाम् । आम्रस्य विकारोऽवयवो वाऽऽम्रमयम् । शरमयम् । एकाचो नित्यं मयडित्यर्थं नित्यग्रहणम् ।

## गोश्च पुरीषे । १४२ ।

षष्ठीसमर्थाद्गोः प्रातिपदिकान्मयट् स्यात, पुरीषेऽभिधेये । गोः पुरीषम्, गोमयम् । पुरीषे किम् । गव्यं पयः ।

## पिष्टाच्च । १४३ ।

षष्ठीसमर्थात् पिष्टप्रातिपदिकाद् विकारेऽर्थे मयट् स्यात् । पिष्टमयम् । कथं पैष्टी सुरेति । सामान्यविवक्षायां तस्येदमित्यण् ( २ ) ।

## संज्ञायां कन् ॥ १४४ ॥

---

( १ )–इह विकारावयवाभ्यां सह प्रत्येकम् "अभक्ष्याच्छादनयोः" इति सम्बध्यते, समासनिर्देशादतो यथासंख्यन्न ।

( २ )–यथा रामायणे "प्रदीयतां दाशरथाय मैथिली" ।

षष्ठीसमर्थात् पिष्टप्रातिपदिकाद् विकारे कन् स्यात्, संज्ञायां गम्यमानायाम्। पिष्टकः। पूपोऽपूपः पिष्टकः स्यात्।

## व्रीहेः पुरोडाशे ।१४५।

षष्ठीसमर्थाद् व्रीहिप्रातिपदिकाद् विकारेऽर्थे मयट् स्यात्, पुरोडाशेऽभिधेये। बिल्वाद्यणोऽपवादः। व्रीहिमयः पुरोडाशः। व्रैहमन्यत्।

## असंज्ञायां तिलयवाभ्याम् ।१४६।

षष्ठीसमर्थाभ्यां तिलयवाभ्यामवयवविकारयो रर्थयोर्मयट् स्याद संज्ञायां गम्यमानायाम्। तिलमयम्। यवमयम्। असंज्ञायां किम्। तैलम्। यावकः(१)। यावादिभ्यः कन्।

## द्व्यचश्छन्दसि ।१४७।

षष्ठीसमर्थाद् द्व्यच् प्रातिपदिकादवयवविकारयो रर्थयो र्मयट् स्यात्, छन्दसि विषये। दर्भमयं वासो भवति। शरमयं बर्हि र्भवति।

## नोत्वद्वर्ध्रबिल्वात् ॥१४८॥

षष्ठीसमर्थाभ्यामुत्वतोवर्ध्रबिल्वाभ्याञ्चावयवविकारयोरर्थयो र्मयट् न स्यात्। मौञ्जम् शिक्यम्। वार्ध्री बालप्रग्रथिता भवति। द्व्यचश्छन्दसीति प्राप्तो मयट् प्रतिषिध्यते। बैल्वो ब्रह्मवर्चसकामेन कार्य्यः।

## तालादिभ्योऽण् ।१४९।

षष्ठीसमर्थेभ्यस्तालादिभ्यो ऽवयवविकारयो रर्थयो रण् स्यात्।

---

(१) यवशब्दाद्विकारेऽण्। तदन्ताद्यावादिभ्य इति स्वार्थे कन्।

मयडाद्यपवादः ।१ तालं धनुः । ( तालाद्धनुषि ) । तालमयमन्यत् ।

(३)
## जातरूपेभ्यः परिमाणे । १५० ।

षष्ठीसमर्थेभ्यो जातरूपवाचिभ्यो विकारेऽण् स्यात, परिमाणे गम्यमाने । मयटाद्यपवादः । जातरूप सुवर्णम् । हाटको निष्कः । परिमाणे किम् । यष्टिरियं हाटकमयी ।

## प्राणिरजतादिभ्योञ् । १५१ ।

षष्ठीसमर्थेभ्यः प्राणिरजतादिभ्योञ् स्यादवयवविकारयोरर्थयोः । अणाद्यपवादः । शौकम् । वाकम् । रजतस्य विकारोऽवयवो वा राजतम् ।

(२)
## ञितश्च तत्प्रत्ययात् । १५२ ।

ञितो विकारावयवार्थः प्रत्ययस्तदन्तात् षष्ठीसमर्थादवयवविकारयोरर्थयोऽञ् स्यात । मयटोऽपवादः । दैवदारवस्य विकारादि दैवदारवम् । ञितः किम् । बैल्वमयम् । तत्प्रत्ययादिति किम् । बैदमयम् ।

---

( १ )—आदिशब्देनाञो ग्रहणम् ।

( २ )—गणसूत्रमिदम् ।

( ३ )—बहुवचनात्पर्यायग्रहणम् ।

( ४ )—तयोर्वाचकत्वेन यत्सम्बन्धी प्रत्ययस्स तत्प्रत्ययः ।

(१)

## क्रीतवत् परिमाणात् । १५३ ।

षष्ठीसमर्थात् परिमाणवाचिनः प्रातिपदिकादनयोरर्थयोः क्रीतवत् प्रत्ययाः स्युः। अणाद्यपवादः। निष्कस्य विकारो नैष्किकः। प्राग्वहते ठञ् इत्यारभ्य ये प्रत्ययाः क्रीतार्थे येनोपाधिना परिमाणाद्विहिता स्ते तथैव विकारेऽतिदिश्यन्ते। शत्यः। शतिकः।

## उष्ट्राद् वुञ् । १५४ ।

षष्ठीसमर्थादुष्ट्रप्रातिपदिकादनयोरर्थयो वुञ् स्यात्। प्राण्यञोऽपवादः। औष्ट्रकम्।

## उमोर्णयोर्वा । १५५ ।

षष्ठीसमर्थाभ्यामुमोर्णाभ्यां प्रातिपदिकाभ्यामनयो रर्थयोर्वा वुञ् स्यात्। औमम्। औमकम्। और्णम्। और्णकम्। अणञोरपवादः। पक्षे यथाक्रममणञौ।

## एण्या ढञ् । १५६ ।

षष्ठीसमर्थादेण्यप्रातिपदिकादनयोरर्थयो ढञ् स्यात्। प्राण्यञोऽपवादः। ऐणेयम्।

(२)

## गोपयसो र्यत् । १५७ ।

षष्ठीसमर्थाभ्यां गोपयोभ्यामनयोरर्थयोर्यत् स्यात्। गव्यम्। पयस्यम्।

(१)—परिमाणशब्देन परिच्छेदकमात्रं व्याख्यानात् तेन संख्याया अपि ग्रहणम्।

(२) यद्यपि सर्वत्र गोरजादिप्रसङ्गे यदुक्तस्तथापि 'मयड्वैतयोः' इति पक्षे प्राप्तं मयटं बाधितुं पुनरयं यद्विधिः।

## द्रोश्च ।१५८।

षष्ठीसमर्थाद् द्रुप्रातिपदिकादनयोरर्थयोर्यत् स्यात । द्रव्यम् । द्रु वृक्षस्तस्यविकारोऽवयवो वा ।

## मा[1] ने वयः ।१५९।

षष्ठीसमर्थाद् द्रुप्रातिपदिकादनयोरर्थयो वयः स्यान्माने । द्रुवयम् ।

## फले लुक् ॥१६०॥

विकारावयवयोरुत्पन्नस्य प्रत्ययस्य लुक् स्यात्, फलेऽभिधेये । आमलक्याः फलमामलकम् । मयटो लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुक ।

## प्लक्षादिभ्योऽण्[2] ।१६१।

षष्ठीसमर्थेभ्यः प्लक्षादिभ्योऽनयोरथयो रण् स्यात्, फलेभिधेये । प्लक्षस्य फलं प्लाक्षम् । विधानसामर्थ्यान्न लुक् ।

## जम्ब्वा वा ।१६२।

षष्ठीसमर्थाज्जम्बूप्रातिपदिकाद् वाऽण्, फलेभिधेये । जाम्बवानि, जम्बूनि वा फलानि । पक्षेऽञ् तस्य लुक् ।

## लुप् च ॥१६३॥

जम्बूशब्दात्परस्य प्रत्ययस्य लुप् वा स्यात् फलेभिधेये । युक्त-

(१) मीयते येन तन्मानं प्रस्थादि ।

(२) अञोऽपवादः ।

तद्भावे विशेषः । जम्ब्वाः फलं जम्बूः । जम्बु जाम्बवम् वा । (लुप्प्रकरणे फलपाकशुषामुपसंख्यानम्) । फलपाकेन शुष्यन्ति इति फलपाकशुषः व्रीहयः । यवाः । (पुष्पमूलेषु बहुलम्) मल्लिकायाः पुष्पं मल्लिका । विदार्या मूलं विदारी । बहुलवचनान्नेह-पाटलानि मूलानि । बिल्वादित्वादण् ।

## हरीतक्यादिभ्यश्च ।१६४।

हरीतक्यादिभ्यः परस्य प्रत्ययस्य लुप् स्यात्, फलेऽभिधेये । हरीतक्याः फलं हरीतकी ।

## कंसीयपरशव्ययोर्यञञौ लुक् च ।१६५।

षष्ठीसमर्थाभ्यां कंसीयपरशव्याभ्यां विकारेऽर्थे यञञौ स्तः, एतयोरवयवस्य प्रत्ययस्य लुक् स्यात् । कंसाय हितं कंसीयम्, तस्यविकारः कांस्यम् । परशवे हितं परशव्यम्[२] । तस्य विकारः पारशवः ।

# इति चतुर्थाध्यायस्य तृतीयः पादः ।

[१] प्राक्क्रीताच्छ इत्यधिकारे तस्मै हितमिति छः ।

[२] तस्यैव छस्यापवादतया गवादिभ्यो यत् ।

# अथ चतुर्थः पादः ।

## प्रागवहतेष्ठक् ॥ १ ॥

वहतिशब्दात् प्राक् ठगधिक्रियते । वहतेःप्राग्याननुक्रमिष्यामस्तेषु ठक् वेदितव्यः । अक्षैर्दीव्यति आक्षिकः, इत्यादि । ( ठक्प्रकरणे तदाहेतिमाशब्दादिभ्य उपसंख्यानम् ) माशब्द इत्याहेति माशब्दिकः । नैत्यशब्दिकः । कार्य्यशब्दिकः । ( आहौ प्रभूतादिभ्य उपसंख्यानम् ) प्रभूतमाह प्राभूतिकः । पार्य्याप्तिकः । ( पृच्छतौ सुस्नातादिभ्यष्ठक् वक्तव्यः ) सुस्नातं पृच्छतीति सौस्नातिकः । सौखराजिकः । सौखशायनिकः (१) । ( गच्छतौ परदारादिभ्यः ) परदारान् गच्छतीति पारदारिकः । गौरुतल्पिकः ।

## तेन दीव्यति खनति जयति जितम् ।२।

तृतीयासमर्थाद् दीव्यत्यादिष्वर्थेषु ठक् स्यात् । अक्षैर्दीव्यति, जयति, जितं वा आक्षिकः । कुद्दालेन खनतीति कौद्दालिकः (२) ।

## संस्कृतम् । ३ ।

---

( १ )–अनुशतिकादित्वादुभयपदवृद्धिः ।

( २ )–इह कालपुरुषसंख्या न विवक्षिता । कारकन्तु विवक्षितमेव । जयति जितमिति कर्तृकर्मणोः पृथगुपादानात्, तेनाक्षैर्द्यूतः, अक्षैः खात इति कर्माद्यर्थे आक्षिक इति न भवति ।

तृतीयासमर्थात्संस्कृतेऽर्थे ठक् स्यात्। दध्ना संस्कृतं दाधिकम्। मारीचिकम्। योगविभाग उत्तरार्थः।

## कुलत्थकोपधादण्। ४।

तृतीयासमर्थाभ्यां कुलत्थकोपधाभ्यां संस्कृतेऽर्थेऽण्। ठकोऽपवादः। कुलत्थैः संस्कृतं कौलत्थम्। तिन्तिडीकेन संस्कृतं तैन्तिडीकम्।

## तरति। ५।

तृतीयासमर्थात्तरत्यर्थे ठक् स्यात्। काण्डप्लवेन तरति काण्डप्लविकः। औडुपिकः।

## गोपुच्छाट् ठञ्। ६।

तृतीयासमर्थाद् गोपुच्छात्तरतीत्यऽर्थे ठञ् स्यात्। ठकोऽपवादः। स्वरे विशेषः। गौपुच्छिकः।

## नौद्व्यच ष्ठन्। ७।

तृतीयासमर्थान्नौप्रातिपदिकाद् द्व्यचश्चरतीत्यऽर्थे ठन् स्यात्, ठकोऽपवादः। नावा तरति नाविकः। घटिकः। बाहुभ्यां तरति बाहुका-(१) स्त्री (२)।

## चरति॥ ८॥

तृतीयासमर्थाच्चरतीत्यर्थे ठक् स्यात्। दध्ना चरतीति दाधिकः।

( १ )–सूते सांहितकः षकारस्तेन न ङीष्।

( २ )–ठकि बाहुका, इति न सिध्येतेति ठनो नित्करणप्रयोजनमिदम्। तत्र हि बाहुकीति स्यात्।

हास्तिकः । शाकटिकः ।

## आकर्षात्ष्ठल् ।९।

तृतीयासमर्थादाकर्षात् चरतीत्यर्थे ष्ठल् स्यात्। आकर्षेण चरति आकर्षिकः । आकर्षो निकषोपलः । सांहितिकानुबन्धयोः षकारयोर्विवेकमाह । आकर्षात् पर्पादिभस्त्रादिभ्य, कुसीदसूत्राच्च आवसथात् किसरादेः षितः षडेते ठगधिकारे ।

## पर्पादिभ्यष्ठन् ।१०।

तृतीयासमर्थेभ्यः पर्पादिभ्यश्चरतीत्यऽर्थे ष्ठन् स्यात् । पर्पेण चरति पार्पिकः । येन पीठेन पङ्गवश्चरन्ति स पर्पः । पादाभ्यां चरति, पदिकः । ( पादः पच्चेति ) ग० सू० ) ।

## श्वगणाट् ठञ् च ।११।

तृतीयासमर्थात् श्वगणप्रातिपदिकाच्चरतीत्यर्थे ठञ् स्यात्, चात् ष्ठन् । श्वगणेन चरति श्वागणिकी(१) । श्वगणिका वा ।

## वेतनादिभ्यो जीवति ।१२।

तृतीयासमर्थेभ्यो वेतनादिभ्यो जीवयीत्यऽर्थे ठक् स्यात् । वेतनेन जीवति वैतनिकः । धनुषा जीवति धानुष्कः ।

## वस्नक्रयविक्रयाट्ठन् ॥१३।

तृतीयासमर्थेभ्यो वस्नक्रयविक्रयेभ्यो जीवतीत्यर्थे ठन् स्यात् । वस्नेन जीवति वास्निकः । क्रयविक्रयग्रहणम् संघातविगृहीतार्थम्

(१) पूर्वादेरिञीति सूत्रे इकारादाविव वक्तव्यमितिवार्त्तिकादैज् न ।

क्रयिकः । विक्रयिकः । क्रयविक्रयिकः ।

## आयुधाच्छ च ॥१४॥

तृतीयासमर्थादायधप्रातिपदिकात् जीवतीत्यर्थे छः स्यात् । चात् ठन् । आयुधीयः । आयुधिकः ।

## हरत्युत्सङ्गादिभ्यः ।१५।

तृतीयासमर्थेभ्य उत्सङ्गादिभ्यो हरतीत्यर्थे ठक् स्यात्। उत्सङ्गेन हरतीति औत्सङ्गिकः ।

## भस्त्रादिभ्यः ष्ठन् ।१६।

तृतीयासमर्थेभ्यो भस्त्रादिभ्यो हरतीत्यर्थे ष्ठन् स्यात् । भस्त्रया हरति भस्त्रिकः । स्त्री चेत् भस्त्रिकी ।

## (१) विभाषा विवधात् ।१७।

तृतीयासमर्थाद्विवधाद्धरतीत्यर्थे वा ष्ठन् स्यात् । विवधेन हरति विवधिकः । पक्षे वैवधिकः । ( वीवधच्चेति वक्तव्यम् ) वीवधिकः वैवधिकः ।

## अण् कुटिलिकायाः ॥१८॥

तृतीयासमर्थात्कुटिलिकाशब्दाद्धरतीत्यर्थेऽण् स्यात् । कुटिलिकया हरति कौटिलिको मृगः । कुटिलिका व्याधानां गतिविशेषः । कर्मारोपकरणभूता लौहाद्यायुधाकर्षणलोहयष्टिश्च ।

---

(१) विवधवीवधशब्दो उभयतो बद्धशिक्ये स्कन्धबाह्ये काष्ठे वर्त्तेते ( 'बीहंग 'इति प्रसिद्धेऽन्नादिवाहके ) ।

## निर्वृत्तेऽक्षद्यूतादिभ्यः ।१९।

तृतीयासमर्थेभ्योऽक्षद्यूतादिभ्यो निर्वृत्तेऽर्थे ठक् स्यात् । अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकं वैरम् ।

## त्रेर्मम् नित्यम् ।२०।

तृतीयासमर्थात्त्रिप्रत्ययान्तान्निर्वृत्तेऽर्थे नित्यं मप् स्यात । पाकेन निर्वृत्तं पक्त्रिमम् । त्र्यन्तं[1] मब्विषयमेव स्यात् । केवलस्य प्रयोगो माभूदित्येतदर्थं[2] नित्यग्रहणम् । ( भावप्रत्ययान्तादिमप् वक्तव्यः ) । पाकेन निर्वृत्तम् पाकिमम् ।

## अपमित्ययाचिताभ्यां कक्कनौ ।२१।

तृतीयासमर्थाभ्यामपमित्ययाचिताभ्यां निर्वृत्तेऽर्थे कक्कनौ स्तः । अपमित्य निर्वृत्तं आपमित्यकम् । याचितकम् ।

## संसृष्टे ॥२२॥

तृतीयासमर्थात् संसृष्टेऽर्थे ठक् स्यात् । दध्ना संसृष्टं दाधिकम् ।

## चूर्णादिनिः ।२३।

तृतीयासमर्थाच्चूर्णात् संसृष्टेऽर्थे इनिः स्यात् ।

---

(१) नेह संख्यावाची त्रिशब्दो गृह्यते । प्रत्ययाप्रत्ययोरिति परिभाषया । णिजां त्र्याणामिति लिङ्गाच्च । शे० ।

(२) तेन मपोऽन्यत्र वाक्यमेव न तु त्र्यन्तस्य लोके प्रयोगः

चूर्णैः संसृष्टाश्चूर्णिनो धानाः१।

(२)

## लवणाल्लुक् ।२४।

तृतीयासमर्थाल्लवणप्रातिपदिकात् संसृष्टेऽर्थे विहितस्य प्रत्ययस्य लुक् स्यात। लवणेन संसृष्टं लवणं शाकम्।

## मुद्गादण् ॥२५॥

तृतीयासमर्थात् मुद्गात् संसृष्टेऽर्थेऽण् स्यात्। मुद्गेन संसृष्टो मौद्ग ओदनः।

## व्यञ्जनैरुपसिक्ते ।२६।

तृतीयासमर्थाद् व्यञ्जनप्रातिपदिकादुपसिक्तेऽर्थे ठक् स्यात्। व्यज्यतेऽनेनौदनादिरसस्तद् व्यञ्जनम्। दध्ना उपसिक्तं दाधिकम्। व्यञ्जनैः किम्। जलेनोपसिक्त ओदनः।

## ओजःसहोम्भसा वर्त्तते ।२७।

तृतीयासमर्थेभ्यः ओजःसहोम्भोभ्यो वर्तत इत्यर्थे ठक् स्यात्। ओजसा वर्तते औजसिकः शूरः। सहसा वर्तते साहसिकश्चौरः। आम्भसिको मत्स्यः।

## तत्प्रत्यनुपूर्वमीपलोमकूलम् ॥२८॥

द्वितीयासमर्थेभ्यः प्रत्यनुपूर्वेभ्य ईपलोमकूलेभ्यो वर्तत इत्यर्थे ठक् स्यात्। प्रतीपं वर्तते प्रातीपिकः। प्रातिलोमिकः। प्रातिकूलिकः। आन्वीपिकः। आनुकूलिकः। आनुलोमिकः। ननु वृतेरकमकत्वात्

---

(१) भाष्ये मत्वर्थीयेनेनिना सिद्धमिति कृत्वा खण्डितमेतदिति। तत्र ठक् तु संसृष्ट इत्यनेनानभिधानान्न भविष्यति।

(२) लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात्। इति भा०। रसस्य गुणत्वाद् गुणगुणिनोरभेदोपचाराद् नार्थो लुकेत्यर्थः।

कथं कर्मणा सम्बन्ध इति चेत्, क्रियाविशेषणत्वाद्[१] द्वितीयेति।

## परिमुखञ्च ।२९।

द्वितीयासमर्थात्परिमुखाद्वर्त्तत इत्यर्थे ठक् स्यात्। परिमुखं वर्त्तते पारिमुखिकः। चात्पारिपार्श्विकः[२]।

## प्रयच्छति गर्ह्यम् ।३०।

द्वितीयासमर्थात्प्रयच्छतीत्यर्थे ठक् स्यात्। यत्प्रयच्छति तद्गर्ह्यञ्चेत्। द्विगुणार्थं द्विगुणम्[३] तादर्थ्यात्ताच्छब्द्यम्, तत् प्रयच्छति द्वैगुणिकः। ( वृद्धेर्वृधुषि भावो वक्तव्यः ) वृद्ध्यर्था वृद्धिस्तां प्रयच्छति वार्द्धुषिकः। गर्ह्यमिति किम्। द्विगुणं प्रयच्छत्यधमर्णः।

## कुसीददशैकादशात् ष्ठन्ष्ठचौ ॥३१॥

द्वितीयासमर्थाभ्यां कुसीददशैकादशाभ्यां प्रयच्छतीत्यर्थे ष्ठन्ष्ठचौ यथाक्रमं स्तः। यत् प्रयच्छति तद्गर्ह्यञ्चेत्। कुसीदं प्रयच्छति कुसीदिकः। दशैकादशिकः।

## उञ्छति ।३२।

द्वितीयासमर्थात् प्रातिपदिकादुञ्छतीत्यर्थे ठक् स्यात्। बदरा-

---

[१] अकर्मकधातुस्थलेऽपि फलव्यापारयो र्धात्वर्थत्वेन फलसामानाधिकरण्याद् द्वितीयेति भावः।

[२] यदा वर्जने परिशब्दस्तदा स्वामिनो मुखं वर्जयित्वा यः सेवको वर्त्तते स पारिमुखिकः। यदा तु सर्वतोभावे तदा यतोयतः स्वामिनो मुखं ततस्ततो यो वर्त्तते स एवमुच्यते। एवं पारिपार्श्विकोऽप्यर्थद्वये बोध्यः।

[३] औपचारिकादेवायं प्रत्ययोभिधानस्वभावात्।

[४] वृद्ध्यर्थे द्रव्ये वृद्धिशब्द औपचारिकः।

णि उञ्छति बादरिकः। भूमौ पतितस्यैकैकस्योपादानमुञ्छः। कणिकः।

## रक्षति ।३३।

द्वितीयासमर्थात् प्रातिपदिकाद्रक्षतीत्यर्थे ठक् स्यात्। समाजे रक्षति सामाजिकः।

## शब्ददर्दुरङ्करोति[1] ।३४।

द्वितीयासमर्थाभ्यां शब्ददर्दुराभ्याङ्करोतीत्यर्थे ठक् स्यात्। शब्दं करोति शाब्दिकः। दार्दुरिकः, कुलालः। दर्दुरो वाद्यविशेषो मृण्मयः।

## पक्षिमत्स्यमृगान् हन्ति ।३५।

द्वितीया समर्थेभ्यः पक्ष्यादिभ्यो हन्तीत्यर्थे ठक् स्यात्। पाक्षिकः। शाकुनिकः। मायूरिकः। मात्स्यिकः। मैणिकः। शाफरिकः। मार्गिकः। हारिणिकः। सारङ्गिकः (२)।

## परिपन्थञ्च तिष्ठति ।३६।

द्वितीयासमर्थात्परिपन्थ प्रातिपदिकात्तिष्ठतीत्यर्थे हन्तीत्यर्थे च ठक् स्यात्। परिपन्थं तिष्ठति पारिपन्थिकश्चौरः। चकारो भिन्नक्रमः, प्रत्ययार्थं समुच्चिनोति। परिपन्थं हन्ति पारिपन्थिकः। परिपथशब्दपर्यायः परिपन्थशब्दः। तिष्ठतिग्रहणन्तु, तिष्ठतिक्रियां विनाऽपि परिपन्थशब्दप्रयोग इत्यभिव्यक्तये।

---

[१] दर्दुरे वाद्यभाण्डविशेषः।

[२] स्वरूपस्य पर्य्यायाणां तद्विशेषाणाञ्च ग्रहणमिहेष्यते। का०। तदनुसारिसूत्रे समुदाहृतम्।

## माथोत्तरपदपदव्यनुपदं धावति ।३७।

द्वितीयासमर्थेभ्यो माथोत्तरपदादिभ्यो धावत्यर्थे ठक् स्यात् । दण्डाकारो माथः पन्था इति दण्डमाथस्तं धावति इति दाण्डमाथिकः । पादविकः । आनुपदिकः ।

## आक्रन्दाट्ठञ् च ।३८।

द्वितीयासमर्थादाक्रन्दप्रातिपदिकाद्धावत्यर्थे ठञ् स्याच्चाट्ठक् । आक्रन्द इति भावाधिकरणयो रविशेषाद् घञ् । ठञ्ठकोः स्वरे विशेषः । आक्रन्दं धावति आक्रन्दिकः । यो दुःखितान्पालयति स एवमुच्यते ।

## पदोत्तरपदं[1] गृह्णाति ।३९।

द्वितीयासमर्थात्पदोत्तरपदात् प्रातिपदिकात् गृह्णातीत्यर्थे ठक् स्यात् । पौर्वपदिकः । औत्तरपदिकः ।

## प्रतिकण्ठार्थललामञ्च[2] ।४०।

द्वितीयासमर्थेभ्यः प्रतिकण्ठार्थललामेभ्यो गृह्णातीत्यर्थे ठक् स्यात् । प्रतिकण्ठं गृह्णाति प्रातिकण्ठिकः । आर्थिकः । लालामिकः ।

## धर्म्मञ्चरति ।४१।

द्वितीयासमर्थाद्धर्म्मप्रातिपदिकाच्चरतीत्यर्थे ठक् स्यात् । धार्मिकः ।

---

(१) अव्ययीभावो मयूरव्यंसकादित्वात्तत्पुरुषो वा । पदान्तमिति तु नोक्तम् । बहुच्पूर्वान्माभूदिति ।

(२) अव्ययीभावादेवेष्यते ।

(अधर्माच्चेति[१] वक्तव्यम्) आधर्मिकः।

## प्रतिपथमेति ठंश्च[२] ।४२।

द्वितीयासमर्थात् प्रतिपथप्रातिपदिकादेतीत्यर्थे ठन् स्याच्चाट्ठक्। प्रतिपथमेति प्रतिपथिकः। प्रातिपथिकः।

## समवायान्समवैति ।४३।

द्वितीयासमर्थात् समवायप्रातिपदिकात्समवैतीत्यऽर्थे ठक् स्यात्। समवायोऽत्र समूहः। समवायान्समवैति सामवायिकः। बहुवचनं स्वरूपविधिनिरासार्थम्। तेन सामाजिकः। सामूहिकः।

## परिषदो ण्यः ॥४४॥

द्वितीयासमर्थात परिषत्प्रातिपदिकात्समवैतीत्यर्थे ण्यः स्यात्। परिषदं समवैति पारिषद्यः।

## सेनाया वा ।४५।

द्वितीयासमर्थात् सेनाप्रातिपदिकात् समवैत्यर्थे ण्यो वा स्यात्। सेनां समवैति सैन्यः। सैनिको वा।

## संज्ञायां ललाटकुक्कुट्यौ पश्यति ।४६।

द्वितीयासमर्थाभ्यां ललाटकुक्कुटीभ्यां पश्यत्यर्थे ठक् स्यात्, संज्ञायां विषये। ललाटं पश्यति लालाटिकः सेवकः। कौक्कुटिको(३) भिक्षुः।

## तस्य धर्म्यम् ॥४७॥

---

(१) धर्मविरोधिगुणविशेषजनकम्।

(२) अव्ययीभावः, ऋक् पूरिति समासान्तः।

(३) कुक्कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते।

षष्ठीसमर्थाद्धर्म्यमित्यर्थे ठक् स्यात् । आपणस्य धर्म्यमापणिकः । धर्म्यं न्याय्यमुच्यते ।

## अण् महिष्यादिभ्यः ।४८।

षष्ठीसमर्थेभ्यो महिष्यादिभ्यो धर्म्यमित्यर्थेऽण् स्यात् । ठकोऽपवादः । महिष्या धर्म्यं माहिषम् ।

## ऋतोऽञ् ॥४९॥

षष्ठीसमर्थादृकारान्तात् प्रातिपदिकाद्धर्म्यमित्यर्थेऽञ् स्यात् । पितुर्धर्म्यं पैत्रम् । ( नृनराभ्यामञ् वचनम्[१] ) नुः नरस्य वा धर्म्या नारी । ( विशसितुरिड् लोपश्च ) विशसितुर्धर्म्यं वैशस्त्रम् । ( विभाजयितुर्णिलोपश्च ) विभाजयितुर्धर्म्यं वैभाजित्रम् ।

## अवक्रयः[२] ॥५०॥

षष्ठीसमर्थादवक्रय इत्यर्थे ठक् स्यात् । अवक्रीणीते ऽनेनेति अवक्रयः । राजग्राह्यं द्रव्यमवक्रयः । आपणस्यावक्रयः आपणिकः ।

## तदस्य पण्यम्[२] ।५१।

पण्यसमानाधिकरणात् प्रथमासमर्थात् षष्ठ्यर्थे ठक् स्यात् । अपूपाः पण्यमस्य आपूपिकः ।

---

[१] नृशब्दस्य सूत्रेणैव सिद्धे प्रत्यये दृष्टान्तत्तेनोपादानम् । यथा नृशब्दादञ् भवत्येव, नरशब्दादपीत्यर्थः । कै० ।

[२] आपणे विक्रयाय प्रसारित मपूपादि ।

## लवणाट् ठञ् ।५२।

पण्यसमानाधिकरणात् प्रथमासमर्थाल्लवणप्रातिपदिकात् षष्ठ्यर्थे ठञ् स्यात् । लवणं पण्यमस्य लावणिकः ।

## किशरादिभ्यः ष्ठन् [1] ।५३।

पण्यसमानाधिकरणेभ्यः प्रथमासमर्थेभ्यः किशरादिभ्यः षष्ठ्यर्थे ष्ठन् स्यात् । ठकोऽपवादः । किशराः पण्यमस्य किशरिकः । किशरिकी, स्त्री चेत् ।

## शलालुनोऽन्यतरस्याम् ।५४।

पण्यसमानाधिकरणात् प्रथमासमर्थात् शलालुप्रातिपदिकात् षष्ठ्यर्थे ष्ठन् वा स्यात् । शलालु पण्यमस्य शलालुकः । शलालुकी । शालालुकः । शालालुकी ।

## शिल्पम् [2] ॥५५।

शिल्पसमानाधिकरणात् प्रथमासमर्थात् षष्ठ्यर्थे ठक् स्यात् । शिल्पं कौशल्यम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ।

## मड्डुकझर्झरादणन्यतरस्याम् ॥५६॥

शिल्पसमानाधिकरणाभ्यां प्रथमासमर्थाभ्यां मड्डुकझर्झराभ्यां षष्ठ्यर्थे ऽण् वा स्यात् । ठकोऽपवादः । मड्डुकवादनशीलमस्य माड्डुकः । माड्डुकिकः । झाझरः । झार्झरिकः ।

---

(१) तालव्यमध्यपाठो वृत्तौ, दन्त्यमध्योऽपि दृश्यतेऽन्यत्र । किशरादयो गन्धविशेषवाचिनः ।

(२) अभ्यासपूर्वं क्रियासु कौशलम् ।

## प्रहरणम् [1] ।५७।

प्रहरणसमानाधिकरणात् प्रथमासमर्थात् षष्ठ्यर्थे ठक् स्यात् । असिः प्रहरणमस्य आसिकः । धानुष्कः (२) ।

## परश्वधाट् ठञ् च ।५८।

प्रहरणसमानाधिकरणात् प्रथमासमर्थात् परश्वधात् प्रातिपदिकात् षष्ठ्यर्थे ठञ् स्यात् चाट्ठक् । परश्वधः प्रहरणमस्य, पारश्वधिकः । स्वरे विशेषः ।

## शक्तियष्ट्यो रीकक् ॥५९॥

प्रहरणसमानाधिकरणाभ्यां प्रथमासमर्थाभ्यां शक्तियष्टिभ्यां षष्ठ्यर्थे ईकक् स्यात् । शाक्तीकः । याष्टीकः (३) ।

## अस्ति नास्ति दिष्टं मतिः ।६०।

मतिसमानाधिकरणेभ्यः प्रथमासमर्थेभ्य अस्त्यादिभ्यः षष्ठ्यर्थे ठक् स्यात् । परलोकोऽस्तीति मतिरस्यास्तिकः । नास्तिकः । दिष्टं प्रमाणानुपातिनी मतिरस्य दैष्टिकः ।

## शीलम् [4] ।६१।

---

[१] आयुधम् ।

[२] इसुसितिकादेशे इणः ष इति षः ॥

[३] दीर्घोच्चारणभाष्ये प्रत्याख्यातमिक कासिद्धत्वात्, इकारोच्चारणसामर्थ्यादस्येति चेति न, अन्यथा ककैवसिद्धमिति स्पष्टार्थमिति नागेशः ॥

[४] स्वभावः ।

शीलसमानाधिकरणात् प्रथमासमर्थात् षष्ठ्यर्थे ठक् स्यात्। अपूप[१]-भक्षणं शीलमस्य।पूपिकः। शाष्कुलिकः।

## छत्रादिभ्यो णः।६२।

शीलसमानाधिकरणेभ्यः प्रथमासमर्थेभ्यश्छत्रादिभ्यः षष्ठ्यर्थे णः स्यात्। छत्रं शीलमस्येति छात्रः।[२]

## कर्म्माध्ययने वृत्तम्।६३।

प्रथमासमर्थात् षष्ठ्यर्थे ठक् स्यात्। यत् प्रथमासमर्थं तदध्ययने वृत्तं कर्म्म चेत्। एकमन्यदध्ययने कर्म्म वृत्तमस्य ऐकान्यिकः[३]। अध्ययने प्रवृत्तस्य परीक्षाकाले विरुद्धोच्चारणरूपं स्खलितमेकं यस्य जातं सः। द्वैयन्यिकः। त्रैयन्यिकः।

## बह्वच् पूर्वपदाट्ठच्।६४।

प्रथमासमर्थाद्बह्वच् पूर्वात् प्रातिपदिकात् षष्ठ्यर्थे ठच् स्यात्, यत् प्रथमासमर्थं तदध्ययने वृत्तं कर्म्म चेत्। द्वादशान्यानि अध्ययने वृत्तानि कर्म्माण्यस्य द्वादशान्यिकः।

## हितं भक्षाः।६५।

हितसमानाधिकरणात् प्रथमासमर्थात् चतुर्थ्यर्थे ठक्, स्याद्धितं तच्चेद्भक्षाः। तदस्मै इति योगविभागेनात्र चतुर्थ्याः सम्बन्धः। अपूप-भक्षणं हितमस्मै आपूपिकः।

---

[१] अपूपादिशब्दाः स्वभक्षणे लाक्षणिकाः।
[२] छत्रादिभ्योऽण्, इत्येव सुवचमिति, कार्मस्ताच्छील्ये इति सूत्रे कैयटः।
[३] तद्धितार्थेति समासः।

## तदस्मै दीयते नियुक्तम्[१] ।६६।

प्रथमासमर्थादस्मै नियुक्तं दीयत इत्यर्थे ठक् स्यात् । अग्रे भोजनम-स्मै नियुक्तं दीयते आग्रभोजनिकः ।

## श्राणामांसौदनाट्टिठन् ।६७।

प्रथमासमर्थाभ्यां श्राणामांसौदनाभ्यामस्मै नियुक्तं दीयतेऽर्थे टिठन् स्यात् । श्राणा अस्मै नियुक्तं दीयते, इति श्राणिकः । मांसौदनिकः । मांसौदनग्रहणं विगृहीतार्थं, तदर्थमेव टिठन्निति केचिदिति काशिका ।

## भक्तादणन्यतरस्याम् ॥६८॥

प्रथमासमर्थाद्भक्तप्रातिपदिकादस्मै नियुक्तं दीयतेऽर्थेऽण् वा स्यात् । ठकोपवादः । भाक्तः । भाक्तिकः ।

## तत्र नियुक्तः ।६९।

सप्तमीसमर्थान्नियुक्तेऽर्थे ठक् स्यात् । नियुक्तो व्यापारितः । आपणे नियुक्त आपणिकः ।

## अगारान्ताट् ठन् ।७०।

सप्तमीसमर्थादगारान्तात् प्रातिपदिकान्नियुक्तेऽर्थे ठन् स्यात् । भा-ण्डागारे नियुक्तः, भाण्डागारिकः ।

## अध्यायिन्यदेशकालात् ॥७१॥

सप्तमीसमर्थाददेशकालवाचिनः प्रातिपदिकादध्यायिन्यर्थे ठक् स्यात् । अध्ययनस्य यौ देशकालौ शास्त्रेण प्रतिषिद्धौ तावेवादेशका-

( १ )-- नियतम्

लशब्देन गृह्येते। श्मशानेऽधीते श्माशानिकः। आमावास्यिकः। अदेशकालात्किम्। स्रुघ्नेऽधीते, पूर्वाह्णेऽधीते।

## (१) कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।७२।

सप्तमीसमर्थेभ्यः कठिनान्तादिभ्यो व्यवहरतीत्यर्थे ठक् स्यात्। वंशकठिने व्यवहरति वांशकठिनिकः। प्रास्तारिकः। सांस्थानिकः।

## निकटे वसति ।७३।

सप्तमीसमर्थान्निकटप्रातिपदिकाद्वसतीत्यर्थे ठक् स्यात्। नैकटिको[२] भिक्षुः। ब्रह्मचारी वा।

## आवसथात् ष्ठल् ।।७४।

सप्तमीसमर्थादावसथप्रातिपदिकाद्वसतीत्यर्थे ष्ठल् स्यात्। आवसथे वसति आवसथिकः। ठकः पूर्णोऽवधिः।

## प्राग्घिताद्यत् ।७५।

तस्मै हितमित्यतः प्राक् यदधिक्रियते।

## तद्वहति रथयुगप्रासङ्गम्[३] ।७६।

द्वितीयासमर्थेभ्यो रथादिभ्यो वहतीत्यर्थे यत् स्यात्।

---

(१) प्रस्तारसंस्थानौ सन्निवेशपर्य्यायौ।

(२) भिक्षुणा ग्रामात् क्रोशे वस्तव्यमिति शास्त्रं तदनादृत्य यो निकटे वसति तत्रैवायं साधुः।

(३) स्कन्धवाह्यं काष्ठं, प्रासङ्गो ना युगाद्युग इति कोशात्।

रं वहति रथ्यः । युग्यः । प्रासङ्ग्यः । रथसीतेत्यादिना तदन्तविधिः । परमरथ्यः ।

## धुरो यड्ढकौ ।७७।

द्वितीयासमर्थाद्धुरः प्रातिपदिकाद्वहत्यर्थे यड्ढकौ स्तः । धुरं वहति धुर्य्यः । धौरेयो वा(१) ।

## खः सर्वधुरात् ।७८।

द्वितीयासमर्थात् सर्वधुरप्रातिपदिकाद्वहतीत्यर्थे खः स्यात् । सर्वधुरां वहति सर्वधुरीणः । 'ऋक्पूरब्धूपथामानक्षे' इत्यनेन अः प्रातिपदिकमात्रापेक्षया नपुंसकनिर्देशः ।

## एकधुराल्लुक् च ।७९।

द्वितीयासमर्थादेकधुरप्रातिपदिकाद्वहतीत्यर्थे विहितस्य खस्य लुक् स्यात । एकधुरां वहतीति एकधुरः३ । एकधुरीणः ।

## शकटादण् ।८०।

द्वितीयासमर्थात् शकटप्रातिपदिकाद् वहतीत्यऽर्थे ऽण् स्यात् । शकटं वहति शाकटो गौः ।

## हलसीराट् ठक् ।८१।

द्वितीयासमर्थाभ्यां हलसीराभ्यां प्रातिपदिकाभ्यां वहतीत्यर्थे ठक् स्यात । हालिकः । सैरिकः ।

---

( १ )–इह धुरो ढगित्येवोचितमिति, मनो० ।

( २ )–ख इति योग इष्टसंग्रहार्थस्तेन उत्तरधुरीण इत्यादि, इति का० ।

( ३ )–अन्तरङ्गानपीतिन्यायेन सवर्णदीर्घात्प्रागेव टापो लुक् ।

## संज्ञायां जन्या ॥८२॥

द्वितीयासमर्थाज्जनीप्रातिपदिकाद्वहतीत्यर्थे यत् स्यात्, संज्ञायां गम्यमानायाम्। जनीं वहति जन्या[१]।

## विध्यत्यधनुषा ॥८३॥

द्वितीयासमर्थाद्वि ध्यत्यर्थे यत् स्यात्, धनुष्करणन्न चेत्। पादौ विद्ध्यन्तीति पद्याः शर्कराः। अधनुषा किम्। पादौ विध्यति धनुषा (२)।

## धनगणं लब्धा ॥८४॥

द्वितीयासमर्थाभ्यां धनगणाभ्यां लब्धर्यर्थे यत् स्यात्। धन्यः। गण्यः।

## अन्नाण्णः ॥८५॥

द्वितीयासमर्थादन्नप्रातिपदिकाल्लब्धर्यर्थे णः स्यात्। अन्नं लब्धा आन्नः।

## वशङ्गतः ॥८६॥

द्वितीयासमर्थाद्वशप्रातिपदिकाद्गतेऽर्थे यत् स्यात्। वशं गतो वश्यः (३)।

---

(१)--जायते गर्भोऽस्यामिति जनी, जनिसहिभ्यां मितीण् जनिबध्योश्चेति वृद्धिप्रतिषेधः। भाष्ये तु सर्वकालप्रत्ययविध्वर्थं निपातनाश्रयणमेव। जनीं वहन्ति जन्याः जनीं वोढारो जन्याः। जनीमवाप्तुर्जन्या इति।

(२)-करणमात्रोपलक्षणं धनुरिति। तेन चोरो विद्ध्यति खड्गेनेत्यादावपि न।

(३)-परेच्छानुचारी।

## पदमस्मिन् दृश्यम् ।८७।

दृश्यसमानाधिकरणात्प्रथमासमर्थात् पदप्रातिपदिकात् सप्तम्यर्थे यत् स्यात् । पदं दृश्यमस्मिन्पद्यः कर्दमः । नातिशुष्क इत्यर्थः ।

## मूलमस्याबर्हि ।८८।

आबर्हिसमानाधिकरणात् प्रथमासमर्थान्मूलप्रातिपदिकात् षष्ठ्यर्थे यत् स्यात् । मूलमाबर्हि ( उत्पाट्यम् ) एषां मूल्याः माषाः । मूलोत्पाटनेन विना न ग्रहीतुं[१] शक्यन्त इत्यर्थः ।

## सञ्ज्ञायां[१] धेनुष्या ।८९।

धेनुशब्दस्य षुगागमो यश्च[२] स्वार्थे निपात्यते । ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते सा धेनुष्या ।

## गृहपतिना संयुक्ते ञ्यः ।९०।

तृतीयासमर्थाद् गृहपतिप्रातिपदिकात् संयुक्तेऽर्थे ञ्यः स्यात्, सञ्ज्ञायां विषये । गृहपतिना संयुक्तः, गार्हपत्योऽग्निः ।

## नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसम्मितेषु ॥९१॥

तृतीयासमर्थेभ्यो नावादिभ्यस्तार्य्यादिष्वर्थेषु यत् स्यात् । नावा तार्यं नाव्यम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् ।

---

(१) सञ्ज्ञायामित्युत्तरत्रापि संबध्यते, तेनाभिधेयनियमो भवति ।

(२) तेन धेनुष्याशब्दोऽन्तोदात्तः यति तु तित्स्वरः स्यादिति भावः ।

विषेण वध्यो विष्यः। मूलेनानाम्यं मूल्यम्। मूलेन समो मूल्यः। सीतया समितः (संगतः) सीत्यः रथसीताहलेभ्यो यद्विधौ तदन्तविधिरिति परमसीत्यमित्याद्यपि। तुलया सम्मितं (समानं) तुल्यम्।

## धर्मपथ्यर्थन्यायादनपेते ।९२।

पञ्चमीसमर्थेभ्यो धर्मादिभ्योऽनुपेतेर्थे यत् स्यात्। धर्मादनपेतं धर्म्यम्। पथ्यम्[१]। अर्थ्यम्। न्याय्यम्।

## छन्दसो निर्मिते ॥९३॥[२]

तृतीयासमर्थाच्छन्दस्प्रातिपदिकान्निर्मितेऽर्थे यत् स्यात्। छन्दसा निर्मितश्छन्दस्यः। इच्छापर्यायश्छन्दः शब्दः।

## उरसोऽण् च ।९४।

तृतीयासमर्थादुरःप्रातिपदिकान्निर्मितेऽर्थे ऽण् स्याद् यच्च। उरसा निर्मितः औरसः, उरस्यो वा पुत्रः। संज्ञाधिकारान्नेह-उरसा निर्मितं सुखम्।

## हृदयस्य प्रिय ।९५।

षष्ठीसमर्थाद्धृदयप्रातिपदिकात् प्रियेऽर्थे यत् स्यात्। हृदयस्य प्रियो हृद्यः।

## बन्धने चर्षौ ॥९६।

---

(१) शास्त्रीयात् पथो यदनपेतं तत्पथ्यं, संज्ञाधिकारात्सर्वत्राभिधेयनियमादिह न पथोऽनपेतश्चोरः।

(२) निर्माणे, इच्छायाः करणत्वेन तृतीयान्तात् प्रत्ययः।

षष्ठीसमर्थात् हृदयप्रातिपदिकाद्बन्धने ऋषावभिधेये यत्स्यात् । हृदयस्य बन्धनमृषिर्हृद्यः । ऋषिशब्देन मन्त्रो गृह्यते ।

## मतजनहलात्करणजल्पकर्षेषु ।९७।

षष्ठीसमर्थेभ्यो मतजनहलेभ्यः करणजल्पकर्षेषु यत्स्यात् । मतं ज्ञानं तस्य करणमभावः साधनं वा मत्यम् । जनस्य जल्पो जन्यः । हलस्य कर्षो हल्यः ।

## तत्र साधुः ।९८।

सप्तमीसमर्थात्प्रातिपदिकात्साधुरित्येतस्मिन्नर्थे यत्स्यात् । कर्मण्यः । शरण्यः । साधुशब्देन प्रवीण उच्यते योग्यो वा ।

## प्रतिजनादिभ्यः खञ् ।९९।

सप्तमीसमर्थेभ्यः प्रतिजनादिभ्यः साधुरित्येतस्मिन्नर्थे खञ् स्यात् । यतोऽपवादः । प्रतिजने साधुः प्रातिजनीनः । जने जने साधुरित्यर्थः । ऐदंयुगीनः ।

## भक्ताण्णः ॥१००॥

सप्तमीसमर्थाद्भक्तप्रातिपदिकात्साधुरित्येतस्मिन्नर्थे णः स्यात् । भक्ते साधुर्भाक्तः शालिः ।

## परिषदो ण्यः ।१०१।

सप्तमीसमर्थात् परिषत्प्रातिपदिकात्साधुरित्येतस्मिन्नर्थे ण्यः स्यात । यतोऽपवादः । परिषदि साधुः पारिषद्यः । योगविभागाण्णोपि[१] । पारिषदः ।

---

(१) सर्ववेदपारिषदं हीदं शास्त्रमिति भाष्यप्रयोगादिति भावः । णस्यानुवृत्ते रुभयोर्विधानमित्यन्ये ।

## कथादिभ्यष्ठक् ।१०२।

सप्तमीसमर्थेभ्यः कथादिभ्यः प्रातिपदिकेभ्यः साध्वर्थे ठक् स्यात् । यतोऽपवादः । कथायां साधुः काथिकः ।

## गुडादिभ्य ष्ठञ् ।१०३।

सप्तमीसमर्थेभ्यो गुडादिभ्यः साध्वर्थे ठञ् स्यात् । यतोऽपवादः । गौडिक इक्षुः ।

## पथ्यतिथिवसतिस्वपतेर्ढञ् ॥१०४॥

सप्तमीसमर्थेभ्यः पथ्यादिभ्य साध्वर्थे ढञ् स्यात् । यतोऽपवादः । पथि साधुः पाथेयः । आतिथेयः । वासतेयः । स्वापतेयः ।

## सभाया यः ।१०५।

सप्तमीसमर्थात् सभाप्रातिपदिकात्साध्वर्थे यः स्यात् । यतोऽपवादः । सभ्यः ।

## ढश्छन्दसि ॥१०६॥

सप्तमीसमर्थात्सभाप्रातिपदिकात्साध्वर्थे ढः स्याच्छन्दसि विषये । यस्यापवादः । सभेयोऽस्य युवा यजमानस्य वीरो जायताम् ।

## समानतीर्थे वासी ।१०७।

सप्तमीसमर्थात्समानतीर्थप्रातिपदिकात् वासीत्यर्थे यत् स्यात् । समाने तीर्थे वसतीति सतीर्थ्यः । तीर्थशब्देन गुरुरिहोच्यते ।

## समानोदरे शयित ओचोदात्तः ।१०८।

सप्तमीसमर्थात् समानोदरप्रातिपदिकाच्छयितेऽर्थे यत् स्यात्, ओकारश्चोदात्तः स्यात् । समानोदरे शयित समानोदर्यो भ्राता ।

## सोदराद्यः[1] ।१०९।

सप्तमीसमर्थात्सोदरप्रातिपदिकाच्छयितेऽर्थे यः स्यात् । सोदर्यो भ्राता ।

## भवे छन्दसि ।११०।

सप्तमीसमर्थात्प्रातिपदिकाद्भवेऽर्थे यत् स्यात्, छन्दसि विषये । मेघ्याय च विद्युत्याय च । समुद्राभ्राद् घ इति यावद्भवाधिकारः । आपादपरिसमाप्तेश्छन्दोऽधिकारः ।

## पाथोनदीभ्यां ड्यण् ।१११।

सप्तमीसमर्थाभ्यां पाथोनदीभ्यां भवे ड्यण् स्यात्, छन्दसि विषये । यतोऽपवादः । पाथसि भवः, पाथ्यो वृषा । पाथोऽन्तरिक्षम् । नाद्यो गिरो मे प्रयच्छति ।

## वेशन्तहिमवद्भ्यामण् ।११२।

सप्तमीसमर्थाभ्यां वेशन्तहिमवद्भ्यां भवेऽर्थेण् स्यात्, छन्दसि विषये यतोऽपवादः । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा । वेशन्तः पल्वलम् ।

## स्रोतसो विभाषा ड्यड्ड्यौ ।११३।

सप्तमीसमर्थात् स्रोतस्प्रातिपदिकाद्भवेऽर्थे वा ड्यड्ड्यौ स्तः, छन्दसि विषये । यतोऽपवादः । पक्षे सोऽपि भवति । स्रोतसि भवः स्रोत्यः । स्रोतस्यो वा ।

---

(१) ओचोंदात्त इति, नानुवर्त्तते यविधानसामर्थ्यात् ।

## सगर्भसयूथसनुताद्यन् ।११४।

सप्तमीसमर्थेभ्यः सगर्भादिभ्यो भवेऽर्थे यन् स्याच्छन्दसि । यतोऽपवादः । अनुभ्राता सगर्भ्यः । अनुसखा सयूथ्यः । यो नः सनुत्यः । सर्वत्र समानस्य छन्दसीति सभावः ।

## तुग्राद्घन् ।११५।[१]

सप्तमीसमर्थात्तुग्रप्रातिपदिकाद्भवेऽर्थे घन् स्याच्छन्दसि । यतोऽपवादः । त्वमग्ने वृषभतुग्रियाणाम् ।

## अग्राद्यत् ।।११६।

सप्तमीसमर्थादग्रप्रातिपदिकाद्भवेऽर्थे यत्स्याच्छन्दसि । अग्रे भवमग्र्यम् । सामान्येन विहितोऽपि यद् घच्छाभ्यान्नबाध्येतेत्येतदर्थोऽयमारम्भः ।

## घच्छौ च ।११७।

सप्तमीसमर्थादग्रप्रातिपदिकाद्भवेऽर्थे घच्छौ स्तो यच्च, छन्दसि । अग्र्यम् । अग्रियम् । अग्रीयम् ।

## समुद्राभ्राद्घः ।११८।[२]

सप्तमीसमर्थाभ्यां समुद्राभ्राभ्याम्भवेऽर्थे घः स्यात् छन्दसि । यतोऽपवादः समुद्रियाणां नदीनाम् । अभ्रियस्येव घोषः ।

## बर्हिषि दत्तम् ।११९।

---

(१) अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्दः ।
(२) अभ्रसमुद्रादिति वक्तव्ये समुद्राभ्रादित्युक्तिः, पूर्वनिपातस्यानित्यत्वज्ञापनार्था ।

सप्तमीसमर्थाद्बर्हिःप्रातिपदिकाद्दत्तमित्येतस्मिन्नर्थे यत्स्याच्छन्दसि । बर्हिष्येषु निधिषु प्रियेषु ।

## दूतस्य भागकर्मणी ।१२०।

षष्ठीसमर्थाद् दूतप्रातिपदिकाद् भागकर्मणोरर्थयो र्यत्स्याच्छन्दसि । दूतस्य भागः कर्म वा दूत्यम् । यत्तेऽग्ने दूत्यम् ।

## रक्षोयातूनां[1] हननी ।१२१।

षष्ठीसमर्थाभ्यां रक्षोयातुभ्यां हननीत्यर्थे यत् स्यात्, छ० वि० । हन्यतेऽनया हननी । रक्षोहननी रक्षस्या । याते अग्ने रक्षस्या तनूः । यातूनां हननी यातव्या ।

## रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥१२२।

षष्ठीसमर्थेभ्यो रेवत्यादिभ्यः प्रशस्ये यत् स्यात्, छ० वि० । यद्वो रेवती रेवत्यम् । यद्वो जगती जगत्यम् । यद्वा हविष्या हविष्यम् । जगत्या हविष्याया वा प्रशंसनमित्यर्थः ।

## असुरस्य स्वम् ।१२३।

षष्ठीसमर्थादसुरप्रातिपदिकात्स्वमित्यर्थे यत् स्यात्, छ० वि० । असुरस्य स्वं असुर्य्यं वा एतत्पात्रम् ।

## मायायामण्[2] ।१२४।

षष्ठीसमर्थादसुरप्रातिपदिकात्स्वमित्यर्थेऽण् स्यात्, मायायां गम्यमानायां छ० वि० । पूर्वस्य यतोऽपवादः । असुरस्य माया आसुरी ।

---

(१) बहुवचनेन स्तुतिवैशिष्ट्यं ज्ञाप्यते, बहूनां रक्षसां हननेन तनूस्तूयते ।
(२) असदर्थप्रकाशनशक्तिर्माया ।

## तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥१२५॥

उपधानमन्त्रसमानाधिकरणात् प्रथमासमर्थात् मत्वन्तात् षष्ठ्यर्थे यत् स्यात्, इष्टकास्वभिधेयासु, मतोश्च लुक् स्यात्, छ० वि० । वर्चस्शब्दो विद्यतेऽस्मिन् मन्त्रे, इति वर्चस्वान् मन्त्रः । वर्चस्वान् उपधानो मन्त्र आसामिष्टकानां ताः वर्चस्याः । तद्वानिति किम् । मन्त्रसमुदायादेव माभूत् । उपधान इति किम् । वर्चस्वानुपस्थान मन्त्र आसामित्यत्र माभूत् । मन्त्र इति किम् । अङ्गुलिमानुपधानो हस्त आसामित्यत्र माभूत् । इष्टकास्विति किम् । वर्चस्वानुपधानो मन्त्र एषां । इत्यत्र माभूत् ।

## अश्विमानण् ।१२६।

उपधानमन्त्रसमानाधिकरणात् प्रथमासमर्थात् अश्विमान्प्रातिपदिकात्षष्ठ्यर्थे ऽण् स्यात्, इष्टकास्वभिधेयासु मतोश्च लुक् स्यात्, छ० वि० । पूर्वस्य यतोऽपवादः । अश्विमान् मन्त्र उपधान आसामिष्टकानामाश्विनीः । आश्विनीरुपदधाति ।

## वयस्यासु मूर्ध्नो मतुप् ॥१२७॥

उपधानमन्त्रसमानाधिकरणात् प्रथमासमर्थात् मत्वन्तात् मूर्द्धन्शब्दात् षष्ठ्यर्थे मतुप् स्यात्, यतोऽपवादः । इष्टिकास्वभिधेयासु मतोश्च लुक्, छन्दसि विषये । मूर्द्धन्शब्दो विद्यतेऽस्मिन्मन्त्रे मूर्द्धन्वान् मन्त्र उपधान आसामिष्टकानां ताः मूर्द्धन्वन्तीरुपदधाति । 'अनोनुडिति' नुट् । वयस्यास्विति किम् । यत्र मूर्धशब्द एव केवलं न वयःशब्दस्तत्र माभूत् ।

## मत्वर्थे मासतन्वोः ।१२८।

मत्वर्थे यत् स्यात्, मासतन्वोरभिधेययोः, छ० वि० । मत्वर्थीयानामपवादः । नभांसि विद्यन्तेऽस्मिन्मासेऽनन्तराणीति वा नभस्यो मासः । ओजो विद्यतेऽस्यां ओजस्या तनूः । ( मासतन्वोरनन्तरार्थे वेति वक्तव्यम् ) मध्वस्मिन्नस्ति, अनन्तरमिति वा मधव्यः । माधवो वा । ( लुगकारेकाररेफाश्च वक्तव्याः ) मध्वस्मिन्निति मधुः, मासः । इषो मासः । शुचिः, शुक्रः१ ।

## मधोर्ञ च ।१२९।

मधुशब्दान्मत्वर्थे ञः स्याच्चाद्यत्, छ० वि० । मधु विद्यतेऽस्मिन्माधवः । मधव्यः । मधुः । तन्वां तु माधवा मधव्या ।

## ओजसोऽहनि यत्खौ ।१३०।

ओजस्प्रातिपदिकान्मत्वर्थे यत्खौ स्तः, अहन्यभिधेये, छन्दसि विषये । ओजो विद्यतेऽस्मिन्नोजस्यम् । ओजसीनं वाऽहः ।

## वेशोयशआदेर्भगाद्यल् ।१३१।

वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे यल् स्यात्, छन्दसि विषये । वेशो भगो विद्यते यस्य वेशोभग्यः । यशोभग्यः । वेश इति बलमुच्यते ।

---

(१) अयस्मयादित्वाज्जशुत्वं न ।

(२) ननु यद्ग्रहणं व्यर्थं खश्चेत्येवास्त्विति चेन्मैवम् । खश्चेत्युच्यमाने ऽनन्तरसूत्रविहितस्य अमात्रस्य समुच्चयो विज्ञायेत तस्माद्यद्ग्रहणम् ।

## ख च ।१३२।

वेशोयशआदेर्भगान्तात् प्रातिपदिकान्मत्वर्थे खः स्यात्, छ० वि० वेशोभगीनः । यशोभगीनः । योगविभाग उत्तरार्थः ।

## पूर्वैः कृतमिनयौ च ।१३३।

तृतीयासमर्थात् पूर्वप्रातिपदिकात् कृतमित्यर्थे इनयौस्तः । छ० वि० । ख च । पूर्वैःकृताः पूर्विणाः, पूर्व्याः । पथिभिः पूर्वीणैः ।

## अद्भिः संस्कृतम् ।१३४।

तृतीयासमर्थादप्प्रातिपदिकात् संस्कृते यत् स्यात्, छन्दसि विषये । अद्भिः संस्कृतमप्यम् ।

## सहस्रेण संमितौ घः ।।१३५।।

तृतीयासमर्थात् सहस्रप्रातिपदिकात् संमितावर्थे घः स्यात्, छन्दसि विषये । सहस्रेण संमितस्तुल्यः सहस्रियः । अयमग्निः सहस्रियः ।

## मतौ च ।१३६।

सहस्र प्रातिपदिकान्मत्वर्थे घः स्यात्, छन्दसि विषये । सहस्रं विद्यतेऽस्य सहस्रियः ।

## सोममर्हति यः ।१३७।

द्वितीयासमर्थात् सोमप्रातिपदिकादर्हत्यर्थे यः स्याच्छन्दसि विषये । सोम्या ब्राह्मणाः । सोममर्हन्तीति ।

## मये च ।१३८।

सोमप्रातिपदिकान्मयडर्थे यः स्यात्, छन्दसि विषये । सोम्यं मधु पिबन्ति । सोममयमित्यर्थः ।

## मधोः ।१३९।

मधुप्रातिपदिकान्मयेऽर्थे यत् स्यात्, छन्दसि विषये । मधव्यान् स्तोकान् । मधुमयानित्यर्थः ।

## वसोः समूहे च ।१४०।

वसुप्रातिपदिकात् समूहेऽर्थे चान्मयेऽर्थे यत्, स्याच्छन्दसि विषये। वसव्यः समूहः । वसुमयो वा । ( अक्षरसमूहे छन्दस उपसंख्यानम् ) ओश्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । यजेति द्व्यक्षरम्, ये यजामहे इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरश्छन्दस्यः । स्वार्थे यत् । ( अग्निरीशे वसव्यस्येत्युपसंख्यानम् ) ( छन्दसि बहुभिर्वसव्यैरुपसंख्यानम ) हस्तौ पृणस्व बहुभिर्वसव्यैः[१] ।

## नक्षत्राद् घः ।१४१।

नक्षत्रप्रातिपदिकात स्वार्थे घः स्यात्, छ० वि० । नक्षत्रियेभ्यः स्वाहा । नक्षत्रेभ्य इत्यर्थः ।

## सर्वदेवात्तातिल् ।१४२।

सर्वदेवाभ्यां प्रातिपदिकाभ्यां तातिल् स्यात्, छन्दसि विषये। सर्वतातिः । देवतातिः ।

---

(१) अग्निरीश इति, छन्दसि बहुभिरिति चैते उपसंख्याने न कर्तव्ये, कुतः, स्वार्थविज्ञा॰तात् सिद्धमिति भाष्यात्, वसोरिति योगविभागः कर्तव्यस्तेन स्वार्थे भविष्यतीत्यर्थः । वसव एव वसव्याः पान्तु ।

## शिवशमरिष्टस्य करे ।१४३।

षष्ठीसमर्थेभ्यः शिवादिभ्यः करेऽर्थे तातिल् स्यात्, छन्दसि विषये । शिवं करोतीति शिवतातिः । शंतातिः । अरिष्टतातिः ।

## भावे च ।१४४।

षष्ठीसमर्थेभ्यः शिवशमरिष्टेभ्यो भावेऽर्थे तातिल् स्यात्, छन्दसि विषये । शिवस्य भावः शिवतातिः । शंतातिः । अरिष्टतातिः ।

## इति चतुर्थाध्यायस्य चतुर्थः पादः ।

समाप्तश्चायमध्यायः ।

---

# बृहत्तर भारत

लेखक—श्रीयुत चन्द्रगुप्त वेदालङ्कार।

भारतीय संस्कृति का विदेशों में प्रचार अर्थात् चीन, जापान, जावा, कम्बोडिया, तुर्किस्तान, अफ्रीका और अमेरिका प्रभति देशों में हमारे देश के धर्म और संस्कृति का प्रचार किस प्रकार हुआ, किस प्रकार भारतवर्ष के धर्म-प्रचारक विदेशों में जाकर प्रचार करते रहे, उन्होंने वहाँ जाकर अपने धर्म को किस प्रकार फैलाया, किस प्रकार वेद, दर्शन, रामायण, महाभारत और गीता का प्रचार किया और किस तरह भारतीय वर्णमाला, व्याकरण और साहित्य को उनकी भाषा के अन्दर लिखकर उनके हृदयों पर भारतीयता की गहरी छाप डाली यह सब इस पुस्तक में पाठकों को मिलेगा। इसे पढ़ कर प्रत्येक भारतीय का हृदय अपने पूर्व पुरुषों की उज्वल कृति की याद से प्रफुल्लित हो उठेगा और अपनी प्राचीन सभ्यता के गौरव की याद से गद्‌गद् हो जायगा। पुस्तक बढ़िया ऐन्टिक कागज़ पर छपी है। दर्जनों चित्र।

मूल्य सजिल्द ७), अजिल्द ६)।

# अपने देश की कथा

लेखक—श्री प्रोफेसर सत्यकेतु जी विद्यालंकार, डी० लिट् (पेरिस)।

इस पुस्तक में भारतवर्ष का संक्षिप्त इतिहास भारतीय दृष्टिकोण से दिया गया है। भारतीय संस्कृति प्रेमी विद्यालयों में इस पुस्तक को पाठ्यक्रम में रखा जाना चाहिये। इसमें वैदिक काल से लेकर वर्तमान काल तक का इतिहास संक्षेप से तथा सरल भाषा में दिया गया है। मूल्य १।≈)।

---

मिलने का पता—[प्रकाशन मन्दिर] गुरुकुल कांगड़ी विश्वविद्यालय, हरिद्वार।

# स्वाध्याय के लिए चुनी हुई पुस्तकें

| पुस्तक | लेखक | मूल्य |
|---|---|---|
| वैदिक विनय, तीसरा भाग | श्री अभय | १॥) |
| वैदिक ब्रह्मचर्य-गीत | " | २) |
| ब्राह्मण की गौ | " | ॥) |
| वैदिक स्वप्न विज्ञान | श्री भगवद्दत्त | २) |
| वेदगीताञ्जली ( वैदिक गीतियाँ ) | श्री वेदव्रत | २) |
| सोम-सरोवर, सजिल्द, अजिल्द | श्री चमूपति | २), १॥) |
| वरुण की नौका ( दो भाग ) | श्री प्रियव्रत | ६) |
| अथर्ववेदीय मन्त्र-विद्या | श्री प्रियरत्न | १॥) |
| सन्ध्या सुमन | श्री नित्यानन्द | १) |
| स्वामी श्रद्धानन्द जी के उपदेश ( तीन भाग ) | श्री लब्भूराम नय्यड़ | ३।) |
| आत्ममीमांसा | श्री नन्दलाल | २) |
| प्रार्थनावली ( प्रेरणा देने वाली प्रार्थनाएं और गीतियां ) | श्री वागीश | ।) |
| भारत वर्ष का इतिहास [ तीन भाग ] | श्री रामदेव | ७) |
| बृहत्तर भारत ( सचित्र) सजिल्द, अजिल्द | श्री चन्द्रगुप्त | ७), ६) |
| अपने देश की कथा ( दूसरा संस्करण ) -बच्चों के लिए | श्री सत्यकेतु | १।=) |
| ऋषिदयानन्द का पत्र व्यवहार | श्री श्रद्धानन्द | ॥) |
| हैदराबाद आर्य सत्याग्रह के अनुभव | श्री क्षितीश | ।) |
| बालनीति कथामाला १) | रघुवंश, संशोधित ( तीन सर्ग ) | ।) |
| नीतिशतक ( संशोधित ) ≠) | साहित्य-दर्पण, संशोधित | २) |
| संस्कृत प्रवेशिका, प्रथम भाग, द्वितीय भाग | | ॥=), ॥=) |
| साहित्य-सुधासंग्रह, प्रथम, द्वितीय, और तृतीय बिन्दु | | १), १), १) |
| विज्ञान प्रवेशिका (दो भाग ) —मिडिल स्कूलों के लिए | श्री यज्ञदत्त | २॥) |
| गुणात्मक विश्लेषण ( बी. एस. सी. के लिए ) | श्री रामशरण दास | २) |
| भाषा-प्रवेशिका ( वर्धायोजनानुसार ) | श्री ओमप्रकाश | ॥) |
| आर्यभाषा पाठावली ( आठवां संस्करण ) | श्री भवानीप्रसाद | १॥) |
| आहार ( भोजन सम्बन्धी पूर्ण जानकारी के लिए ) | श्री रामरक्षपाठक | ५) |
| जलचिकित्सा ( पानी से ही रोगों को दूर करने के उपाय ) | श्री देवराज | ३॥) |
| लहसुनः प्याज ( दूसरा परिवर्द्धित संस्करण ) | श्री रामेश बेदी | २॥) |
| तुलसी ( दूसरा परिवर्द्धित संस्करण ) | " | २) |
| सोंठ ( तीसरा परिवर्द्धित संस्करण ) | " | १॥) |
| देहाती इलाज ( दूसरा परिवर्द्धित संस्करण ) | " | १) |

पता—प्रकाशन मन्दिर, गुरुकुल कांगड़ी, हरिद्वार।